# महाभारत - शाल्य पर्व

# ॥ महाभारत शाल्यपर्व ॥

## शल्यवधपर्व

### अध्याय ००१

जनमेजय उवाच ॥

एवं निपातिते कर्णे समरे सव्यसाचिना ।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज ॥ ००१ ॥

उदीर्यमाणं च बलं दृष्ट्वा राजा सुयोधनः ।
पाण्डवैः प्राप्तकालं च किं प्रापद्यत कौरवः ॥ ००२ ॥

एतदिच्छाम्यहं श्रोतुं तदाचक्ष्व द्विजोत्तम ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ ००३ ॥

वैशंपायन उवाच ॥

ततः कर्णे हते राजन्धार्तराष्ट्रः सुयोधनः ।
भृशं शोकार्णवे मग्नो निराशः सर्वतोऽभवत् ॥ ००४ ॥

हा कर्ण हा कर्ण इति शोचमानः पुनः पुनः ।

कृच्छ्रात्स्वशिबिरं प्रायाद्धतशेषैर्नृपैः सह ॥ ००५ ॥

स समाश्वास्यमानोऽपि हेतुभिः शास्त्रनिश्चितैः ।
राजभिर्नालभच्छर्म सूतपुत्रवधं स्मरन् ॥ ००६ ॥

स दैवं बलवन्मत्वा भवितव्यं च पार्थिवः ।
सङ्ग्रामे निश्चयं कृत्वा पुनर्युद्धाय निर्ययौ ॥ ००७ ॥

शल्यं सेनापतिं कृत्वा विधिवद्राजपुङ्गवः ।
रणाय निर्ययौ राजा हतशेषैर्नृपैः सह ॥ ००८ ॥

ततः सुतुमुलं युद्धं कुरुपाण्डवसेनयोः ।
बभूव भरतश्रेष्ठ देवासुररणोपमम् ॥ ००९ ॥

ततः शल्यो महाराज कृत्वा कदनमाहवे ।
पाण्डुसैन्यस्य मध्याह्ने धर्मराजेन पातितः ॥ ०१० ॥

ततो दुर्योधनो राजा हतबन्धू रणाजिरात् ।
अपसृत्य ह्रदं घोरं विवेश रिपुजाद्भयात् ॥ ०११ ॥

अथापराह्णे तस्याह्नः परिवार्य महारथैः ।
ह्रदादाहूय योगेन भीमसेनेन पातितः ॥ ०१२ ॥

तस्मिन्हते महेष्वासे हतशिष्टास्त्रयो रथाः ।
संरभान्निशि राजेन्द्र जघ्नुः पाञ्चालसैनिकान् ॥ ०१३ ॥

ततः पूर्वाह्णसमये शिबिरादेत्य सञ्जयः ।
प्रविवेश पुरीं दीनो दुःखशोकसमन्वितः ॥ ०१४ ॥

प्रविश्य च पुरं तूर्णं भुजावुच्छ्रित्य दुःखितः ।
वेपमानस्ततो राज्ञः प्रविवेश निवेशनम् ॥ ०१५ ॥

रुरोद च नरव्याघ्र हा राजन्निति दुःखितः ।
अहो बत विविग्नाः स्म निधनेन महात्मनः ॥ ०१६ ॥

अहो सुबलवान्कालो गतिश्च परमा तथा ।
शक्रतुल्यबलाः सर्वे यत्रावध्यन्त पार्थिवाः ॥ ०१७ ॥

दृष्ट्वैव च पुरो राजञ्जनः सर्वः स सञ्जयम् ।
प्ररुरोद भृशोद्विग्नो हा राजन्निति सस्वरम् ॥ ०१८ ॥

आकुमारं नरव्याघ्र तत्पुरं वै समन्ततः ।
आर्तनादं महच्चक्रे श्रुत्वा विनिहतं नृपम् ॥ ०१९ ॥

धावतश्चाप्यपश्यच्च तत्र त्रीन्पुरुषर्षभान् ।
नष्टचित्तानिवोन्मत्ताञ्शोकेन भृशपीडितान् ॥ ०२० ॥

तथा स विह्वलः सूतः प्रविश्य नृपतिक्षयम् ।
ददर्श नृपतिश्रेष्ठं प्रज्ञाचक्षुषमीश्वरम् ॥ ०२१ ॥

दृष्ट्वा चासीनमनघं समन्तात्परिवारितम् ।
स्नुषाभिर्भरतश्रेष्ठ गान्धार्या विदुरेण च ॥ ०२२ ॥

तथान्यैश्च सुहृद्भिश्च ज्ञातिभिश्च हितैषिभिः ।
तमेव चार्थं ध्यायन्तं कर्णस्य निधनं प्रति ॥ ०२३ ॥

रुदन्नेवाब्रवीद्वाक्यं राजानं जनमेजय ।
नातिहृष्टमनाः सूतो बाष्पसंदिग्धया गिरा ॥ ०२४ ॥

सञ्जयोऽहं नरव्याघ्र नमस्ते भरतर्षभ ।
मद्राधिपो हतः शल्यः शकुनिः सौबलस्तथा ॥ ०२५ ॥

उलूकः पुरुषव्याघ्र कैतव्यो दृढविक्रमः ॥ ०२५ ॥

संशप्तका हताः सर्वे काम्बोजाश्च शकैः सह ।
म्लेच्छाश्च पार्वतीयाश्च यवनाश्च निपातिताः ॥ ०२६ ॥

प्राच्या हता महाराज दाक्षिणात्याश्च सर्वशः ।
उदीच्या निहताः सर्वे प्रतीच्याश्च नराधिप ॥ ०२७ ॥

राजानो राजपुत्राश्च सर्वतो निहता नृप ॥ ०२७ ॥

दुर्योधनो हतो राजन्यथोक्तं पाण्डवेन च ।
भग्नसक्थो महाराज शेते पांसुषु रूषितः ॥ ०२८ ॥

धृष्टद्युम्नो हतो राजञ्शिखण्डी चापराजितः ।
उत्तमौजा युधामन्युस्तथा राजन्प्रभद्रकाः ॥ ०२९ ॥

पाञ्चालाश्च नरव्याघ्राश्चेदयश्च निषूदिताः ।
तव पुत्रा हताः सर्वे द्रौपदेयाश्च भारत ॥ ०३० ॥

कर्णपुत्रो हतः शूरो वृषसेनो महाबलः ॥ ०३० ॥

नरा विनिहताः सर्वे गजाश्च विनिपातिताः ।
रथिनश्च नरव्याघ्र हयाश्च निहता युधि ॥ ०३१ ॥

किञ्चिच्छेषं च शिबिरं तावकानां कृतं विभो ।
पाण्डवानां च शूराणां समासाद्य परस्परम् ॥ ०३२ ॥

प्रायः स्त्रीशेषमभवज्जगत्कालेन मोहितम् ।
सप्त पाण्डवतः शेषा धार्तराष्ट्रास्तथा त्रयः ॥ ०३३ ॥

ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः ।

कृपश्च कृतवर्मा च द्रौणिश्च जयतां वरः ॥ ०३४ ॥

तवाप्येते महाराज रथिनो नृपसत्तम ।
अक्षौहिणीनां सर्वासां समेतानां जनेश्वर ॥ ०३५ ॥

एते शेषा महाराज सर्वेऽन्ये निधनं गताः ॥ ०३५ ॥

कालेन निहतं सर्वं जगद्वै भरतर्षभ ।
दुर्योधनं वै पुरतः कृत्वा वैरस्य भारत ॥ ०३६ ॥

एतच्छ्रुत्वा वचः क्रूरं धृतराष्ट्रो जनेश्वरः ।
निपपात महाराज गतसत्त्वो महीतले ॥ ०३७ ॥

तस्मिन्निपतिते भूमौ विदुरोऽपि महायशाः ।
निपपात महाराज राजव्यसनकर्शितः ॥ ०३८ ॥

गान्धारी च नृपश्रेष्ठ सर्वाश्च कुरुयोषितः ।
पतिताः सहसा भूमौ श्रुत्वा क्रूरं वचश्च ताः ॥ ०३९ ॥

निःसञ्ज्ञं पतितं भूमौ तदासीद्राजमण्डलम् ।
प्रलापयुक्ता महती कथा न्यस्ता पटे यथा ॥ ०४० ॥

कृच्छ्रेण तु ततो राजा धृतराष्ट्रो महीपतिः ।
शनैरलभत प्राणान्पुत्रव्यसनकर्शितः ॥ ०४१ ॥

लब्ध्वा तु स नृपः सञ्ज्ञां वेपमानः सुदुःखितः ।
उदीक्ष्य च दिशः सर्वाः क्षत्तारं वाक्यमब्रवीत् ॥ ०४२ ॥

विद्वन्क्षत्तर्महाप्राज्ञ त्वं गतिर्भरतर्षभ ।
ममानाथस्य सुभृशं पुत्रैर्हीनस्य सर्वशः ॥ ०४३ ॥

एवमुक्त्वा ततो भूयो विसञ्ज्ञो निपपात ह ॥ ०४३ ॥

तं तथा पतितं दृष्ट्वा बान्धवा येऽस्य केचन ।
शीतैस्तु सिषिचुस्तोयैर्विव्यजुर्व्यजनैरपि ॥ ०४४ ॥

स तु दीर्घेण कालेन प्रत्याश्वस्तो महीपतिः ।
तूष्णीं दध्यौ महीपालः पुत्रव्यसनकर्शितः ॥ ०४५ ॥

निःश्वसञ्जिह्मग इव कुम्भक्षिप्तो विशां पते ॥ ०४५ ॥

सञ्जयोऽप्यरुदत्तत्र दृष्ट्वा राजानमातुरम् ।
तथा सर्वाः स्त्रियश्चैव गान्धारी च यशस्विनी ॥ ०४६ ॥

ततो दीर्घेण कालेन विदुरं वाक्यमब्रवीत् ।
धृतराष्ट्रो नरव्याघ्रो मुह्यमानो मुहुर्मुहुः ॥ ०४७ ॥

गच्छन्तु योषितः सर्वा गान्धारी च यशस्विनी ।
तथेमे सुहृदः सर्वे भ्रश्यते मे मनो भृशम् ॥ ०४८ ॥

एवमुक्तस्ततः क्षत्ता ताः स्त्रियो भरतर्षभ ।
विसर्जयामास शनैर्वेपमानः पुनः पुनः ॥ ०४९ ॥

निश्चक्रमुस्ततः सर्वास्ताः स्त्रियो भरतर्षभ ।
सुहृदश्च ततः सर्वे दृष्ट्वा राजानमातुरम् ॥ ०५० ॥

ततो नरपतिं तत्र लब्धसञ्ज्ञं परंतप ।
अवेक्ष्य सञ्जयो दीनो रोदमानं भृशातुरम् ॥ ०५१ ॥

प्राञ्जलिर्निःश्वसन्तं च तं नरेन्द्रं मुहुर्मुहुः ।
समाश्वासयत क्षत्ता वचसा मधुरेण ह ॥ ०५२ ॥

# अध्याय ००२

वैशंपायन उवाच ॥

विसृष्टास्वथ नारीषु धृतराष्ट्रोऽम्बिकासुतः ।
विललाप महाराज दुःखाद्दुःखतरं गतः ॥ ००१ ॥

सधूममिव निःश्वस्य करौ धुन्वन्पुनः पुनः ।
विचिन्त्य च महाराज ततो वचनमब्रवीत् ॥ ००२ ॥

अहो बत महद्दुःखं यदहं पाण्डवान्रणे ।
क्षेमिणश्चाव्ययांश्चैव त्वत्तः सूत शृणोमि वै ॥ ००३ ॥

वज्रसारमयं नूनं हृदयं सुदृढं मम ।
यच्छ्रुत्वा निहतान्पुत्रान्दीर्यते न सहस्रधा ॥ ००४ ॥

चिन्तयित्वा वचस्तेषां बालक्रीडां च सञ्जय ।
अद्य श्रुत्वा हतान्पुत्रान्भृशं मे दीर्यते मनः ॥ ००५ ॥

अन्धत्वाद्यदि तेषां तु न मे रूपनिदर्शनम् ।
पुत्रस्नेहकृता प्रीतिर्नित्यमेतेषु धारिता ॥ ००६ ॥

बालभावमतिक्रान्तान्यौवनस्थांश्च तानहम् ।
मध्यप्राप्तांस्तथा श्रुत्वा हृष्ट आसं तथानघ ॥ ००७ ॥

तानद्य निहताञ्श्रुत्वा हृतैश्वर्यान्हृतौजसः ।
न लभे वै क्वचिच्छान्तिं पुत्राधिभिरभिप्लुतः ॥ ००८ ॥

एह्येहि पुत्र राजेन्द्र ममानाथस्य सांप्रतम् ।
त्वया हीनो महाबाहो कां नु यास्याम्यहं गतिम्  ॥ ००९  ॥

गतिर्भूत्वा महाराज ज्ञातीनां सुहृदां तथा ।
अन्धं वृद्धं च मां वीर विहाय क्व नु गच्छसि  ॥ ०१०  ॥

सा कृपा सा च ते प्रीतिः सा च राजन्सुमानिता ।
कथं विनिहतः पार्थैः संयुगेष्वपराजितः  ॥ ०११  ॥

कथं त्वं पृथिवीपालान्भुक्त्वा तात समागतान् ।
शेषे विनिहतो भूमौ प्राकृतः कुनृपो यथा  ॥ ०१२  ॥

को नु मामुत्थितं काल्ये तात तातेति वक्ष्यति ।
महाराजेति सततं लोकनाथेति चासकृत्  ॥ ०१३  ॥

परिष्वज्य च मां कण्ठे स्नेहेनाक्लिन्नलोचनः ।
अनुशाधीति कौरव्य तत्साधु वद मे वचः  ॥ ०१४  ॥

ननु नामाहमश्रौषं वचनं तव पुत्रक ।
भूयसी मम पृथ्वीयं यथा पार्थस्य नो तथा  ॥ ०१५  ॥

भगदत्तः कृपः शल्य आवन्त्योऽथ जयद्रथः ।
भूरिश्रवाः सोमदत्तो महाराजोऽथ बाह्लिकः  ॥ ०१६  ॥

अश्वत्थामा च भोजश्च मागधश्च महाबलः ।
बृहद्बलश्च काशीशः शकुनिश्चापि सौबलः  ॥ ०१७  ॥

म्लेच्छाश्च बहुसाहस्राः शकाश्च यवनैः सह ।
सुदक्षिणश्च काम्बोजस्त्रिगर्ताधिपतिस्तथा  ॥ ०१८  ॥

भीष्मः पितामहश्चैव भारद्वाजोऽथ गौतमः ।
श्रुतायुश्चाच्युतायुश्च शतायुश्चापि वीर्यवान्  ॥ ०१९  ॥

जलसंधोऽथार्श्यशृङ्गी राक्षसश्चाप्यलायुधः ।
अलंबुसो महाबाहुः सुबाहुश्च महारथः  ॥ ०२०  ॥

एते चान्ये च बहवो राजानो राजसत्तम ।
मदर्थमुद्यताः सर्वे प्राणांस्त्यक्त्वा रणे प्रभो  ॥ ०२१  ॥

येषां मध्ये स्थितो युद्धे भ्रातृभिः परिवारितः ।
योधयिष्याम्यहं पार्थान्पाञ्चालांश्चैव सर्वशः  ॥ ०२२  ॥

चेदींश्च नृपशार्दूल द्रौपदेयांश्च संयुगे ।
सात्यकिं कुन्तिभोजं च राक्षसं च घटोत्कचम्  ॥ ०२३  ॥

एकोऽप्येषां महाराज समर्थः संनिवारणे ।
समरे पाण्डवेयानां सङ्क्रुद्धो ह्यभिधावताम्  ॥ ०२४  ॥

किं पुनः सहिता वीराः कृतवैराश्च पाण्डवैः  ॥ ०२४  ॥

अथ वा सर्व एवैते पाण्डवस्यानुयायिभिः ।
योत्स्यन्ति सह राजेन्द्र हनिष्यन्ति च तान्मृधे  ॥ ०२५  ॥

कर्णस्त्वेको मया सार्धं निहनिष्यति पाण्डवान् ।
ततो नृपतयो वीराः स्थास्यन्ति मम शासने  ॥ ०२६  ॥

यश्च तेषां प्रणेता वै वासुदेवो महाबलः ।
न स संनह्यते राजन्निति मामब्रवीद्वचः  ॥ ०२७  ॥

तस्याहं वदतः सूत बहुशो मम संनिधौ ।
युक्तितो ह्यनुपश्यामि निहतान्पाण्डवान्मृधे  ॥ ०२८  ॥

तेषां मध्ये स्थिता यत्र हन्यन्ते मम पुत्रकाः ।
व्यायच्छमानाः समरे किमन्यद्भागधेयतः ॥ ०२९ ॥

भीष्मश्च निहतो यत्र लोकनाथः प्रतापवान् ।
शिखण्डिनं समासाद्य मृगेन्द्र इव जम्बुकम् ॥ ०३० ॥

द्रोणश्च ब्राह्मणो यत्र सर्वशस्त्रास्त्रपारगः ।
निहतः पाण्डवैः संख्ये किमन्यद्भागधेयतः ॥ ०३१ ॥

भूरिश्रवा हतो यत्र सोमदत्तश्च संयुगे ।
बाह्लीकश्च महाराज किमन्यद्भागधेयतः ॥ ०३२ ॥

सुदक्षिणो हतो यत्र जलसंधश्च कौरवः ।
श्रुतायुश्चाच्युतायुश्च किमन्यद्भागधेयतः ॥ ०३३ ॥

बृहद्बलो हतो यत्र मागधश्च महाबलः ।
आवन्त्यो निहतो यत्र त्रिगर्तश्च जनाधिपः ॥ ०३४ ॥

संशप्तकाश्च बहवः किमन्यद्भागधेयतः ॥ ०३४ ॥

अलंबुसस्तथा राजन्राक्षसश्चाप्यलायुधः ।
आर्श्यशृङ्गश्च निहतः किमन्यद्भागधेयतः ॥ ०३५ ॥

नारायणा हता यत्र गोपाला युद्धदुर्मदाः ।
म्लेच्छाश्च बहुसाहस्राः किमन्यद्भागधेयतः ॥ ०३६ ॥

शकुनिः सौबलो यत्र कैतव्यश्च महाबलः ।
निहतः सबलो वीरः किमन्यद्भागधेयतः ॥ ०३७ ॥

राजानो राजपुत्राश्च शूराः परिघबाहवः ।

निहता बहवो यत्र किमन्यद्भागधेयतः ॥ ०३८ ॥

नानादेशसमावृत्ताः क्षत्रिया यत्र सञ्जय ।
निहताः समरे सर्वे किमन्यद्भागधेयतः ॥ ०३९ ॥

पुत्राश्च मे विनिहताः पौत्राश्चैव महाबलाः ।
वयस्या भ्रातरश्चैव किमन्यद्भागधेयतः ॥ ०४० ॥

भागधेयसमायुक्तो ध्रुवमुत्पद्यते नरः ।
यश्च भाग्यसमायुक्तः स शुभं प्राप्नुयान्नरः ॥ ०४१ ॥

अहं वियुक्तः स्वैर्भाग्यैः पुत्रैश्चैवेह सञ्जय ।
कथमद्य भविष्यामि वृद्धः शत्रुवशं गतः ॥ ०४२ ॥

नान्यदत्र परं मन्ये वनवासादृते प्रभो ।
सोऽहं वनं गमिष्यामि निर्बन्धुर्ज्ञातिसङ्क्षये ॥ ०४३ ॥

न हि मेऽन्यद्भवेच्छ्रेयो वनाभ्युपगमादृते ।
इमामवस्थां प्राप्तस्य लूनपक्षस्य सञ्जय ॥ ०४४ ॥

दुर्योधनो हतो यत्र शल्यश्च निहतो युधि ।
दुःशासनो विशस्तश्च विकर्णश्च महाबलः ॥ ०४५ ॥

कथं हि भीमसेनस्य श्रोष्येऽहं शब्दमुत्तमम् ।
एकेन समरे येन हतं पुत्रशतं मम ॥ ०४६ ॥

असकृद्वदतस्तस्य दुर्योधनवधेन च ।
दुःखशोकाभिसंतप्तो न श्रोष्ये परुषा गिरः ॥ ०४७ ॥

एवं स शोकसंतप्तः पार्थिवो हतबान्धवः ।
मुहुर्मुहुर्मुह्यमानः पुत्राधिभिरभिप्लुतः ॥ ०४८ ॥

विलप्य सुचिरं कालं धृतराष्ट्रोऽम्बिकासुतः ।
दीर्घमुष्णं च निःश्वस्य चिन्तयित्वा पराभवम् ॥ ०४९ ॥

दुःखेन महता राजा संतप्तो भरतर्षभ ।
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ॥ ०५० ॥

भीष्मद्रोणौ हतौ श्रुत्वा सूतपुत्रं च पातितम् ।
सेनापतिं प्रणेतारं किमकुर्वत मामकाः ॥ ०५१ ॥

यं यं सेनाप्रणेतारं युधि कुर्वन्ति मामकाः ।
अचिरेणैव कालेन तं तं निघ्नन्ति पाण्डवाः ॥ ०५२ ॥

रणमूर्ध्नि हतो भीष्मः पश्यतां वः किरीटिना ।
एवमेव हतो द्रोणः सर्वेषामेव पश्यताम् ॥ ०५३ ॥

एवमेव हतः कर्णः सूतपुत्रः प्रतापवान् ।
स राजकानां सर्वेषां पश्यतां वः किरीटिना ॥ ०५४ ॥

पूर्वमेवाहमुक्तो वै विदुरेण महात्मना ।
दुर्योधनापराधेन प्रजेयं विनशिष्यति ॥ ०५५ ॥

केचिन्न सम्यक्पश्यन्ति मूढाः सम्यक्तथापरे ।
तदिदं मम मूढस्य तथाभूतं वचः स्म ह ॥ ०५६ ॥

यदब्रवीन्मे धर्मात्मा विदुरो दीर्घदर्शिवान् ।
तत्तथा समनुप्राप्तं वचनं सत्यवादिनः ॥ ०५७ ॥

दैवोपहतचित्तेन यन्मयापकृतं पुरा ।
अनयस्य फलं तस्य ब्रूहि गावल्गणे पुनः ॥ ०५८ ॥

को वा मुखमनीकानामासीत्कर्णे निपातिते ।
अर्जुनं वासुदेवं च को वा प्रत्युद्ययौ रथी ॥ ०५९ ॥

केऽरक्षन्दक्षिणं चक्रं मद्रराजस्य संयुगे ।
वामं च योद्धुकामस्य के वा वीरस्य पृष्ठतः ॥ ०६० ॥

कथं च वः समेतानां मद्रराजो महाबलः ।
निहतः पाण्डवैः संख्ये पुत्रो वा मम सञ्जय ॥ ०६१ ॥

ब्रूहि सर्वं यथातत्त्वं भरतानां महाक्षयम् ।
यथा च निहतः संख्ये पुत्रो दुर्योधनो मम ॥ ०६२ ॥

पाञ्चालाश्च यथा सर्वे निहताः सपदानुगाः ।
धृष्टद्युम्नः शिखण्डी च द्रौपद्याः पञ्च चात्मजाः ॥ ०६३ ॥

पाण्डवाश्च यथा मुक्तास्तथोभौ सात्वतौ युधि ।
कृपश्च कृतवर्मा च भारद्वाजस्य चात्मजः ॥ ०६४ ॥

यद्यथा यादृशं चैव युद्धं वृत्तं च सांप्रतम् ।
अखिलं श्रोतुमिच्छामि कुशलो ह्यसि सञ्जय ॥ ०६५ ॥

---

# अध्याय ००३

सञ्जय उवाच ॥

शृणु राजन्नवहितो यथा वृत्तो महान्क्षयः ।
कुरूणां पाण्डवानां च समासाद्य परस्परम् ॥ ००१ ॥

निहते सूतपुत्रे तु पाण्डवेन महात्मना ।
विद्रुतेषु च सैन्येषु समानीतेषु चासकृत् ॥ ००२ ॥

विमुखे तव पुत्रे तु शोकोपहतचेतसि ।
भृशोद्विग्नेषु सैन्येषु दृष्ट्वा पार्थस्य विक्रमम् ॥ ००३ ॥

ध्यायमानेषु सैन्येषु दुःखं प्राप्तेषु भारत ।
बलानां मथ्यमानानां श्रुत्वा निनदमुत्तमम् ॥ ००४ ॥

अभिज्ञानं नरेन्द्राणां विकृतं प्रेक्ष्य संयुगे ।
पतितान्रथनीडांश्च रथांश्चापि महात्मनाम् ॥ ००५ ॥

रणे विनिहतान्नागान्दृष्ट्वा पत्तींश्च मारिष ।
आयोधनं चातिघोरं रुद्रस्याक्रीडसंनिभम् ॥ ००६ ॥

अप्रख्यातिं गतानां तु राज्ञां शतसहस्रशः ।
कृपाविष्टः कृपो राजन्वयःशीलसमन्वितः ॥ ००७ ॥

अब्रवीत्तत्र तेजस्वी सोऽभिसृत्य जनाधिपम् ।
दुर्योधनं मन्युवशाद्वचनं वचनक्षमः ॥ ००८ ॥

दुर्योधन निबोधेदं यत्त्वा वक्ष्यामि कौरव ।
श्रुत्वा कुरु महाराज यदि ते रोचतेऽनघ ॥ ००९ ॥

न युद्धधर्माच्छ्रेयान्वै पन्था राजेन्द्र विद्यते ।
यं समाश्रित्य युध्यन्ते क्षत्रियाः क्षत्रियर्षभ ॥ ०१० ॥

पुत्रो भ्राता पिता चैव स्वस्रेयो मातुलस्तथा ।
संबन्धिबान्धवाश्चैव योध्या वै क्षत्रजीविना ॥ ०११ ॥

वधे चैव परो धर्मस्तथाधर्मः पलायने ।

ते स्म घोरां समापन्ना जीविकां जीवितार्थिनः ॥ ०१२ ॥

तत्र त्वां प्रतिवक्ष्यामि किञ्चिदेव हितं वचः ।
हते भीष्मे च द्रोणे च कर्णे चैव महारथे ॥ ०१३ ॥

जयद्रथे च निहते तव भ्रातृषु चानघ ।
लक्ष्मणे तव पुत्रे च किं शेषं पर्युपास्महे ॥ ०१४ ॥

येषु भारं समासज्य राज्ये मतिमकुर्महि ।
ते संत्यज्य तनूर्याताः शूरा ब्रह्मविदां गतिम् ॥ ०१५ ॥

वयं त्विह विनाभूता गुणवद्भिर्महारथैः ।
कृपणं वर्तयिष्याम पातयित्वा नृपान्बहून् ॥ ०१६ ॥

सर्वैरपि च जीवद्भिर्बीभत्सुरपराजितः ।
कृष्णनेत्रो महाबाहुर्देवैरपि दुरासदः ॥ ०१७ ॥

इन्द्रकार्मुकवज्राभमिन्द्रकेतुमिवोच्छ्रितम् ।
वानरं केतुमासाद्य सञ्चचाल महाचमूः ॥ ०१८ ॥

सिंहनादेन भीमस्य पाञ्चजन्यस्वनेन च ।
गाण्डीवस्य च निर्घोषात्संहृष्यन्ति मनांसि नः ॥ ०१९ ॥

चरन्तीव महाविद्युन्मुष्णन्ति नयनप्रभाम् ।
अलातमिव चाविद्धं गाण्डीवं समदृश्यत ॥ ०२० ॥

जाम्बूनदविचित्रं च धूयमानं महद्धनुः ।
दृश्यते दिक्षु सर्वासु विद्युदभ्रघनेष्विव ॥ ०२१ ॥

उह्यमानश्च कृष्णेन वायुनेव बलाहकः ।
तावकं तद्बलं राजन्नर्जुनोऽस्त्रविदां वरः ॥ ०२२ ॥

गहनं शिशिरे कक्षं ददाहाग्निरिवोत्थितः ॥ ०२२ ॥

गाहमानमनीकानि महेन्द्रसदृशप्रभम् ।
धनञ्जयमपश्याम चतुर्दन्तमिव द्विपम् ॥ ०२३ ॥

विक्षोभयन्तं सेनां ते त्रासयन्तं च पार्थिवान् ।
धनञ्जयमपश्याम नलिनीमिव कुञ्जरम् ॥ ०२४ ॥

त्रासयन्तं तथा योधान्धनुर्घोषेण पाण्डवम् ।
भूय एनमपश्याम सिंहं मृगगणा इव ॥ ०२५ ॥

सर्वलोकमहेष्वासौ वृषभौ सर्वधन्विनाम् ।
आमुक्तकवचौ कृष्णौ लोकमध्ये विरेजतुः ॥ ०२६ ॥

अद्य सप्तदशाहानि वर्तमानस्य भारत ।
सङ्ग्रामस्यातिघोरस्य वध्यतां चाभितो युधि ॥ ०२७ ॥

वायुनेव विधूतानि तवानीकानि सर्वशः ।
शरदम्भोदजालानि व्यशीर्यन्त समन्ततः ॥ ०२८ ॥

तां नावमिव पर्यस्तां भ्रान्तवातां महार्णवे ।
तव सेनां महाराज सव्यसाची व्यकम्पयत् ॥ ०२९ ॥

क्व नु ते सूतपुत्रोऽभूत्क्व नु द्रोणः सहानुगः ।
अहं क्व च क्व चात्मा ते हार्दिक्यश्च तथा क्व नु ॥ ०३० ॥

दुःशासनश्च भ्राता ते भ्रातृभिः सहितः क्व नु ॥ ०३० ॥

बाणगोचरसंप्राप्तं प्रेक्ष्य चैव जयद्रथम् ।
संबन्धिनस्ते भ्रातॄंश्च सहायान्मातुलांस्तथा ॥ ०३१ ॥

सर्वान्विक्रम्य मिषतो लोकांश्चाक्रम्य मूर्धनि ।
जयद्रथो हतो राजन्किं नु शेषमुपास्महे ॥ ०३२ ॥

को वेह स पुमानस्ति यो विजेष्यति पाण्डवम् ।
तस्य चास्त्राणि दिव्यानि विविधानि महात्मनः ॥ ०३३ ॥

गाण्डीवस्य च निर्घोषो वीर्याणि हरते हि नः ॥ ०३३ ॥

नष्टचन्द्रा यथा रात्रिः सेनेयं हतनायका ।
नागभग्नद्रुमा शुष्का नदीवाकुलतां गता ॥ ०३४ ॥

ध्वजिन्यां हतनेत्रायां यथेष्टं श्वेतवाहनः ।
चरिष्यति महाबाहुः कक्षेऽग्निरिव सञ्ज्वलन् ॥ ०३५ ॥

सात्यकेश्चैव यो वेगो भीमसेनस्य चोभयोः ।
दारयेत गिरीन्सर्वाञ्शोषयेत च सागरान् ॥ ०३६ ॥

उवाच वाक्यं यद्भीमः सभामध्ये विशां पते ।
कृतं तत्सकलं तेन भूयश्चैव करिष्यति ॥ ०३७ ॥

प्रमुखस्थे तदा कर्णे बलं पाण्डवरक्षितम् ।
दुरासदं तथा गुप्तं गूढं गाण्डीवधन्वना ॥ ०३८ ॥

युष्माभिस्तानि चीर्णानि यान्यसाधूनि साधुषु ।
अकारणकृतान्येव तेषां वः फलमागतम् ॥ ०३९ ॥

आत्मनोऽर्थे त्वया लोको यत्नतः सर्व आहृतः ।
स ते संशयितस्तात आत्मा च भरतर्षभ ॥ ०४० ॥

रक्ष दुर्योधनात्मानमात्मा सर्वस्य भाजनम् ।
भिन्ने हि भाजने तात दिशो गच्छति तद्गतम् ॥ ०४१ ॥

हीयमानेन वै संधिः पर्येष्टव्यः समेन च ।
विग्रहो वर्धमानेन नीतिरेषा बृहस्पतेः ॥ ०४२ ॥

ते वयं पाण्डुपुत्रेभ्यो हीनाः स्वबलशक्तितः ।
अत्र ते पाण्डवैः सार्धं संधिं मन्ये क्षमं प्रभो ॥ ०४३ ॥

न जानीते हि यः श्रेयः श्रेयसश्चावमन्यते ।
स क्षिप्रं भ्रश्यते राज्यान्न च श्रेयोऽनुविन्दति ॥ ०४४ ॥

प्रणिपत्य हि राजानं राज्यं यदि लभेमहि ।
श्रेयः स्यान्न तु मौढ्येन राजन्गन्तुं पराभवम् ॥ ०४५ ॥

वैचित्रवीर्यवचनात्कृपाशीलो युधिष्ठिरः ।
विनियुञ्जीत राज्ये त्वां गोविन्दवचनेन च ॥ ०४६ ॥

यद्ब्रूयाद्धि हृषीकेशो राजानमपराजितम् ।
अर्जुनं भीमसेनं च सर्वं कुर्युरसंशयम् ॥ ०४७ ॥

नातिक्रमिष्यते कृष्णो वचनं कौरवस्य ह ।
धृतराष्ट्रस्य मन्येऽहं नापि कृष्णस्य पाण्डवः ॥ ०४८ ॥

एतत्क्षममहं मन्ये तव पार्थैरविग्रहम् ।
न त्वा ब्रवीमि कार्पण्यान्न प्राणपरिरक्षणात् ॥ ०४९ ॥

पथ्यं राजन्ब्रवीमि त्वां तत्परासुः स्मरिष्यसि ॥ ०४९ ॥

इति वृद्धो विलप्यैतत्कृपः शारद्वतो वचः ।
दीर्घमुष्णं च निःश्वस्य शुशोच च मुमोह च ॥ ०५० ॥

# अध्याय ००४

सञ्जय उवाच ॥

एवमुक्तस्ततो राजा गौतमेन यशस्विना ।
निःश्वस्य दीर्घमुष्णं च तूष्णीमासीद्विशां पते ॥ ००१ ॥

ततो मुहूर्तं स ध्यात्वा धार्तराष्ट्रो महामनाः ।
कृपं शारद्वतं वाक्यमित्युवाच परंतपः ॥ ००२ ॥

यत्किञ्चित्सुहृदा वाच्यं तत्सर्वं श्रावितो ह्यहम् ।
कृतं च भवता सर्वं प्राणान्संत्यज्य युध्यता ॥ ००३ ॥

गाहमानमनीकानि युध्यमानं महारथैः ।
पाण्डवैरतितेजोभिर्लोकस्त्वामनुदृष्टवान् ॥ ००४ ॥

सुहृदा यदिदं वाच्यं भवता श्रावितो ह्यहम् ।
न मां प्रीणाति तत्सर्वं मुमूर्षोरिव भेषजम् ॥ ००५ ॥

हेतुकारणसंयुक्तं हितं वचनमुत्तमम् ।
उच्यमानं महाबाहो न मे विप्राग्र्य रोचते ॥ ००६ ॥

राज्याद्विनिकृतोऽस्माभिः कथं सोऽस्मासु विश्वसेत् ।
अक्षद्यूते च नृपतिर्जितोऽस्माभिर्महाधनः ॥ ००७ ॥

स कथं मम वाक्यानि श्रद्दध्याद्भूय एव तु ॥ ००७ ॥

तथा दौत्येन संप्राप्तः कृष्णः पार्थहिते रतः ।

प्रलब्धश्च हृषीकेशस्तच्च कर्म विरोधितम् ॥ ००८ ॥

स च मे वचनं ब्रह्मन्कथमेवाभिमंस्यते ॥ ००८ ॥

विललाप हि यत्कृष्णा सभामध्ये समेयुषी ।
न तन्मर्षयते कृष्णो न राज्यहरणं तथा ॥ ००९ ॥

एकप्राणावुभौ कृष्णावन्योन्यं प्रति संहतौ ।
पुरा यच्छ्रुतमेवासीदद्य पश्यामि तत्प्रभो ॥ ०१० ॥

स्वस्रीयं च हतं श्रुत्वा दुःखं स्वपिति केशवः ।
कृतागसो वयं तस्य स मदर्थं कथं क्षमेत् ॥ ०११ ॥

अभिमन्योर्विनाशेन न शर्म लभतेऽर्जुनः ।
स कथं मद्धिते यत्नं प्रकरिष्यति याचितः ॥ ०१२ ॥

मध्यमः पाण्डवस्तीक्ष्णो भीमसेनो महाबलः ।
प्रतिज्ञातं च तेनोग्रं स भज्येत न संनमेत् ॥ ०१३ ॥

उभौ तौ बद्धनिस्त्रिंशावुभौ चाबद्धकङ्कटौ ।
कृतवैरावुभौ वीरौ यमावपि यमोपमौ ॥ ०१४ ॥

धृष्टद्युम्नः शिखण्डी च कृतवैरौ मया सह ।
तौ कथं मद्धिते यत्नं प्रकुर्यातां द्विजोत्तम ॥ ०१५ ॥

दुःशासनेन यत्कृष्णा एकवस्त्रा रजस्वला ।
परिक्लिष्टा सभामध्ये सर्वलोकस्य पश्यतः ॥ ०१६ ॥

तथा विवसनां दीनां स्मरन्त्यद्यापि पाण्डवाः ।
न निवारयितुं शक्याः सङ्ग्रामात्ते परंतपाः ॥ ०१७ ॥

यदा च द्रौपदी कृष्णा मद्विनाशाय दुःखिता ।
उग्रं तेपे तपः कृष्णा भर्तृणामर्थसिद्धये ॥ ०१८ ॥

स्थण्डिले नित्यदा शेते यावद्वैरस्य यातना ॥ ०१८ ॥

निक्षिप्य मानं दर्पं च वासुदेवसहोदरा ।
कृष्णायाः प्रेष्यवद्भूत्वा शुश्रूषां कुरुते सदा ॥ ०१९ ॥

इति सर्वं समुन्नद्धं न निर्वाति कथञ्चन ।
अभिमन्योर्विनाशेन स संधेयः कथं मया ॥ ०२० ॥

कथं च नाम भुक्त्वेमां पृथिवीं सागराम्बराम् ।
पाण्डवानां प्रसादेन भुञ्जीयां राज्यमल्पकम् ॥ ०२१ ॥

उपर्युपरि राज्ञां वै ज्वलितो भास्करो यथा ।
युधिष्ठिरं कथं पश्चादनुयास्यामि दासवत् ॥ ०२२ ॥

कथं भुक्त्वा स्वयं भोगान्दत्त्वा दायांश्च पुष्कलान् ।
कृपणं वर्तयिष्यामि कृपणैः सह जीविकाम् ॥ ०२३ ॥

नाभ्यसूयामि ते वाक्यमुक्तं स्निग्धं हितं त्वया ।
न तु संधिमहं मन्ये प्राप्तकालं कथञ्चन ॥ ०२४ ॥

सुनीतमनुपश्यामि सुयुद्धेन परंतप ।
नायं क्लीबयितुं कालः संयोद्धुं काल एव नः ॥ ०२५ ॥

इष्टं मे बहुभिर्यज्ञैर्दत्ता विप्रेषु दक्षिणाः ।
प्राप्ताः क्रमश्रुता वेदाः शत्रूणां मूर्ध्नि च स्थितम् ॥ ०२६ ॥

भृत्या मे सुभृतास्तात दीनश्चाभ्युद्धृतो जनः ।
यातानि परराष्ट्राणि स्वराष्ट्रमनुपालितम् ॥ ०२७ ॥

भुक्ताश्च विविधा भोगास्त्रिवर्गः सेवितो मया ।
पितृणां गतमानृण्यं क्षत्रधर्मस्य चोभयोः ॥ ०२८ ॥

न ध्रुवं सुखमस्तीह कुतो राज्यं कुतो यशः ।
इह कीर्तिर्विधातव्या सा च युद्धेन नान्यथा ॥ ०२९ ॥

गृहे यत्क्षत्रियस्यापि निधनं तद्विगर्हितम् ।
अधर्मः सुमहानेष यच्छय्यामरणं गृहे ॥ ०३० ॥

अरण्ये यो विमुञ्चेत सङ्ग्रामे वा तनुं नरः ।
क्रतूनाहृत्य महतो महिमानं स गच्छति ॥ ०३१ ॥

कृपणं विलपन्नार्तो जरयाभिपरिप्लुतः ।
म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः ॥ ०३२ ॥

त्यक्त्वा तु विविधान्भोगान्प्राप्तानां परमां गतिम् ।
अपीदानीं सुयुद्धेन गच्छेयं सत्सलोकताम् ॥ ०३३ ॥

शूराणामार्यवृत्तानां सङ्ग्रामेष्वनिवर्तिनाम् ।
धीमतां सत्यसंधानां सर्वेषां क्रतुयाजिनाम् ॥ ०३४ ॥

शस्त्रावभृथमाप्तानां ध्रुवं वासस्त्रिविष्टपे ।
मुदा नूनं प्रपश्यन्ति शुभ्रा ह्यप्सरसां गणाः ॥ ०३५ ॥

पश्यन्ति नूनं पितरः पूजिताञ्शक्रसंसदि ।
अप्सरोभिः परिवृतान्मोदमानांस्त्रिविष्टपे ॥ ०३६ ॥

पन्थानममरैर्यातं शूरैश्चैवानिवर्तिभिः ।
अपि तैः सङ्गतं मार्गं वयमप्यारुहेमहि ॥ ०३७ ॥

पितामहेन वृद्धेन तथाचार्येण धीमता ।
जयद्रथेन कर्णेन तथा दुःशासनेन च ॥ ०३८ ॥

घटमाना मदर्थेऽस्मिन्हताः शूरा जनाधिपाः ।
शेरते लोहिताक्ताङ्गाः पृथिव्यां शरविक्षताः ॥ ०३९ ॥

उत्तमास्त्रविदः शूरा यथोक्तक्रतुयाजिनः ।
त्यक्त्वा प्राणान्यथान्यायमिन्द्रसद्मसु धिष्ठिताः ॥ ०४० ॥

तैस्त्वयं रचितः पन्था दुर्गमो हि पुनर्भवेत् ।
संपतद्भिर्महावेगैरितो याद्भिश्च सद्गतिम् ॥ ०४१ ॥

ये मदर्थे हताः शूरास्तेषां कृतमनुस्मरन् ।
ऋणं तत्प्रतिमुञ्चानो न राज्ये मन आदधे ॥ ०४२ ॥

पातयित्वा वयस्यांश्च भ्रातृनथ पितामहान् ।
जीवितं यदि रक्षेयं लोको मां गर्हयेद्ध्रुवम् ॥ ०४३ ॥

कीदृशं च भवेद्राज्यं मम हीनस्य बन्धुभिः ।
सखिभिश्च सुहृद्भिश्च प्रणिपत्य च पाण्डवम् ॥ ०४४ ॥

सोऽहमेतादृशं कृत्वा जगतोऽस्य पराभवम् ।
सुयुद्धेन ततः स्वर्गं प्राप्स्यामि न तदन्यथा ॥ ०४५ ॥

एवं दुर्योधनेनोक्तं सर्वे संपूज्य तद्वचः ।
साधु साध्विति राजानं क्षत्रियाः संबभाषिरे ॥ ०४६ ॥

पराजयमशोचन्तः कृतचित्ताश्च विक्रमे ।
सर्वे सुनिश्चिता योद्धुमुदग्रमनसोऽभवन् ॥ ०४७ ॥

ततो वाहान्समाश्वास्य सर्वे युद्धाभिनन्दिनः ।

ऊने द्वियोजने गत्वा प्रत्यतिष्ठन्त कौरवाः ॥ ०४८ ॥

आकाशे विद्रुमे पुण्ये प्रस्थे हिमवतः शुभे ।
अरुणां सरस्वतीं प्राप्य पपुः सस्नुश्च तज्जलम् ॥ ०४९ ॥

तव पुत्राः कृतोत्साहाः पर्यवर्तन्त ते ततः ।
पर्यवस्थाप्य चात्मानमन्योन्येन पुनस्तदा ॥ ०५० ॥

सर्वे राजन्न्यवर्तन्त क्षत्रियाः कालचोदिताः ॥ ०५० ॥

---

# अध्याय ००५

सञ्जय उवाच ॥

अथ हैमवते प्रस्थे स्थित्वा युद्धाभिनन्दिनः ।
सर्व एव महाराज योधास्तत्र समागताः ॥ ००१ ॥

शल्यश्च चित्रसेनश्च शकुनिश्च महारथः ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ ००२ ॥

सुषेणोऽरिष्टसेनश्च धृतसेनश्च वीर्यवान् ।
जयत्सेनश्च राजानस्ते रात्रिमुषितास्ततः ॥ ००३ ॥

रणे कर्णे हते वीरे त्रासिता जितकाशिभिः ।
नालभञ्शर्म ते पुत्रा हिमवन्तमृते गिरिम् ॥ ००४ ॥

तेऽब्रुवन्सहितास्तत्र राजानं सैन्यसंनिधौ ।

कृतयत्ना रणे राजन्संपूज्य विधिवत्तदा ॥ ००५ ॥

कृत्वा सेनाप्रणेतारं परांस्त्वं योद्धुमर्हसि ।
येनाभिगुप्ताः सङ्ग्रामे जयेमासुहृदो वयम् ॥ ००६ ॥

ततो दुर्योधनः स्थित्वा रथे रथवरोत्तमम् ।
सर्वयुद्धविभागज्ञमन्तकप्रतिमं युधि ॥ ००७ ॥

स्वङ्गं प्रच्छन्नशिरसं कम्बुग्रीवं प्रियंवदम् ।
व्याकोशपद्माभिमुखं व्याघ्रास्यं मेरुगौरवम् ॥ ००८ ॥

स्थाणोर्वृषस्य सदृशं स्कन्धनेत्रगतिस्वरैः ।
पुष्टश्लिष्टायतभुजं सुविस्तीर्णघनोरसम् ॥ ००९ ॥

जवे बले च सदृशमरुणानुजवातयोः ।
आदित्यस्य त्विषा तुल्यं बुद्ध्या चोशनसा समम् ॥ ०१० ॥

कान्तिरूपमुखैश्वर्यैस्त्रिभिश्चन्द्रमसोपमम् ।
काञ्चनोपलसंघातैः सदृशं श्लिष्टसंधिकम् ॥ ०११ ॥

सुवृत्तोरुकटीजङ्घं सुपादं स्वङ्गुलीनखम् ।
स्मृत्वा स्मृत्वैव च गुणान्धात्रा यत्नाद्विनिर्मितम् ॥ ०१२ ॥

सर्वलक्षणसंपन्नं निपुणं श्रुतिसागरम् ।
जेतारं तरसारीणामजेयं शत्रुभिर्बलात् ॥ ०१३ ॥

दशाङ्गं यश्चतुष्पादमिष्वस्त्रं वेद तत्त्वतः ।
साङ्गांश्च चतुरो वेदान्सम्यगाख्यानपञ्चमान् ॥ ०१४ ॥

आराध्य त्र्यम्बकं यत्नाद्व्रतैरुग्रैर्महातपाः ।
अयोनिजायामुत्पन्नो द्रोणेनायोनिजेन यः ॥ ०१५ ॥

तमप्रतिमकर्माणं रूपेणासदृशं भुवि ।
पारगं सर्वविद्यानां गुणार्णवमनिन्दितम्  ॥ ०१६  ॥

तमभ्येत्यात्मजस्तुभ्यमश्वत्थामानमब्रवीत्  ॥ ०१६  ॥

यं पुरस्कृत्य सहिता युधि जेष्याम पाण्डवान् ।
गुरुपुत्रोऽद्य सर्वेषामस्माकं परमा गतिः  ॥ ०१७  ॥

भवांस्तस्मान्नियोगात्ते कोऽस्तु सेनापतिर्मम  ॥ ०१७  ॥

द्रौणिरुवाच  ॥

अयं कुलेन वीर्येण तेजसा यशसा श्रिया ।
सर्वैर्गुणैः समुदितः शल्यो नोऽस्तु चमूपतिः  ॥ ०१८  ॥

भागिनेयान्निजांस्त्यक्त्वा कृतज्ञोऽस्मानुपागतः ।
महासेनो महाबाहुर्महासेन इवापरः  ॥ ०१९  ॥

एनं सेनापतिं कृत्वा नृपतिं नृपसत्तम ।
शक्यः प्राप्तुं जयोऽस्माभिर्देवैः स्कन्दमिवाजितम्  ॥ ०२०  ॥

तथोक्ते द्रोणपुत्रेण सर्व एव नराधिपाः ।
परिवार्य स्थिताः शल्यं जयशब्दांश्च चक्रिरे  ॥ ०२१  ॥

युद्धाय च मतिं चक्रूरावेशं च परं ययुः  ॥ ०२१  ॥

ततो दुर्योधनः शल्यं भूमौ स्थित्वा रथे स्थितम् ।
उवाच प्राञ्जलिर्भूत्वा रामभीष्मसमं रणे  ॥ ०२२  ॥

अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल ।

यत्र मित्रममित्रं वा परीक्षन्ते बुधा जनाः ॥ ०२३ ॥

स भवानस्तु नः शूरः प्रणेता वाहिनीमुखे ।
रणं च याते भवति पाण्डवा मन्दचेतसः ॥ ०२४ ॥

भविष्यन्ति सहामात्याः पाञ्चालाश्च निरुद्यमाः ॥ ०२४ ॥

शल्य उवाच ॥

यत्तु मां मन्यसे राजन्कुरुराज करोमि तत् ।
त्वत्प्रियार्थं हि मे सर्वं प्राणा राज्यं धनानि च ॥ ०२५ ॥

दुर्योधन उवाच ॥

सेनापत्येन वरये त्वामहं मातुलातुलम् ।
सोऽस्मान्पाहि युधां श्रेष्ठ स्कन्दो देवानिवाहवे ॥ ०२६ ॥

अभिषिच्यस्व राजेन्द्र देवानामिव पावकिः ।
जहि शत्रून्रणे वीर महेन्द्रो दानवानिव ॥ ०२७ ॥

---

# अध्याय ००६

सञ्जय उवाच ॥

एतच्छ्रुत्वा वचो राज्ञो मद्रराजः प्रतापवान् ।
दुर्योधनं तदा राजन्वाक्यमेतदुवाच ह ॥ ००१ ॥

दुर्योधन महाबाहो श्रृणु वाक्यविदां वर ।

यावेतौ मन्यसे कृष्णौ रथस्थौ रथिनां वरौ ॥ ००२ ॥

न मे तुल्यावुभावेतौ बाहुवीर्ये कथञ्चन ॥ ००२ ॥

उद्यतां पृथिवीं सर्वां ससुरासुरमानवाम् ।
योधयेयं रणमुखे सङ्क्रुद्धः किमु पाण्डवान् ॥ ००३ ॥

विजेष्ये च रणे पार्थान्सोमकांश्च समागतान् ॥ ००३ ॥

अहं सेनाप्रणेता ते भविष्यामि न संशयः ।
तं च व्यूहं विधास्यामि न तरिष्यन्ति यं परे ॥ ००४ ॥

इति सत्यं ब्रवीम्येष दुर्योधन न संशयः ॥ ००४ ॥

एवमुक्तस्ततो राजा मद्राधिपतिमञ्जसा ।
अभ्यषिञ्चत सेनाया मध्ये भरतसत्तम ॥ ००५ ॥

विधिना शास्त्रदृष्टेन हृष्टरूपो विशां पते ॥ ००५ ॥

अभिषिक्ते ततस्तस्मिन्सिंहनादो महानभूत् ।
तव सैन्येष्ववाद्यन्त वादित्राणि च भारत ॥ ००६ ॥

हृष्टाश्चासंस्तदा योधा मद्रकाश्च महारथाः ।
तुष्टुवुश्चैव राजानं शल्यमाहवशोभिनम् ॥ ००७ ॥

जय राजंश्चिरं जीव जहि शत्रून्समागतान् ।
तव बाहुबलं प्राप्य धार्तराष्ट्रा महाबलाः ॥ ००८ ॥

निखिलां पृथिवीं सर्वां प्रशासन्तु हतद्विषः ॥ ००८ ॥

त्वं हि शक्तो रणे जेतुं ससुरासुरमानवान् ।

मर्त्यधर्माण इह तु किमु सोमकसृञ्जयान्  ॥ ००९  ॥

एवं संस्तूयमानस्तु मद्राणामधिपो बली ।
हर्षं प्राप तदा वीरो दुरापमकृतात्मभिः  ॥ ०१०  ॥

शल्य उवाच  ॥

अद्यैवाहं रणे सर्वान्पाञ्चालान्सह पाण्डवैः ।
निहनिष्यामि राजेन्द्र स्वर्गं यास्यामि वा हतः  ॥ ०११  ॥

अद्य पश्यन्तु मां लोका विचरन्तमभीतवत् ।
अद्य पाण्डुसुताः सर्वे वासुदेवः ससात्यकिः  ॥ ०१२  ॥

पाञ्चालाश्चेदयश्चैव द्रौपदेयाश्च सर्वशः ।
धृष्टद्युम्नः शिखण्डी च सर्वे चापि प्रभद्रकाः  ॥ ०१३  ॥

विक्रमं मम पश्यन्तु धनुषश्च महद्बलम् ।
लाघवं चास्त्रवीर्यं च भुजयोश्च बलं युधि  ॥ ०१४  ॥

अद्य पश्यन्तु मे पार्थाः सिद्धाश्च सह चारणैः ।
यादृशं मे बलं बाह्वोः संपदस्त्रेषु या च मे  ॥ ०१५  ॥

अद्य मे विक्रमं दृष्ट्वा पाण्डवानां महारथाः ।
प्रतीकारपरा भूत्वा चेष्टन्तां विविधाः क्रियाः  ॥ ०१६  ॥

अद्य सैन्यानि पाण्डूनां द्रावयिष्ये समन्ततः ।
द्रोणभीष्मावति विभो सूतपुत्रं च संयुगे  ॥ ०१७  ॥

विचरिष्ये रणे युध्यन्प्रियार्थं तव कौरव  ॥ ०१७  ॥

सञ्जय उवाच  ॥

अभिषिक्ते तदा शल्ये तव सैन्येषु मानद ।
न कर्णव्यसनं किञ्चिन्मेनिरे तत्र भारत ॥ ०१८ ॥

हृष्टाः सुमनसश्चैव बभूवुस्तत्र सैनिकाः ।
मेनिरे निहतान्पार्थान्मद्रराजवशं गतान् ॥ ०१९ ॥

प्रहर्षं प्राप्य सेना तु तावकी भरतर्षभ ।
तां रात्रिं सुखिनी सुप्ता स्वस्थचित्तेव साभवत् ॥ ०२० ॥

सैन्यस्य तव तं शब्दं श्रुत्वा राजा युधिष्ठिरः ।
वार्ष्णेयमब्रवीद्वाक्यं सर्वक्षत्रस्य शृण्वतः ॥ ०२१ ॥

मद्रराजः कृतः शल्यो धार्तराष्ट्रेण माधव ।
सेनापतिर्महेष्वासः सर्वसैन्येषु पूजितः ॥ ०२२ ॥

एतच्छ्रुत्वा यथाभूतं कुरु माधव यत्क्षमम् ।
भवान्नेता च गोप्ता च विधत्स्व यदनन्तरम् ॥ ०२३ ॥

तमब्रवीन्महाराज वासुदेवो जनाधिपम् ।
आर्तायनिमहं जाने यथातत्त्वेन भारत ॥ ०२४ ॥

वीर्यवांश्च महातेजा महात्मा च विशेषतः ।
कृती च चित्रयोधी च संयुक्तो लाघवेन च ॥ ०२५ ॥

यादृग्भीष्मस्तथा द्रोणो यादृक्कर्णश्च संयुगे ।
तादृशस्तद्विशिष्टो वा मद्रराजो मतो मम ॥ ०२६ ॥

युध्यमानस्य तस्याजौ चिन्तयन्नेव भारत ।
योद्धारं नाधिगच्छामि तुल्यरूपं जनाधिप ॥ ०२७ ॥

शिखण्ड्यर्जुनभीमानां सात्वतस्य च भारत ।
धृष्टद्युम्नस्य च तथा बलेनाभ्यधिको रणे ॥ ०२८ ॥

मद्रराजो महाराज सिंहद्विरदविक्रमः ।
विचरिष्यत्यभीः काले कालः क्रुद्धः प्रजास्विव ॥ ०२९ ॥

तस्याद्य न प्रपश्यामि प्रतियोद्धारमाहवे ।
त्वामृते पुरुषव्याघ्र शार्दूलसमविक्रमम् ॥ ०३० ॥

सदेवलोके कृत्स्नेऽस्मिन्नान्यस्त्वत्तः पुमान्भवेत् ।
मद्रराजं रणे क्रुद्धं यो हन्यात्कुरुनन्दन ॥ ०३१ ॥

अहन्यहनि युध्यन्तं क्षोभयन्तं बलं तव ॥ ०३१ ॥

तस्माज्जहि रणे शल्यं मघवानिव शम्बरम् ।
अतिपश्चादसौ वीरो धार्तराष्ट्रेण सत्कृतः ॥ ०३२ ॥

तवैव हि जयो नूनं हते मद्रेश्वरे युधि ।
तस्मिन्हते हतं सर्वं धार्तराष्ट्रबलं महत् ॥ ०३३ ॥

एतच्छ्रुत्वा महाराज वचनं मम सांप्रतम् ।
प्रत्युद्याहि रणे पार्थ मद्रराजं महाबलम् ॥ ०३४ ॥

जहि चैनं महाबाहो वासवो नमुचिं यथा ॥ ०३४ ॥

न चैवात्र दया कार्या मातुलोऽयं ममेति वै ।
क्षत्रधर्मं पुरस्कृत्य जहि मद्रजनेश्वरम् ॥ ०३५ ॥

भीष्मद्रोणार्णवं तीर्त्वा कर्णपातालसंभवम् ।
मा निमज्जस्व सगणः शल्यमासाद्य गोष्पदम् ॥ ०३६ ॥

यच्च ते तपसो वीर्यं यच्च क्षात्रं बलं तव ।
तद्दर्शय रणे सर्वं जहि चैनं महारथम् ॥ ०३७ ॥

एतावदुक्त्वा वचनं केशवः परवीरहा ।
जगाम शिबिरं सायं पूज्यमानोऽथ पाण्डवैः ॥ ०३८ ॥

केशवे तु तदा याते धर्मराजो युधिष्ठिरः ।
विसृज्य सर्वान्भ्रातृंश्च पाञ्चालानथ सोमकान् ॥ ०३९ ॥

सुष्वाप रजनीं तां तु विशल्य इव कुञ्जरः ॥ ०३९ ॥

ते च सर्वे महेष्वासाः पाञ्चालाः पाण्डवास्तथा ।
कर्णस्य निधने हृष्टाः सुषुपुस्तां निशां तदा ॥ ०४० ॥

गतज्वरं महेष्वासं तीर्णपारं महारथम् ।
बभूव पाण्डवेयानां सैन्यं प्रमुदितं निशि ॥ ०४१ ॥

सूतपुत्रस्य निधने जयं लब्ध्वा च मारिष ॥ ०४१ ॥

---

## अध्याय ००७

सञ्जय उवाच ॥

व्यतीतायां रजन्यां तु राजा दुर्योधनस्तदा ।
अब्रवीत्तावकान्सर्वान्संनह्यन्तां महारथाः ॥ ००१ ॥

राज्ञस्तु मतमाज्ञाय समनह्यत सा चमूः ।
अयोजयन्रथांस्तूर्णं पर्यधावंस्तथापरे ॥ ००२ ॥

अकल्प्यन्त च मातङ्गाः समनह्यन्त पत्तयः ।
हयानास्तरणोपेतांश्चक्रुरन्ये सहस्रशः ॥ ००३ ॥

वादित्राणां च निनदः प्रादुरासीद्विशां पते ।
बोधनार्थं हि योधानां सैन्यानां चाप्युदीर्यताम् ॥ ००४ ॥

ततो बलानि सर्वाणि सेनाशिष्टानि भारत ।
संनद्धान्येव ददृशुर्मृत्युं कृत्वा निवर्तनम् ॥ ००५ ॥

शल्यं सेनापतिं कृत्वा मद्रराजं महारथाः ।
प्रविभज्य बलं सर्वमनीकेषु व्यवस्थिताः ॥ ००६ ॥

ततः सर्वे समागम्य पुत्रेण तव सैनिकाः ।
कृपश्च कृतवर्मा च द्रौणिः शल्योऽथ सौबलः ॥ ००७ ॥

अन्ये च पार्थिवाः शेषाः समयं चक्रिरे तदा ।
न न एकेन योद्धव्यं कथञ्चिदपि पाण्डवैः ॥ ००८ ॥

यो ह्येकः पाण्डवैर्युध्येद्यो वा युध्यन्तमुत्सृजेत् ।
स पञ्चभिर्भवेद्युक्तः पातकैः सोपपातकैः ॥ ००९ ॥

अन्योन्यं परिरक्षद्भिर्योद्धव्यं सहितैश्च नः ॥ ००९ ॥

एवं ते समयं कृत्वा सर्वे तत्र महारथाः ।
मद्रराजं पुरस्कृत्य तूर्णमभ्यद्रवन्परान् ॥ ०१० ॥

तथैव पाण्डवा राजन्व्यूह्य सैन्यं महारणे ।
अभ्ययुः कौरवान्सर्वान्योत्स्यमानाः समन्ततः ॥ ०११ ॥

तद्बलं भरतश्रेष्ठ क्षुब्धार्णवसमस्वनम् ।

समुद्धूतार्णवाकारमुद्धूतरथकुञ्जरम् ॥ ०१२ ॥

धृतराष्ट्र उवाच ॥

द्रोणस्य भीष्मस्य च वै राधेयस्य च मे श्रुतम् ।
पातनं शंस मे भूयः शल्यस्याथ सुतस्य मे ॥ ०१३ ॥

कथं रणे हतः शल्यो धर्मराजेन सञ्जय ।
भीमेन च महाबाहुः पुत्रो दुर्योधनो मम ॥ ०१४ ॥

सञ्जय उवाच ॥

क्षयं मनुष्यदेहानां रथनागाश्वसङ्क्षयम् ।
शृणु राजन्स्थिरो भूत्वा सङ्ग्रामं शंसतो मम ॥ ०१५ ॥

आशा बलवती राजन्पुत्राणां तेऽभवत्तदा ।
हते भीष्मे च द्रोणे च सूतपुत्रे च पातिते ॥ ०१६ ॥

शल्यः पार्थान्रणे सर्वान्निहनिष्यति मारिष ॥ ०१६ ॥

तामाशां हृदये कृत्वा समाश्वास्य च भारत ।
मद्रराजं च समरे समाश्रित्य महारथम् ॥ ०१७ ॥

नाथवन्तमथात्मानममन्यत सुतस्तव ॥ ०१७ ॥

यदा कर्णे हते पार्थाः सिंहनादं प्रचक्रिरे ।
तदा राजन्धार्तराष्ट्रानाविवेश महद्भयम् ॥ ०१८ ॥

तान्समाश्वास्य तु तदा मद्रराजः प्रतापवान् ।
व्यूह्य व्यूहं महाराज सर्वतोभद्रमृद्धिमत् ॥ ०१९ ॥

प्रत्युद्यातो रणे पार्थान्मद्रराजः प्रतापवान् ।
विधुन्वन्कार्मुकं चित्रं भारघ्नं वेगवत्तरम् ॥ ०२० ॥

रथप्रवरमास्थाय सैन्धवाश्वं महारथः ।
तस्य सीता महाराज रथस्थाशोभयद्रथम् ॥ ०२१ ॥

स तेन संवृतो वीरो रथेनामित्रकर्शनः ।
तस्थौ शूरो महाराज पुत्राणां ते भयप्रणुत् ॥ ०२२ ॥

प्रयाणे मद्रराजोऽभून्मुखं व्यूहस्य दंशितः ।
मद्रकैः सहितो वीरैः कर्णपुत्रैश्च दुर्जयैः ॥ ०२३ ॥

सव्येऽभूत्कृतवर्मा च त्रिगर्तैः परिवारितः ।
गौतमो दक्षिणे पार्श्वे शकैश्च यवनैः सह ॥ ०२४ ॥

अश्वत्थामा पृष्ठतोऽभूत्काम्बोजैः परिवारितः ।
दुर्योधनोऽभवन्मध्ये रक्षितः कुरुपुङ्गवैः ॥ ०२५ ॥

हयानीकेन महता सौबलश्चापि संवृतः ।
प्रययौ सर्वसैन्येन कैतव्यश्च महारथः ॥ ०२६ ॥

पाण्डवाश्च महेष्वासा व्यूह्य सैन्यमरिंदमाः ।
त्रिधा भूत्वा महाराज तव सैन्यमुपाद्रवन् ॥ ०२७ ॥

धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः ।
शल्यस्य वाहिनीं तूर्णमभिदुद्रुवुराहवे ॥ ०२८ ॥

ततो युधिष्ठिरो राजा स्वेनानीकेन संवृतः ।
शल्यमेवाभिदुद्राव जिघांसुर्भरतर्षभ ॥ ०२९ ॥

हार्दिक्यं तु महेष्वासमर्जुनः शत्रुपूगहा ।

संशप्तकगणांश्चैव वेगतोऽभिविदुद्रुवे ॥ ०३० ॥

गौतमं भीमसेनो वै सोमकाश्च महारथाः ।
अभ्यद्रवन्त राजेन्द्र जिघांसन्तः परान्युधि ॥ ०३१ ॥

माद्रीपुत्रौ तु शकुनिमुलूकं च महारथौ ।
ससैन्यौ सहसेनौ तावुपतस्थतुराहवे ॥ ०३२ ॥

तथैवायुतशो योधास्तावकाः पाण्डवान्रणे ।
अभ्यद्रवन्त सङ्क्रुद्धा विविधायुधपाणयः ॥ ०३३ ॥

धृतराष्ट्र उवाच ॥

हते भीष्मे महेष्वासे द्रोणे कर्णे महारथे ।
कुरुष्वल्पावशिष्टेषु पाण्डवेषु च संयुगे ॥ ०३४ ॥

सुसंरब्धेषु पार्थेषु पराक्रान्तेषु सञ्जय ।
मामकानां परेषां च किं शिष्टमभवद्बलम् ॥ ०३५ ॥

सञ्जय उवाच ॥

यथा वयं परे राजन्युद्धाय समवस्थिताः ।
यावच्चासीद्बलं शिष्टं सङ्ग्रामे तन्निबोध मे ॥ ०३६ ॥

एकादश सहस्राणि रथानां भरतर्षभ ।
दश दन्तिसहस्राणि सप्त चैव शतानि च ॥ ०३७ ॥

पूर्णे शतसहस्रे द्वे हयानां भरतर्षभ ।
नरकोट्यस्तथा तिस्रो बलमेतत्तवाभवत् ॥ ०३८ ॥

रथानां षट्सहस्राणि षट्सहस्राश्च कुञ्जराः ।

दश चाश्वसहस्राणि पत्तिकोटी च भारत ॥ ०३९ ॥

एतद्बलं पाण्डवानामभवच्छेषमाहवे ।
एत एव समाजग्मुर्युद्धाय भरतर्षभ ॥ ०४० ॥

एवं विभज्य राजेन्द्र मद्रराजमते स्थिताः ।
पाण्डवान्प्रत्युदीयाम जयगृद्धाः प्रमन्यवः ॥ ०४१ ॥

तथैव पाण्डवाः शूराः समरे जितकाशिनः ।
उपयाता नरव्याघ्राः पाञ्चालाश्च यशस्विनः ॥ ०४२ ॥

एवमेते बलौघेन परस्परवधैषिणः ।
उपयाता नरव्याघ्राः पूर्वां संध्यां प्रति प्रभो ॥ ०४३ ॥

ततः प्रववृते युद्धं घोररूपं भयानकम् ।
तावकानां परेषां च निघ्नतामितरेतरम् ॥ ०४४ ॥

---

# अध्याय ००८

सञ्जय उवाच ॥

ततः प्रववृते युद्धं कुरूणां भयवर्धनम् ।
सृञ्जयैः सह राजेन्द्र घोरं देवासुरोपमम् ॥ ००१ ॥

नरा रथा गजौघाश्च सादिनश्च सहस्रशः ।
वाजिनश्च पराक्रान्ताः समाजग्मुः परस्परम् ॥ ००२ ॥

नागानां भीमरूपाणां द्रवतां निस्वनो महान् ।

अश्रूयत यथा काले जलदानां नभस्तले ॥ ००३ ॥

नागैरभ्याहताः केचित्सरथा रथिनोऽपतन् ।
व्यद्रवन्त रणे वीरा द्राव्यमाणा मदोत्कटैः ॥ ००४ ॥

हयौघान्पादरक्षांश्च रथिनस्तत्र शिक्षिताः ।
शरैः संप्रेषयामासुः परलोकाय भारत ॥ ००५ ॥

सादिनः शिक्षिता राजन्परिवार्य महारथान् ।
विचरन्तो रणेऽभ्यघ्नन्प्रासशक्त्यृष्टिभिस्तथा ॥ ००६ ॥

धन्विनः पुरुषाः केचित्संनिवार्य महारथान् ।
एकं बहव आसाद्य प्रेषयेयुर्यमक्षयम् ॥ ००७ ॥

नागं रथवरांश्चान्ये परिवार्य महारथाः ।
सोत्तरायुधिनं जघ्नुर्द्रवमाणा महारवम् ॥ ००८ ॥

तथा च रथिनं क्रुद्धं विकिरन्तं शरान्बहून् ।
नागा जघ्नुर्महाराज परिवार्य समन्ततः ॥ ००९ ॥

नागो नागमभिद्रुत्य रथी च रथिनं रणे ।
शक्तितोमरनाराचैर्निजघ्नुस्तत्र तत्र ह ॥ ०१० ॥

पादातानवमृद्नन्तो रथवारणवाजिनः ।
रणमध्ये व्यदृश्यन्त कुर्वन्तो महदाकुलम् ॥ ०११ ॥

हयाश्च पर्यधावन्त चामरैरुपशोभिताः ।
हंसा हिमवतः प्रस्थे पिबन्त इव मेदिनीम् ॥ ०१२ ॥

तेषां तु वाजिनां भूमिः खुरैश्चित्रा विशां पते ।
अशोभत यथा नारी करजक्षतविक्षता ॥ ०१३ ॥

वाजिनां खुरशब्देन रथनेमिस्वनेन च ।
पत्तीनां चापि शब्देन नागानां बृंहितेन च ॥ ०१४ ॥

वादित्राणां च घोषेण शङ्खानां निस्वनेन च ।
अभवन्नादिता भूमिर्निर्घातैरिव भारत ॥ ०१५ ॥

धनुषां कूजमानानां निस्त्रिंशानां च दीप्यताम् ।
कवचानां प्रभाभिश्च न प्राज्ञायत किञ्चन ॥ ०१६ ॥

बहवो बाहवश्छिन्ना नागराजकरोपमाः ।
उद्वेष्टन्ते विवेष्टन्ते वेगं कुर्वन्ति दारुणम् ॥ ०१७ ॥

शिरसां च महाराज पततां वसुधातले ।
च्युतानामिव तालेभ्यः फलानां श्रूयते स्वनः ॥ ०१८ ॥

शिरोभिः पतितैर्भाति रुधिरार्द्रैर्वसुंधरा ।
तपनीयनिभैः काले नलिनैरिव भारत ॥ ०१९ ॥

उद्वृत्तनयनैस्तैस्तु गतसत्त्वैः सुविक्षतैः ।
व्यभ्राजत महाराज पुण्डरीकैरिवावृता ॥ ०२० ॥

बाहुभिश्चन्दनादिग्धैः सकेयूरैर्महाधनैः ।
पतितैर्भाति राजेन्द्र मही शक्रध्वजैरिव ॥ ०२१ ॥

ऊरुभिश्च नरेन्द्राणां विनिकृत्तैर्महाहवे ।
हस्तिहस्तोपमैरन्यैः संवृतं तद्रणाङ्गणम् ॥ ०२२ ॥

कबन्धशतसङ्कीर्णं छत्रचामरशोभितम् ।
सेनावनं तच्छुशुभे वनं पुष्पाचितं यथा ॥ ०२३ ॥

तत्र योधा महाराज विचरन्तो ह्यभीतवत् ।
दृश्यन्ते रुधिराक्ताङ्गाः पुष्पिता इव किंशुकाः ॥ ०२४ ॥

मातङ्गाश्चाप्यदृश्यन्त शरतोमरपीडिताः ।
पतन्तस्तत्र तत्रैव छिन्नाभ्रसदृशा रणे ॥ ०२५ ॥

गजानीकं महाराज वध्यमानं महात्मभिः ।
व्यदीर्यत दिशः सर्वा वातनुन्ना घना इव ॥ ०२६ ॥

ते गजा घनसङ्काशाः पेतुरुर्व्यां समन्ततः ।
वज्ररुग्णा इव बभुः पर्वता युगसङ्क्षये ॥ ०२७ ॥

हयानां सादिभिः सार्धं पतितानां महीतले ।
राशयः संप्रदृश्यन्ते गिरिमात्रास्ततस्ततः ॥ ०२८ ॥

सञ्जज्ञे रणभूमौ तु परलोकवहा नदी ।
शोणितोदा रथावर्ता ध्वजवृक्षास्थिशर्करा ॥ ०२९ ॥

भुजनक्रा धनुःस्रोता हस्तिशैला हयोपला ।
मेदोमज्जाकर्दमिनी छत्रहंसा गदोडुपा ॥ ०३० ॥

कवचोष्णीषसंछन्ना पताकारुचिरद्रुमा ।
चक्रचक्रावलीजुष्टा त्रिवेणूदण्डकावृता ॥ ०३१ ॥

शूराणां हर्षजननी भीरूणां भयवर्धिनी ।
प्रावर्तत नदी रौद्रा कुरुसृञ्जयसङ्कुला ॥ ०३२ ॥

तां नदीं पितृलोकाय वहन्तीमतिभैरवाम् ।
तेरुर्वाहननौभिस्ते शूराः परिघबाहवः ॥ ०३३ ॥

वर्तमाने तथा युद्धे निर्मर्यादे विशां पते ।

चतुरङ्गक्षये घोरे पूर्वं देवासुरोपमे ॥ ०३४ ॥

अक्रोशन्बान्धवानन्ये तत्र तत्र परंतप ।
क्रोशद्भिर्बान्धवैश्चान्ये भयार्ता न निवर्तिरे ॥ ०३५ ॥

निर्मर्यादे तथा युद्धे वर्तमाने भयानके ।
अर्जुनो भीमसेनश्च मोहयां चक्रतुः परान् ॥ ०३६ ॥

सा वध्यमाना महती सेना तव जनाधिप ।
अमुह्यत्तत्र तत्रैव योषिन्मदवशादिव ॥ ०३७ ॥

मोहयित्वा च तां सेनां भीमसेनधनञ्जयौ ।
दध्मतुर्वारिजौ तत्र सिंहनादं च नेदतुः ॥ ०३८ ॥

श्रुत्वैव तु महाशब्दं धृष्टद्युम्नशिखण्डिनौ ।
धर्मराजं पुरस्कृत्य मद्रराजमभिद्रुतौ ॥ ०३९ ॥

तत्राश्चर्यमपश्याम घोररूपं विशां पते ।
शल्येन सङ्गताः शूरा यदयुध्यन्त भागशः ॥ ०४० ॥

माद्रीपुत्रौ सरभसौ कृतास्त्रौ युद्धदुर्मदौ ।
अभ्ययातां त्वरायुक्तौ जिगीषन्तौ बलं तव ॥ ०४१ ॥

ततो न्यवर्तत बलं तावकं भरतर्षभ ।
शरैः प्रणुन्नं बहुधा पाण्डवैर्जितकाशिभिः ॥ ०४२ ॥

वध्यमाना चमूः सा तु पुत्राणां प्रेक्षतां तव ।
भेजे दिशो महाराज प्रणुन्ना दृढधन्विभिः ॥ ०४३ ॥

हाहाकारो महाञ्जज्ञे योधानां तव भारत ॥ ०४३ ॥

तिष्ठ तिष्ठेति वागासीद्द्रावितानां महात्मनाम् ।
क्षत्रियाणां तदान्योन्यं संयुगे जयमिच्छताम्  ॥ ०४४  ॥

आद्रवन्नेव भग्नास्ते पाण्डवैस्तव सैनिकाः  ॥ ०४४  ॥

त्यक्त्वा युद्धे प्रियान्पुत्रान्भ्रातॄनथ पितामहान् ।
मातुलान्भागिनेयांश्च तथा संबन्धिबान्धवान्  ॥ ०४५  ॥

हयान्द्विपांस्त्वरयन्तो योधा जग्मुः समन्ततः ।
आत्मत्राणकृतोत्साहास्तावका भरतर्षभ  ॥ ०४६  ॥

---

# अध्याय ००९

सञ्जय उवाच  ॥

तत्प्रभग्नं बलं दृष्ट्वा मद्रराजः प्रतापवान् ।
उवाच सारथिं तूर्णं चोदयाश्वान्महाजवान्  ॥ ००१  ॥

एष तिष्ठति वै राजा पाण्डुपुत्रो युधिष्ठिरः ।
छत्रेण ध्रियमाणेन पाण्डुरेण विराजता  ॥ ००२  ॥

अत्र मां प्रापय क्षिप्रं पश्य मे सारथे बलम् ।
न समर्था हि मे पार्थाः स्थातुमद्य पुरो युधि  ॥ ००३  ॥

एवमुक्तस्ततः प्रायान्मद्रराजस्य सारथिः ।
यत्र राजा सत्यसंधो धर्मराजो युधिष्ठिरः  ॥ ००४  ॥

आपतन्तं च सहसा पाण्डवानां महद्बलम् ।
दधारैको रणे शल्यो वेलेवोद्धूतमर्णवम्  ॥ ००५  ॥

पाण्डवानां बलौघस्तु शल्यमासाद्य मारिष ।
व्यतिष्ठत तदा युद्धे सिन्धोर्वेग इवाचलम्  ॥ ००६  ॥

मद्रराजं तु समरे दृष्ट्वा युद्धाय विष्ठितम् ।
कुरवः संन्यवर्तन्त मृत्युं कृत्वा निवर्तनम्  ॥ ००७  ॥

तेषु राजन्निवृत्तेषु व्यूढानीकेषु भागशः ।
प्रावर्तत महारौद्रः सङ्ग्रामः शोणितोदकः  ॥ ००८  ॥

समार्छच्चित्रसेनेन नकुलो युद्धदुर्मदः  ॥ ००८  ॥

तौ परस्परमासाद्य चित्रकार्मुकधारिणौ ।
मेघाविव यथोद्वृत्तौ दक्षिणोत्तरवर्षिणौ  ॥ ००९  ॥

शरतोयैः सिषिचतुस्तौ परस्परमाहवे ।
नान्तरं तत्र पश्यामि पाण्डवस्येतरस्य वा  ॥ ०१०  ॥

उभौ कृतास्त्रौ बलिनौ रथचर्याविशारदौ ।
परस्परवधे यत्तौ छिद्रान्वेषणतत्परौ  ॥ ०११  ॥

चित्रसेनस्तु भल्लेन पीतेन निशितेन च ।
नकुलस्य महाराज मुष्टिदेशेऽच्छिनद्धनुः  ॥ ०१२  ॥

अथैनं छिन्नधन्वानं रुक्मपुङ्खैः शिलाशितैः ।
त्रिभिः शरैरसंभ्रान्तो ललाटे वै समर्पयत्  ॥ ०१३  ॥

हयांश्चास्य शरैस्तीक्ष्णैः प्रेषयामास मृत्यवे ।
तथा ध्वजं सारथिं च त्रिभिस्त्रिभिरपातयत्  ॥ ०१४  ॥

स शत्रुभुजनिर्मुक्तैर्ललाटस्थैस्त्रिभिः शरैः ।
नकुलः शुशुभे राजंस्त्रिश‍ृङ्ग इव पर्वतः ॥ ०१५ ॥

स छिन्नधन्वा विरथः खड्गमादाय चर्म च ।
रथादवातरद्वीरः शैलाग्रादिव केसरी ॥ ०१६ ॥

पद्भ्यामापततस्तस्य शरवृष्टिमवासृजत् ।
नकुलोऽप्यग्रसत्तां वै चर्मणा लघुविक्रमः ॥ ०१७ ॥

चित्रसेनरथं प्राप्य चित्रयोधी जितश्रमः ।
आरुरोह महाबाहुः सर्वसैन्यस्य पश्यतः ॥ ०१८ ॥

सकुण्डलं समुकुटं सुनसं स्वायतेक्षणम् ।
चित्रसेनशिरः कायादपाहरत पाण्डवः ॥ ०१९ ॥

स पपात रथोपस्थाद्दिवाकरसमप्रभः ॥ ०१९ ॥

चित्रसेनं विशस्तं तु दृष्ट्वा तत्र महारथाः ।
साधुवादस्वनांश्चक्रुः सिंहनादांश्च पुष्कलान् ॥ ०२० ॥

विशस्तं भ्रातरं दृष्ट्वा कर्णपुत्रौ महारथौ ।
सुषेणः सत्यसेनश्च मुञ्चन्तौ निशिताञ्शरान् ॥ ०२१ ॥

ततोऽभ्यधावतां तूर्णं पाण्डवं रथिनां वरम् ।
जिघांसन्तौ यथा नागं व्याघ्रौ राजन्महावने ॥ ०२२ ॥

तावभ्यधावतां तीक्ष्णौ द्वावप्येनं महारथम् ।
शरौघान्सम्यगस्यन्तौ जीमूतौ सलिलं यथा ॥ ०२३ ॥

स शरैः सर्वतो विद्धः प्रहृष्ट इव पाण्डवः ।

अन्यत्कार्मुकमादाय रथमारुह्य वीर्यवान्  ॥ ०२४  ॥

अतिष्ठत रणे वीरः क्रुद्धरूप इवान्तकः  ॥ ०२४  ॥

तस्य तौ भ्रातरौ राजञ्शरैः संनतपर्वभिः ।
रथं विशकलीकर्तुं समारब्धौ विशां पते  ॥ ०२५  ॥

ततः प्रहस्य नकुलश्चतुर्भिश्चतुरो रणे ।
जघान निशितैस्तीक्ष्णैः सत्यसेनस्य वाजिनः  ॥ ०२६  ॥

ततः संधाय नाराचं रुक्मपुङ्खं शिलाशितम् ।
धनुश्चिच्छेद राजेन्द्र सत्यसेनस्य पाण्डवः  ॥ ०२७  ॥

अथान्यं रथमास्थाय धनुरादाय चापरम् ।
सत्यसेनः सुषेणश्च पाण्डवं पर्यधावताम्  ॥ ०२८  ॥

अविध्यत्तावसंभ्रान्तौ माद्रीपुत्रः प्रतापवान् ।
द्वाभ्यां द्वाभ्यां महाराज शराभ्यां रणमूर्धनि  ॥ ०२९  ॥

सुषेणस्तु ततः क्रुद्धः पाण्डवस्य महद्धनुः ।
चिच्छेद प्रहसन्युद्धे क्षुरप्रेण महारथः  ॥ ०३०  ॥

अथान्यद्धनुरादाय नकुलः क्रोधमूर्छितः ।
सुषेणं पञ्चभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे  ॥ ०३१  ॥

सत्यसेनस्य च धनुर्हस्तावापं च मारिष ।
चिच्छेद तरसा युद्धे तत उच्चुक्रुशुर्जनाः  ॥ ०३२  ॥

अथान्यद्धनुरादाय वेगघ्नं भारसाधनम् ।
शरैः संछादयामास समन्तात्पाण्डुनन्दनम्  ॥ ०३३  ॥

संनिवार्य तु तान्बाणान्नकुलः परवीरहा ।
सत्यसेनं सुषेणं च द्वाभ्यां द्वाभ्यामविध्यत ॥ ०३४ ॥

तावेनं प्रत्यविध्येतां पृथक्पृथगजिह्मगैः ।
सारथिं चास्य राजेन्द्र शरैर्विव्यधतुः शितैः ॥ ०३५ ॥

सत्यसेनो रथेषां तु नकुलस्य धनुस्तथा ।
पृथक्शराभ्यां चिच्छेद कृतहस्तः प्रतापवान् ॥ ०३६ ॥

स रथेऽतिरथस्तिष्ठन्रथशक्तिं परामृशत् ।
स्वर्णदण्डामकुण्ठाग्रां तैलधौतां सुनिर्मलाम् ॥ ०३७ ॥

लेलिहानामिव विभो नागकन्यां महाविषाम् ।
समुद्यम्य च चिक्षेप सत्यसेनस्य संयुगे ॥ ०३८ ॥

सा तस्य हृदयं संख्ये बिभेद शतधा नृप ।
स पपात रथाद्भूमौ गतसत्त्वोऽल्पचेतनः ॥ ०३९ ॥

भ्रातरं निहतं दृष्ट्वा सुषेणः क्रोधमूर्छितः ।
अभ्यवर्षच्छरैस्तूर्णं पदातिं पाण्डुनन्दनम् ॥ ०४० ॥

नकुलं विरथं दृष्ट्वा द्रौपदेयो महाबलः ।
सुतसोमोऽभिदुद्राव परीप्सन्पितरं रणे ॥ ०४१ ॥

ततोऽधिरुह्य नकुलः सुतसोमस्य तं रथम् ।
शुशुभे भरतश्रेष्ठो गिरिस्थ इव केसरी ॥ ०४२ ॥

सोऽन्यत्कार्मुकमादाय सुषेणं समयोधयत् ॥ ०४२ ॥

तावुभौ शरवर्षाभ्यां समासाद्य परस्परम् ।
परस्परवधे यत्नं चक्रतुः सुमहारथौ ॥ ०४३ ॥

सुषेणस्तु ततः क्रुद्धः पाण्डवं विशिखैस्त्रिभिः ।
सुतसोमं च विंशत्या बाह्वोरुरसि चार्पयत् ॥ ०४४ ॥

ततः क्रुद्धो महाराज नकुलः परवीरहा ।
शरैस्तस्य दिशः सर्वाश्छादयामास वीर्यवान् ॥ ०४५ ॥

ततो गृहीत्वा तीक्ष्णाग्रमर्धचन्द्रं सुतेजनम् ।
स वेगयुक्तं चिक्षेप कर्णपुत्रस्य संयुगे ॥ ०४६ ॥

तस्य तेन शिरः कायाज्जहार नृपसत्तम ।
पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ॥ ०४७ ॥

स हतः प्रापतद्राजन्नकुलेन महात्मना ।
नदीवेगादिवारुग्णस्तीरजः पादपो महान् ॥ ०४८ ॥

कर्णपुत्रवधं दृष्ट्वा नकुलस्य च विक्रमम् ।
प्रदुद्राव भयात्सेना तावकी भरतर्षभ ॥ ०४९ ॥

तां तु सेनां महाराज मद्रराजः प्रतापवान् ।
अपालयद्रणे शूरः सेनापतिररिंदमः ॥ ०५० ॥

विभीस्तस्थौ महाराज व्यवस्थाप्य च वाहिनीम् ।
सिंहनादं भृशं कृत्वा धनुःशब्दं च दारुणम् ॥ ०५१ ॥

तावकाः समरे राजन्रक्षिता दृढधन्वना ।
प्रत्युद्ययुररातींस्ते समन्ताद्विगतव्यथाः ॥ ०५२ ॥

मद्रराजं महेष्वासं परिवार्य समन्ततः ।
स्थिता राजन्महासेना योद्धुकामाः समन्ततः ॥ ०५३ ॥

सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।
युधिष्ठिरं पुरस्कृत्य ह्रीनिषेधमरिंदमम् ॥ ०५४ ॥

परिवार्य रणे वीराः सिंहनादं प्रचक्रिरे ।
बाणशब्दरवांश्चोग्रान्क्ष्वेडांश्च विविधान्दधुः ॥ ०५५ ॥

तथैव तावकाः सर्वे मद्राधिपतिमञ्जसा ।
परिवार्य सुसंरब्धाः पुनर्युद्धमरोचयन् ॥ ०५६ ॥

ततः प्रववृते युद्धं भीरूणां भयवर्धनम् ।
तावकानां परेषां च मृत्युं कृत्वा निवर्तनम् ॥ ०५७ ॥

यथा देवासुरं युद्धं पूर्वमासीद्विशां पते ।
अभीतानां तथा राजन्यमराष्ट्रविवर्धनम् ॥ ०५८ ॥

ततः कपिध्वजो राजन्हत्वा संशप्तकान्रणे ।
अभ्यद्रवत तां सेनां कौरवीं पाण्डुनन्दनः ॥ ०५९ ॥

तथैव पाण्डवाः शेषा धृष्टद्युम्नपुरोगमाः ।
अभ्यधावन्त तां सेनां विसृजन्तः शिताञ्शरान् ॥ ०६० ॥

पाण्डवैरवकीर्णानां संमोहः समजायत ।
न च जज्ञुरनीकानि दिशो वा प्रदिशस्तथा ॥ ०६१ ॥

आपूर्यमाणा निशितैः शरैः पाण्डवचोदितैः ।
हतप्रवीरा विध्वस्ता कीर्यमाणा समन्ततः ॥ ०६२ ॥

कौरव्यवध्यत चमूः पाण्डुपुत्रैर्महारथैः ॥ ०६२ ॥

तथैव पाण्डवी सेना शरै राजन्समन्ततः ।
रणेऽहन्यत पुत्रैस्ते शतशोऽथ सहस्रशः ॥ ०६३ ॥

ते सेने भृशसंतप्ते वध्यमाने परस्परम् ।
व्याकुले समपद्येतां वर्षासु सरिताविव ॥ ०६४ ॥

आविवेश ततस्तीव्रं तावकानां महद्भयम् ।
पाण्डवानां च राजेन्द्र तथाभूते महाहवे ॥ ०६५ ॥

---

# अध्याय ०१०

सञ्जय उवाच ॥

तस्मिन्विलुलिते सैन्ये वध्यमाने परस्परम् ।
द्रवमाणेषु योधेषु निनदत्सु च दन्तिषु ॥ ००१ ॥

कूजतां स्तनतां चैव पदातीनां महाहवे ।
विद्रुतेषु महाराज हयेषु बहुधा तदा ॥ ००२ ॥

प्रक्षये दारुणे जाते संहारे सर्वदेहिनाम् ।
नानाशस्त्रसमावापे व्यतिषक्तरथद्विपे ॥ ००३ ॥

हर्षणे युद्धशौण्डानां भीरूणां भयवर्धने ।
गाहमानेषु योधेषु परस्परवधैषिषु ॥ ००४ ॥

प्राणादाने महाघोरे वर्तमाने दुरोदरे ।
सङ्ग्रामे घोररूपे तु यमराष्ट्रविवर्धने ॥ ००५ ॥

पाण्डवास्तावकं सैन्यं व्यधमन्निशितैः शरैः ।
तथैव तावका योधा जघ्नुः पाण्डवसैनिकान् ॥ ००६ ॥

तस्मिंस्तथा वर्तमाने युद्धे भीरुभयावहे ।
पूर्वाह्णे चैव संप्राप्ते भास्करोदयनं प्रति ॥ ००७ ॥

लब्धलक्षाः परे राजन्रक्षिताश्च महात्मना ।
अयोधयंस्तव बलं मृत्युं कृत्वा निवर्तनम् ॥ ००८ ॥

बलिभिः पाण्डवैर्दृप्तैर्लब्धलक्षैः प्रहारिभिः ।
कौरव्यसीदत्पृतना मृगीवाग्निसमाकुला ॥ ००९ ॥

तां दृष्ट्वा सीदतीं सेनां पङ्के गामिव दुर्बलाम् ।
उज्जिहीर्षुस्तदा शल्यः प्रायात्पाण्डुचमूं प्रति ॥ ०१० ॥

मद्रराजस्तु सङ्क्रुद्धो गृहीत्वा धनुरुत्तमम् ।
अभ्यद्रवत सङ्ग्रामे पाण्डवानाततायिनः ॥ ०११ ॥

पाण्डवाश्च महाराज समरे जितकाशिनः ।
मद्रराजं समासाद्य विव्यधुर्निशितैः शरैः ॥ ०१२ ॥

ततः शरशतैस्तीक्ष्णैर्मद्रराजो महाबलः ।
अर्दयामास तां सेनां धर्मराजस्य पश्यतः ॥ ०१३ ॥

प्रादुरासंस्ततो राजन्नानारूपाण्यनेकशः ।
चचाल शब्दं कुर्वाणा मही चापि सपर्वता ॥ ०१४ ॥

सदण्डशूला दीप्ताग्राः शीर्यमाणाः समन्ततः ।
उल्का भूमिं दिवः पेतुराहत्य रविमण्डलम् ॥ ०१५ ॥

मृगाश्च माहिषाश्चापि पक्षिणश्च विशां पते ।
अपसव्यं तदा चक्रुः सेनां ते बहुशो नृप ॥ ०१६ ॥

ततस्तद्युद्धमत्युग्रमभवत्संघचारिणाम् ।
तथा सर्वाण्यनीकानि संनिपत्य जनाधिप  ॥ ०१७  ॥

अभ्ययुः कौरवा राजन्पाण्डवानामनीकिनीम्  ॥ ०१७  ॥

शल्यस्तु शरवर्षेण वर्षन्निव सहस्रदृक् ।
अभ्यवर्षददीनात्मा कुन्तीपुत्रं युधिष्ठिरम्  ॥ ०१८  ॥

भीमसेनं शरैश्चापि रुक्मपुङ्खैः शिलाशितः ।
द्रौपदेयांस्तथा सर्वान्माद्रीपुत्रौ च पाण्डवौ  ॥ ०१९  ॥

धृष्टद्युम्नं च शैनेयं शिखण्डिनमथापि च ।
एकैकं दशभिर्बाणैर्विव्याध च महाबलः  ॥ ०२०  ॥

ततोऽसृजद्बाणवर्षं घर्मान्ते मघवानिव  ॥ ०२०  ॥

ततः प्रभद्रका राजन्सोमकाश्च सहस्रशः ।
पतिताः पात्यमानाश्च दृश्यन्ते शल्यसायकैः  ॥ ०२१  ॥

भ्रमराणामिव व्राताः शलभानामिव व्रजाः ।
ह्रादिन्य इव मेघेभ्यः शल्यस्य न्यपतञ्शराः  ॥ ०२२  ॥

द्विरदास्तुरगाश्चार्ताः पत्तयो रथिनस्तथा ।
शल्यस्य बाणैर्न्यपतन्बभ्रमुर्व्यनदंस्तथा  ॥ ०२३  ॥

आविष्ट इव मद्रेशो मन्युना पौरुषेण च ।
प्राच्छादयदरीन्संख्ये कालसृष्ट इवान्तकः  ॥ ०२४  ॥

विनर्दमानो मद्रेशो मेघह्रादो महाबलः  ॥ ०२४  ॥

सा वध्यमाना शल्येन पाण्डवानामनीकिनी ।

अजातशत्रुं कौन्तेयमभ्यधावद्युधिष्ठिरम्  ॥ ०२५  ॥

तां समर्प्य ततः संख्ये लघुहस्तः शितैः शरैः ।
शरवर्षेण महता युधिष्ठिरमपीडयत्  ॥ ०२६  ॥

तमापतन्तं पत्त्यश्वैः क्रुद्धो राजा युधिष्ठिरः ।
अवारयच्छरैस्तीक्ष्णैर्मत्तं द्विपमिवाङ्कुशैः  ॥ ०२७  ॥

तस्य शल्यः शरं घोरं मुमोचाशीविषोपमम् ।
सोऽभ्यविध्यन्महात्मानं वेगेनाभ्यपतच्च गाम्  ॥ ०२८  ॥

ततो वृकोदरः क्रुद्धः शल्यं विव्याध सप्तभिः ।
पञ्चभिः सहदेवस्तु नकुलो दशभिः शरैः  ॥ ०२९  ॥

द्रौपदेयाश्च शत्रुघ्नं शूरमार्तायनिं शरैः ।
अभ्यवर्षन्महाभागं मेघा इव महीधरम्  ॥ ०३०  ॥

ततो दृष्ट्वा तुद्यमानं शल्यं पार्थैः समन्ततः ।
कृतवर्मा कृपश्चैव सङ्क्रुद्धावभ्यधावताम्  ॥ ०३१  ॥

उलूकश्च पतत्री च शकुनिश्चापि सौबलः ।
स्मयमानश्च शनकैरश्वत्थामा महारथः  ॥ ०३२  ॥

तव पुत्राश्च कार्त्स्न्येन जुगुपुः शल्यमाहवे  ॥ ०३२  ॥

भीमसेनं त्रिभिर्विद्ध्वा कृतवर्मा शिलीमुखैः ।
बाणवर्षेण महता क्रुद्धरूपमवारयत्  ॥ ०३३  ॥

धृष्टद्युम्नं कृपः क्रुद्धो बाणवर्षैरपीडयत् ।
द्रौपदेयांश्च शकुनिर्यमौ च द्रौणिरभ्ययात्  ॥ ०३४  ॥

दुर्योधनो युधां श्रेष्ठावाहवे केशवार्जुनौ ।
समभ्ययादुग्रतेजाः शरैश्चाभ्यहनद्बली ॥ ०३५ ॥

एवं द्वंद्वशतान्यासंस्त्वदीयानां परैः सह ।
घोररूपाणि चित्राणि तत्र तत्र विशां पते ॥ ०३६ ॥

ऋश्यवर्णाञ्जघानाश्वान्भोजो भीमस्य संयुगे ।
सोऽवतीर्य रथोपस्थाद्धताश्वः पाण्डुनन्दनः ॥ ०३७ ॥

कालो दण्डमिवोद्यम्य गदापाणिरयुध्यत ॥ ०३७ ॥

प्रमुखे सहदेवस्य जघानाश्वांश्च मद्रराट् ।
ततः शल्यस्य तनयं सहदेवोऽसिनावधीत् ॥ ०३८ ॥

गौतमः पुनराचार्यो धृष्टद्युम्नमयोधयत् ।
असंभ्रान्तमसंभ्रान्तो यत्नवान्यत्नवत्तरम् ॥ ०३९ ॥

द्रौपदेयांस्तथा वीरानेकैकं दशभिः शरैः ।
अविध्यदाचार्यसुतो नातिक्रुद्धः स्मयन्निव ॥ ०४० ॥

शल्योऽपि राजन्सङ्क्रुद्धो निघ्नन्सोमकपाण्डवान् ।
पुनरेव शितैर्बाणैर्युधिष्ठिरमपीडयत् ॥ ०४१ ॥

तस्य भीमो रणे क्रुद्धः संदष्टदशनच्छदः ।
विनाशायाभिसंधाय गदामादत्त वीर्यवान् ॥ ०४२ ॥

यमदण्डप्रतीकाशां कालरात्रिमिवोद्यताम् ।
गजवाजिमनुष्याणां प्राणान्तकरणीमपि ॥ ०४३ ॥

हेमपट्टपरिक्षिप्तामुल्कां प्रज्वलितामिव ।
शैक्यां व्यालीमिवात्युग्रां वज्रकल्पामयस्मयीम् ॥ ०४४ ॥

चन्दनागुरुपङ्काक्तां प्रमदामीप्सितामिव ।
वसामेदोसृगादिग्धां जिह्वां वैवस्वतीमिव ॥ ०४५ ॥

पटुघण्टारवशतां वासवीमशनीमिव ।
निर्मुक्ताशीविषाकारां पृक्तां गजमदैरपि ॥ ०४६ ॥

त्रासनीं रिपुसैन्यानां स्वसैन्यपरिहर्षिणीम् ।
मनुष्यलोके विख्यातां गिरिशृङ्गविदारिणीम् ॥ ०४७ ॥

यया कैलासभवने महेश्वरसखं बली ।
आह्वयामास कौन्तेयः सङ्क्रुद्धमलकाधिपम् ॥ ०४८ ॥

यया मायाविनो दृप्तान्सुबहून्धनदालये ।
जघान गुह्यकान्क्रुद्धो मन्दारार्थे महाबलः ॥ ०४९ ॥

निवार्यमाणो बहुभिर्द्रौपद्याः प्रियमास्थितः ॥ ०४९ ॥

तां वज्रमणिरत्नौघामष्टाश्रिं वज्रगौरवाम् ।
समुद्यम्य महाबाहुः शल्यमभ्यद्रवद्रणे ॥ ०५० ॥

गदया युद्धकुशलस्तया दारुणनादया ।
पोथयामास शल्यस्य चतुरोऽश्वान्महाजवान् ॥ ०५१ ॥

ततः शल्यो रणे क्रुद्धः पीने वक्षसि तोमरम् ।
निचखान नदन्वीरो वर्म भित्त्वा च सोऽभ्यगात् ॥ ०५२ ॥

वृकोदरस्त्वसंभ्रातस्तमेवोद्धृत्य तोमरम् ।
यन्तारं मद्रराजस्य निर्बिभेद ततो हृदि ॥ ०५३ ॥

स भिन्नवर्मा रुधिरं वमन्वित्रस्तमानसः ।

पपाताभिमुखो दीनो मद्रराजस्त्वपाक्रमत्  ॥ ०५४  ॥

कृतप्रतिकृतं दृष्ट्वा शल्यो विस्मितमानसः ।
गदामाश्रित्य धीरात्मा प्रत्यमित्रमवैक्षत  ॥ ०५५  ॥

ततः सुमनसः पार्था भीमसेनमपूजयन् ।
तद्दृष्ट्वा कर्म सङ्ग्रामे घोरमक्लिष्टकर्मणः  ॥ ०५६  ॥

---

# अध्याय ०११

सञ्जय उवाच  ॥

पतितं प्रेक्ष्य यन्तारं शल्यः सर्वायसीं गदाम् ।
आदाय तरसा राजंस्तस्थौ गिरिरिवाचलः  ॥ ००१  ॥

तं दीप्तमिव कालाग्निं पाशहस्तमिवान्तकम् ।
सशृङ्गमिव कैलासं सवज्रमिव वासवम्  ॥ ००२  ॥

सशूलमिव हर्यक्षं वने मत्तमिव द्विपम् ।
जवेनाभ्यपतद्भीमः प्रगृह्य महतीं गदाम्  ॥ ००३  ॥

ततः शङ्खप्रणादश्च तूर्याणां च सहस्रशः ।
सिंहनादश्च सञ्जज्ञे शूराणां हर्षवर्धनः  ॥ ००४  ॥

प्रेक्षन्तः सर्वतस्तौ हि योधा योधमहाद्विपौ ।
तावकाश्च परे चैव साधु साध्वित्यथाब्रुवन्  ॥ ००५  ॥

न हि मद्राधिपादन्यो रामाद्वा यदुनन्दनात् ।

सोढुमुत्सहते वेगं भीमसेनस्य संयुगे ॥ ००६ ॥

तथा मद्राधिपस्यापि गदावेगं महात्मनः ।
सोढुमुत्सहते नान्यो योधो युधि वृकोदरात् ॥ ००७ ॥

तौ वृषाविव नर्दन्तौ मण्डलानि विचेरतुः ।
आवल्गितौ गदाहस्तौ मद्रराजवृकोदरौ ॥ ००८ ॥

मण्डलावर्तमार्गेषु गदाविहरणेषु च ।
निर्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः ॥ ००९ ॥

तप्तहेममयैः शुभ्रैर्बभूव भयवर्धनी ।
अग्निज्वालैरिवाविद्धा पट्टैः शल्यस्य सा गदा ॥ ०१० ॥

तथैव चरतो मार्गान्मण्डलेषु महात्मनः ।
विद्युदभ्रप्रतीकाशा भीमस्य शुशुभे गदा ॥ ०११ ॥

ताडिता मद्रराजेन भीमस्य गदया गदा ।
दीप्यमानेव वै राजन्ससृजे पावकार्चिषः ॥ ०१२ ॥

तथा भीमेन शल्यस्य ताडिता गदया गदा ।
अङ्गारवर्षं मुमुचे तदद्भुतमिवाभवत् ॥ ०१३ ॥

दन्तैरिव महानागौ शृङ्गैरिव महर्षभौ ।
तोत्त्रैरिव तदान्योन्यं गदाग्राभ्यां निजघ्नतुः ॥ ०१४ ॥

तौ गदानिहतैर्गात्रैः क्षणेन रुधिरोक्षितौ ।
प्रेक्षणीयतरावास्तां पुष्पिताविव किंशुकौ ॥ ०१५ ॥

गदया मद्रराजेन सव्यदक्षिणमाहतः ।
भीमसेनो महाबाहुर्न चचालाचलो यथा ॥ ०१६ ॥

तथा भीमगदावेगैस्ताड्यमानो मुहुर्मुहुः ।
शल्यो न विव्यथे राजन्दन्तिनेवाहतो गिरिः ॥ ०१७ ॥

शुश्रुवे दिक्षु सर्वासु तयोः पुरुषसिंहयोः ।
गदानिपातसंह्रादो वज्रयोरिव निस्वनः ॥ ०१८ ॥

निवृत्य तु महावीर्यौ समुच्छ्रितगदावुभौ ।
पुनरन्तरमार्गस्थौ मण्डलानि विचेरतुः ॥ ०१९ ॥

अथाभ्येत्य पदान्यष्टौ संनिपातोऽभवत्तयोः ।
उद्यम्य लोहदण्डाभ्यामतिमानुषकर्मणोः ॥ ०२० ॥

प्रार्थयानौ तदान्योऽन्यं मण्डलानि विचेरतुः ।
क्रियाविशेषं कृतिनौ दर्शयामासतुस्तदा ॥ ०२१ ॥

अथोद्यम्य गदे घोरे सशृङ्गाविव पर्वतौ ।
तावाजघ्नतुरन्योन्यं यथा भूमिचलेऽचलौ ॥ ०२२ ॥

तौ परस्परवेगाच्च गदाभ्यां च भृशाहतौ ।
युगपत्पेततुर्वीरावुभाविन्द्रध्वजाविव ॥ ०२३ ॥

उभयोः सेनयोर्वीरास्तदा हाहाकृतोऽभवन् ।
भृशं मर्मण्यभिहतावुभावास्तां सुविह्वलौ ॥ ०२४ ॥

ततः सगदमारोप्य मद्राणामृषभं रथे ।
अपोवाह कृपः शल्यं तूर्णमायोधनादपि ॥ ०२५ ॥

क्षीबवद्विह्वलत्वात्तु निमेषात्पुनरुत्थितः ।
भीमसेनो गदापाणिः समाह्वयत मद्रपम् ॥ ०२६ ॥

ततस्तु तावकाः शूरा नानाशस्त्रसमायुताः ।
नानावादित्रशब्देन पाण्डुसेनामयोधयन् ॥ ०२७ ॥

भुजावुच्छ्रित्य शस्त्रं च शब्देन महता ततः ।
अभ्यद्रवन्महाराज दुर्योधनपुरोगमाः ॥ ०२८ ॥

तदनीकमभिप्रेक्ष्य ततस्ते पाण्डुनन्दनाः ।
प्रययुः सिंहनादेन दुर्योधनवधेप्सया ॥ ०२९ ॥

तेषामापततां तूर्णं पुत्रस्ते भरतर्षभ ।
प्रासेन चेकितानं वै विव्याध हृदये भृशम् ॥ ०३० ॥

स पपात रथोपस्थे तव पुत्रेण ताडितः ।
रुधिरौघपरिक्लिन्नः प्रविश्य विपुलं तमः ॥ ०३१ ॥

चेकितानं हतं दृष्ट्वा पाण्डवानां महारथाः ।
प्रसक्तमभ्यवर्षन्त शरवर्षाणि भागशः ॥ ०३२ ॥

तावकानामनीकेषु पाण्डवा जितकाशिनः ।
व्यचरन्त महाराज प्रेक्षणीयाः समन्ततः ॥ ०३३ ॥

कृपश्च कृतवर्मा च सौबलश्च महाबलः ।
अयोधयन्धर्मराजं मद्रराजपुरस्कृताः ॥ ०३४ ॥

भारद्वाजस्य हन्तारं भूरिवीर्यपराक्रमम् ।
दुर्योधनो महाराज धृष्टद्युम्नमयोधयत् ॥ ०३५ ॥

त्रिसाहस्रा रथा राजंस्तव पुत्रेण चोदिताः ।
अयोधयन्त विजयं द्रोणपुत्रपुरस्कृताः ॥ ०३६ ॥

विजये धृतसङ्कल्पाः समभित्यक्तजीविताः ।

प्राविशंस्तावका राजन्हंसा इव महत्सरः ॥ ०३७ ॥

ततो युद्धमभूद्घोरं परस्परवधैषिणाम् ।
अन्योन्यवधसंयुक्तमन्योन्यप्रीतिवर्धनम् ॥ ०३८ ॥

तस्मिन्प्रवृत्ते सङ्ग्रामे राजन्वीरवरक्षये ।
अनिलेनेरितं घोरमुत्तस्थौ पार्थिवं रजः ॥ ०३९ ॥

श्रवणान्नामधेयानां पाण्डवानां च कीर्तनात् ।
परस्परं विजानीमो ये चायुध्यन्नभीतवत् ॥ ०४० ॥

तद्रजः पुरुषव्याघ्र शोणितेन प्रशामितम् ।
दिशश्च विमला जज्ञुस्तस्मिन्रजसि शामिते ॥ ०४१ ॥

तथा प्रवृत्ते सङ्ग्रामे घोररूपे भयानके ।
तावकानां परेषां च नासीत्कश्चित्पराङ्मुखः ॥ ०४२ ॥

ब्रह्मलोकपरा भूत्वा प्रार्थयन्तो जयं युधि ।
सुयुद्धेन पराक्रान्ता नराः स्वर्गमभीप्सवः ॥ ०४३ ॥

भर्तृपिण्डविमोक्षार्थं भर्तृकार्यविनिश्चिताः ।
स्वर्गसंसक्तमनसो योधा युयुधिरे तदा ॥ ०४४ ॥

नानारूपाणि शस्त्राणि विसृजन्तो महारथाः ।
अन्योन्यमभिगर्जन्तः प्रहरन्तः परस्परम् ॥ ०४५ ॥

हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत ।
इति स्म वाचः श्रूयन्ते तव तेषां च वै बले ॥ ०४६ ॥

ततः शल्यो महाराज धर्मराजं युधिष्ठिरम् ।
विव्याध निशितैर्बाणैर्हन्तुकामो महारथम् ॥ ०४७ ॥

तस्य पार्थो महाराज नाराचान्वै चतुर्दश ।
मर्माण्युद्दिश्य मर्मज्ञो निचखान हसन्निव ॥ ०४८ ॥

तं वार्य पाण्डवं बाणैर्हन्तुकामो महायशाः ।
विव्याध समरे क्रुद्धो बहुभिः कङ्कपत्रिभिः ॥ ०४९ ॥

अथ भूयो महाराज शरेण नतपर्वणा ।
युधिष्ठिरं समाजघ्ने सर्वसैन्यस्य पश्यतः ॥ ०५० ॥

धर्मराजोऽपि सङ्क्रुद्धो मद्रराजं महायशाः ।
विव्याध निशितैर्बाणैः कङ्कबर्हिणवाजितैः ॥ ०५१ ॥

चन्द्रसेनं च सप्तत्या सूतं च नवभिः शरैः ।
द्रुमसेनं चतुःषष्ट्या निजघान महारथः ॥ ०५२ ॥

चक्ररक्षे हते शल्यः पाण्डवेन महात्मना ।
निजघान ततो राजंश्चेदीन्वै पञ्चविंशतिम् ॥ ०५३ ॥

सात्यकिं पञ्चविंशत्या भीमसेनं च पञ्चभिः ।
माद्रीपुत्रौ शतेनाजौ विव्याध निशितैः शरैः ॥ ०५४ ॥

एवं विचरतस्तस्य सङ्ग्रामे राजसत्तम ।
संप्रेषयच्छितान्पार्थः शरानाशीविषोपमान् ॥ ०५५ ॥

ध्वजाग्रं चास्य समरे कुन्तीपुत्रो युधिष्ठिरः ।
प्रमुखे वर्तमानस्य भल्लेनापहरद्रथात् ॥ ०५६ ॥

पाण्डुपुत्रेण वै तस्य केतुं छिन्नं महात्मना ।
निपतन्तमपश्याम गिरिशृङ्गमिवाहतम् ॥ ०५७ ॥

ध्वजं निपतितं दृष्ट्वा पाण्डवं च व्यवस्थितम् ।
सङ्क्रुद्धो मद्रराजोऽभूच्छरवर्षं मुमोच ह ॥ ०५८ ॥

शल्यः सायकवर्षेण पर्जन्य इव वृष्टिमान् ।
अभ्यवर्षदमेयात्मा क्षत्रियं क्षत्रियर्षभः ॥ ०५९ ॥

सात्यकिं भीमसेनं च माद्रीपुत्रौ च पाण्डवौ ।
एकैकं पञ्चभिर्विद्ध्वा युधिष्ठिरमपीडयत् ॥ ०६० ॥

ततो बाणमयं जालं विततं पाण्डवोरसि ।
अपश्याम महाराज मेघजालमिवोद्गतम् ॥ ०६१ ॥

तस्य शल्यो रणे क्रुद्धो बाणैः संनतपर्वभिः ।
दिशः प्रच्छादयामास प्रदिशश्च महारथः ॥ ०६२ ॥

ततो युधिष्ठिरो राजा बाणजालेन पीडितः ।
बभूव हृतविक्रान्तो जम्भो वृत्रहणा यथा ॥ ०६३ ॥

---

# अध्याय ०१२

सञ्जय उवाच ॥

पीडिते धर्मराजे तु मद्रराजेन मारिष ।
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ॥ ००१ ॥

परिवार्य रथैः शल्यं पीडयामासुराहवे ॥ ००१ ॥

तमेकं बहुभिर्दृष्ट्वा पीड्यमानं महारथैः ।

साधुवादो महाञ्जज्ञे सिद्धाश्चासन्प्रहर्षिताः ॥ ००२ ॥

आश्चर्यमित्यभाषन्त मुनयश्चापि सङ्गताः ॥ ००२ ॥

भीमसेनो रणे शल्यं शल्यभूतं पराक्रमे ।
एकेन विद्ध्वा बाणेन पुनर्विव्याध सप्तभिः ॥ ००३ ॥

सात्यकिश्च शतेनैनं धर्मपुत्रपरीप्सया ।
मद्रेश्वरमवाकीर्य सिंहनादमथानदत् ॥ ००४ ॥

नकुलः पञ्चभिश्चैनं सहदेवश्च सप्तभिः ।
विद्ध्वा तं तु ततस्तूर्णं पुनर्विव्याध सप्तभिः ॥ ००५ ॥

स तु शूरो रणे यत्तः पीडितस्तैर्महारथैः ।
विकृष्य कार्मुकं घोरं वेगघ्नं भारसाधनम् ॥ ००६ ॥

सात्यकिं पञ्चविंशत्या शल्यो विव्याध मारिष ।
भीमसेनं त्रिसप्तत्या नकुलं सप्तभिस्तथा ॥ ००७ ॥

ततः सविशिखं चापं सहदेवस्य धन्विनः ।
छित्त्वा भल्लेन समरे विव्याधैनं त्रिसप्तभिः ॥ ००८ ॥

सहदेवस्तु समरे मातुलं भूरिवर्चसम् ।
सज्यमन्यद्धनुः कृत्वा पञ्चभिः समताडयत् ॥ ००९ ॥

शरैराशीविषाकारैर्ज्वलज्ज्वलनसंनिभैः ॥ ००९ ॥

सारथिं चास्य समरे शरेणानतपर्वणा ।
विव्याध भृशसङ्क्रुद्धस्तं च भूयस्त्रिभिः शरैः ॥ ०१० ॥

भीमसेनस्त्रिसप्तत्या सात्यकिर्नवभिः शरैः ।

धर्मराजस्तथा षष्ठ्या गात्रे शल्यं समर्पयत् ॥ ०११ ॥

ततः शल्यो महाराज निर्विद्धस्तैर्महारथैः ।
सुस्राव रुधिरं गात्रैर्गैरिकं पर्वतो यथा ॥ ०१२ ॥

तांश्च सर्वान्महेष्वासान्पञ्चभिः पञ्चभिः शरैः ।
विव्याध तरसा राजंस्तदद्भुतमिवाभवत् ॥ ०१३ ॥

ततोऽपरेण भल्लेन धर्मपुत्रस्य मारिष ।
धनुश्चिच्छेद समरे सज्यं स सुमहारथः ॥ ०१४ ॥

अथान्यद्धनुरादाय धर्मपुत्रो महारथः ।
साश्वसूतध्वजरथं शल्यं प्राच्छादयच्छरैः ॥ ०१५ ॥

स च्छाद्यमानः समरे धर्मपुत्रस्य सायकैः ।
युधिष्ठिरमथाविध्यद्दशभिर्निशितैः शरैः ॥ ०१६ ॥

सात्यकिस्तु ततः क्रुद्धो धर्मपुत्रे शरार्दिते ।
मद्राणामधिपं शूरं शरौघैः समवारयत् ॥ ०१७ ॥

स सात्यकेः प्रचिच्छेद क्षुरप्रेण महद्धनुः ।
भीमसेनमुखांस्तांश्च त्रिभिस्त्रिभिरताडयत् ॥ ०१८ ॥

तस्य क्रुद्धो महाराज सात्यकिः सत्यविक्रमः ।
तोमरं प्रेषयामास स्वर्णदण्डं महाधनम् ॥ ०१९ ॥

भीमसेनोऽथ नाराचं ज्वलन्तमिव पन्नगम् ।
नकुलः समरे शक्तिं सहदेवो गदां शुभाम् ॥ ०२० ॥

धर्मराजः शतघ्नीं तु जिघांसुः शल्यमाहवे ॥ ०२० ॥

तानापतत एवाशु पञ्चानां वै भुजच्च्युतान् ।
सात्यकिप्रहितं शल्यो भल्लैश्चिच्छेद तोमरम्  ॥ ०२१  ॥

भीमेन प्रहितं चापि शरं कनकभूषणम् ।
द्विधा चिच्छेद समरे कृतहस्तः प्रतापवान्  ॥ ०२२  ॥

नकुलप्रेषितां शक्तिं हेमदण्डां भयावहाम् ।
गदां च सहदेवेन शरौघैः समवारयत्  ॥ ०२३  ॥

शराभ्यां च शतघ्नीं तां राज्ञश्चिच्छेद भारत ।
पश्यतां पाण्डुपुत्राणां सिंहनादं ननाद च  ॥ ०२४  ॥

नामृष्यत्तं तु शैनेयः शत्रोर्विजयमाहवे  ॥ ०२४  ॥

अथान्यद्धनुरादाय सात्यकिः क्रोधमूर्छितः ।
द्वाभ्यां मद्रेश्वरं विद्ध्वा सारथिं च त्रिभिः शरैः  ॥ ०२५  ॥

ततः शल्यो महाराज सर्वांस्तान्दशभिः शरैः ।
विव्याध सुभृशं क्रुद्धस्तोत्त्रैरिव महाद्विपान्  ॥ ०२६  ॥

ते वार्यमाणाः समरे मद्रराज्ञा महारथाः ।
न शेकुः प्रमुखे स्थातुं तस्य शत्रुनिषूदनाः  ॥ ०२७  ॥

ततो दुर्योधनो राजा दृष्ट्वा शल्यस्य विक्रमम् ।
निहतान्पाण्डवान्मेने पाञ्चालानथ सृञ्जयान्  ॥ ०२८  ॥

ततो राजन्महाबाहुर्भीमसेनः प्रतापवान् ।
संत्यज्य मनसा प्राणान्मद्राधिपमयोधयत्  ॥ ०२९  ॥

नकुलः सहदेवश्च सात्यकिश्च महारथः ।
परिवार्य तदा शल्यं समन्ताद्व्यकिरञ्शरैः  ॥ ०३०  ॥

स चतुर्भिर्महेष्वासैः पाण्डवानां महारथैः ।
वृतस्तान्योधयामास मद्रराजः प्रतापवान्  ॥ ०३१  ॥

तस्य धर्मसुतो राजन्क्षुरप्रेण महाहवे ।
चक्ररक्षं जघानाशु मद्रराजस्य पार्थिव  ॥ ०३२  ॥

तस्मिंस्तु निहते शूरे चक्ररक्षे महारथे ।
मद्रराजोऽतिबलवान्सैनिकानास्तृणोच्छरैः  ॥ ०३३  ॥

समाच्छन्नांस्ततस्तांस्तु राजन्वीक्ष्य स सैनिकान् ।
चिन्तयामास समरे धर्मराजो युधिष्ठिरः  ॥ ०३४  ॥

कथं नु न भवेत्सत्यं तन्माधववचो महत् ।
न हि क्रुद्धो रणे राजा क्षपयेत बलं मम  ॥ ०३५  ॥

ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्वज ।
मद्रेश्वरं समासेदुः पीडयन्तः समन्ततः  ॥ ०३६  ॥

नानाशस्त्रौघबहुलां शस्त्रवृष्टिं समुत्थिताम् ।
व्यधमत्समरे राजन्महाभ्राणीव मारुतः  ॥ ०३७  ॥

ततः कनकपुङ्खां तां शल्यक्षिप्तां वियद्गताम् ।
शरवृष्टिमपश्याम शलभानामिवाततिम्  ॥ ०३८  ॥

ते शरा मद्रराजेन प्रेषिता रणमूर्धनि ।
संपतन्तः स्म दृश्यन्ते शलभानां व्रजा इव  ॥ ०३९  ॥

मद्रराजधनुर्मुक्तैः शरैः कनकभूषणैः ।
निरन्तरमिवाकाशं संबभूव जनाधिप  ॥ ०४०  ॥

न पाण्डवानां नास्माकं तत्र कश्चिद्व्यदृश्यत ।
बाणान्धकारे महति कृते तत्र महाभये ॥ ०४१ ॥

मद्रराजेन बलिना लाघवाच्छरवृष्टिभिः ।
लोड्यमानं तथा दृष्ट्वा पाण्डवानां बलार्णवम् ॥ ०४२ ॥

विस्मयं परमं जग्मुर्देवगन्धर्वदानवाः ॥ ०४२ ॥

स तु तान्सर्वतो यत्ताञ्शरैः संपीड्य मारिष ।
धर्मराजमवच्छाद्य सिंहवद्व्यनदन्मुहुः ॥ ०४३ ॥

ते छन्नाः समरे तेन पाण्डवानां महारथाः ।
न शेकुस्तं तदा युद्धे प्रत्युद्यातुं महारथम् ॥ ०४४ ॥

धर्मराजपुरोगास्तु भीमसेनमुखा रथाः ।
न जहुः समरे शूरं शल्यमाहवशोभिनम् ॥ ०४५ ॥

---

# अध्याय ०१३

सञ्जय उवाच ॥

अर्जुनो द्रौणिना विद्धो युद्धे बहुभिरायसैः ।
तस्य चानुचरैः शूरैस्त्रिगर्तानां महारथैः ॥ ००१ ॥

द्रौणिं विव्याध समरे त्रिभिरेव शिलीमुखैः ॥ ००१ ॥

तथेतरान्महेष्वासान्द्वाभ्यां द्वाभ्यां धनञ्जयः ।
भूयश्चैव महाबाहुः शरवर्षैरवाकिरत् ॥ ००२ ॥

शरकण्टकितास्ते तु तावका भरतर्षभ ।
न जहुः समरे पार्थं वध्यमानाः शितैः शरैः ॥ ००३ ॥

तेऽर्जुनं रथवंशेन द्रोणपुत्रपुरोगमाः ।
अयोधयन्त समरे परिवार्य महारथाः ॥ ००४ ॥

तैस्तु क्षिप्ताः शरा राजन्कार्तस्वरविभूषिताः ।
अर्जुनस्य रथोपस्थं पूरयामासुरञ्जसा ॥ ००५ ॥

तथा कृष्णौ महेष्वासौ वृषभौ सर्वधन्विनाम् ।
शरैर्वीक्ष्य वितुन्नाङ्गौ प्रहृष्टौ युद्धदुर्मदौ ॥ ००६ ॥

कूबरं रथचक्राणि ईषा योक्त्राणि चाभिभो ।
युगं चैवानुकर्षं च शरभूतमभूत्तदा ॥ ००७ ॥

नैतादृशं दृष्टपूर्वं राजन्नैव च नः श्रुतम् ।
यादृशं तत्र पार्थस्य तावकाः संप्रचक्रिरे ॥ ००८ ॥

स रथः सर्वतो भाति चित्रपुङ्खैः शितैः शरैः ।
उल्काशतैः संप्रदीप्तं विमानमिव भूतले ॥ ००९ ॥

ततोऽर्जुनो महाराज शरैः संनतपर्वभिः ।
अवाकिरत्तां पृतनां मेघो वृष्ट्या यथाचलम् ॥ ०१० ॥

ते वध्यमानाः समरे पार्थनामाङ्कितैः शरैः ।
पार्थभूतममन्यन्त प्रेक्षमाणास्तथाविधम् ॥ ०११ ॥

ततोऽद्भुतशरज्वालो धनुःशब्दानिलो महान् ।
सेनेन्धनं ददाहाशु तावकं पार्थपावकः ॥ ०१२ ॥

चक्राणां पततां चैव युगानां च धरातले ।
तूणीराणां पताकानां ध्वजानां च रथैः सह ॥ ०१३ ॥

ईषाणामनुकर्षाणां त्रिवेणूनां च भारत ।
अक्षाणामथ योक्त्राणां प्रतोदानां च सर्वशः ॥ ०१४ ॥

शिरसां पततां चैव कुण्डलोष्णीषधारिणाम् ।
भुजानां च महाराज स्कन्धानां च समन्ततः ॥ ०१५ ॥

छत्राणां व्यजनैः सार्धं मुकुटानां च राशयः ।
समदृश्यन्त पार्थस्य रथमार्गेषु भारत ॥ ०१६ ॥

अगम्यरूपा पृथिवी मांसशोणितकर्दमा ।
बभूव भरतश्रेष्ठ रुद्रस्याक्रीडनं यथा ॥ ०१७ ॥

भीरूणां त्रासजननी शूराणां हर्षवर्धनी ॥ ०१७ ॥

हत्वा तु समरे पार्थः सहस्रे द्वे परंतप ।
रथानां सवरूथानां विधूमोऽग्निरिव ज्वलन् ॥ ०१८ ॥

यथा हि भगवानग्निर्जगद्दग्ध्वा चराचरम् ।
विधूमो दृश्यते राजंस्तथा पार्थो महारथः ॥ ०१९ ॥

द्रौणिस्तु समरे दृष्ट्वा पाण्डवस्य पराक्रमम् ।
रथेनातिपताकेन पाण्डवं प्रत्यवारयत् ॥ ०२० ॥

तावुभौ पुरुषव्याघ्रौ श्वेताश्वौ धन्विनां वरौ ।
समीयतुस्तदा तूर्णं परस्परवधैषिणौ ॥ ०२१ ॥

तयोरासीन्महाराज बाणवर्षं सुदारुणम् ।
जीमूतानां यथा वृष्टिस्तपान्ते भरतर्षभ ॥ ०२२ ॥

अन्योन्यस्पर्धिनौ तौ तु शरैः संनतपर्वभिः ।
ततक्षतुर्मृधेऽन्योन्यं शृङ्गाभ्यां वृषभाविव ॥ ०२३ ॥

तयोर्युद्धं महाराज चिरं सममिवाभवत् ।
अस्त्राणां सङ्गमश्चैव घोरस्तत्राभवन्महान् ॥ ०२४ ॥

ततोऽर्जुनं द्वादशभी रुक्मपुङ्खैः सुतेजनैः ।
वासुदेवं च दशभिर्द्रौणिर्विव्याध भारत ॥ ०२५ ॥

ततः प्रहस्य बीभत्सुर्व्याक्षिपद्गाण्डिवं धनुः ।
मानयित्वा मुहूर्तं च गुरुपुत्रं महाहवे ॥ ०२६ ॥

व्यश्वसूतरथं चक्रे सव्यसाची महारथः ।
मृदुपूर्वं ततश्चैनं त्रिभिर्विव्याध सायकैः ॥ ०२७ ॥

हताश्वे तु रथे तिष्ठन्द्रोणपुत्रस्त्वयस्मयम् ।
मुसलं पाण्डुपुत्राय चिक्षेप परिघोपमम् ॥ ०२८ ॥

तमापतन्तं सहसा हेमपट्टविभूषितम् ।
चिच्छेद सप्तधा वीरः पार्थः शत्रुनिबर्हणः ॥ ०२९ ॥

स च्छिन्नं मुसलं दृष्ट्वा द्रौणिः परमकोपनः ।
आददे परिघं घोरं नगेन्द्रशिखरोपमम् ॥ ०३० ॥

चिक्षेप चैव पार्थाय द्रौणिर्युद्धविशारदः ॥ ०३० ॥

तमन्तकमिव क्रुद्धं परिघं प्रेक्ष्य पाण्डवः ।
अर्जुनस्त्वरितो जघ्ने पञ्चभिः सायकोत्तमैः ॥ ०३१ ॥

स च्छिन्नः पतितो भूमौ पार्थबाणैर्महाहवे ।

दारयन्पृथिवीन्द्राणां मनः शब्देन भारत ॥ ०३२ ॥

ततोऽपरैस्त्रिभिर्बाणैर्द्रौणिं विव्याध पाण्डवः ।
सोऽतिविद्धो बलवता पार्थेन सुमहाबलः ॥ ०३३ ॥

न संभ्रान्तस्तदा द्रौणिः पौरुषे स्वे व्यवस्थितः ॥ ०३३ ॥

सुधर्मा तु ततो राजन्भारद्वाजं महारथम् ।
अवाकिरच्छरव्रातैः सर्वक्षत्रस्य पश्यतः ॥ ०३४ ॥

ततस्तु सुरथोऽप्याजौ पाञ्चालानां महारथः ।
रथेन मेघघोषेण द्रौणिमेवाभ्यधावत ॥ ०३५ ॥

विकर्षन्वै धनुः श्रेष्ठं सर्वभारसहं दृढम् ।
ज्वलनाशीविषनिभैः शरैश्चैनमवाकिरत् ॥ ०३६ ॥

सुरथं तु ततः क्रुद्धमापतन्तं महारथम् ।
चुकोप समरे द्रौणिर्दण्डाहत इवोरगः ॥ ०३७ ॥

त्रिशिखां भ्रुकुटीं कृत्वा सृक्किणी परिलेलिहन् ।
उद्वीक्ष्य सुरथं रोषाद्धनुर्ज्यामवमृज्य च ॥ ०३८ ॥

मुमोच तीक्ष्णं नाराचं यमदण्डसमद्युतिम् ॥ ०३८ ॥

स तस्य हृदयं भित्त्वा प्रविवेशातिवेगतः ।
शक्राशनिरिवोत्सृष्टा विदार्य धरणीतलम् ॥ ०३९ ॥

ततस्तं पतितं भूमौ नाराचेन समाहतम् ।
वज्रेणेव यथा शृङ्गं पर्वतस्य महाधनम् ॥ ०४० ॥

तस्मिंस्तु निहते वीरे द्रोणपुत्रः प्रतापवान् ।

आरुरोह रथं तूर्णं तमेव रथिनां वरः ॥ ०४१ ॥

ततः सज्जो महाराज द्रौणिराहवदुर्मदः ।
अर्जुनं योधयामास संशप्तकवृतो रणे ॥ ०४२ ॥

तत्र युद्धं महच्चासीदर्जुनस्य परैः सह ।
मध्यंदिनगते सूर्ये यमराष्ट्रविवर्धनम् ॥ ०४३ ॥

तत्राश्चर्यमपश्याम दृष्ट्वा तेषां पराक्रमम् ।
यदेको युगपद्वीरान्समयोधयदर्जुनः ॥ ०४४ ॥

विमर्दस्तु महानासीदर्जुनस्य परैः सह ।
शतक्रतोर्यथा पूर्वं महत्या दैत्यसेनया ॥ ०४५ ॥

---

# अध्याय ०१४

सञ्जय उवाच ॥

दुर्योधनो महाराज धृष्टद्युम्नश्च पार्षतः ।
चक्रतुः सुमहद्युद्धं शरशक्तिसमाकुलम् ॥ ००१ ॥

तयोरासन्महाराज शरधाराः सहस्रशः ।
अम्बुदानां यथा काले जलधाराः समन्ततः ॥ ००२ ॥

राजा तु पार्षतं विद्ध्वा शरैः पञ्चभिरायसैः ।
द्रोणहन्तारमुग्रेषुः पुनर्विव्याध सप्तभिः ॥ ००३ ॥

धृष्टद्युम्नस्तु समरे बलवान्दृढविक्रमः ।
सप्तत्या विशिखानां वै दुर्योधनमपीडयत् ॥ ००४ ॥

पीडितं प्रेक्ष्य राजानं सोदर्या भरतर्षभ ।
महत्या सेनया सार्धं परिवव्रुः स्म पार्षतम् ॥ ००५ ॥

स तैः परिवृतः शूरैः सर्वतोऽतिरथैर्भृशम् ।
व्यचरत्समरे राजन्दर्शयन्हस्तलाघवम् ॥ ००६ ॥

शिखण्डी कृतवर्माणं गौतमं च महारथम् ।
प्रभद्रकैः समायुक्तो योधयामास धन्विनौ ॥ ००७ ॥

तत्रापि सुमहद्युद्धं घोररूपं विशां पते ।
प्राणान्संत्यजतां युद्धे प्राणद्यूताभिदेवने ॥ ००८ ॥

शल्यस्तु शरवर्षाणि विमुञ्चन्सर्वतोदिशम् ।
पाण्डवान्पीडयामासससात्यकिवृकोदरान् ॥ ००९ ॥

तथोभौ च यमौ युद्धे यमतुल्यपराक्रमौ ।
योधयामास राजेन्द्र वीर्येण च बलेन च ॥ ०१० ॥

शल्यसायकनुन्नानां पाण्डवानां महामृधे ।
त्रातारं नाध्यगच्छन्त केचित्तत्र महारथाः ॥ ०११ ॥

ततस्तु नकुलः शूरो धर्मराजे प्रपीडिते ।
अभिदुद्राव वेगेन मातुलं माद्रिनन्दनः ॥ ०१२ ॥

संछाद्य समरे शल्यं नकुलः परवीरहा ।
विव्याध चैनं दशभिः स्मयमानः स्तनान्तरे ॥ ०१३ ॥

सर्वपारशवैर्बाणैः कर्मारपरिमार्जितैः ।

स्वर्णपुङ्खैः शिलाधौतैर्धनुर्यन्त्रप्रचोदितैः ॥ ०१४ ॥

शल्यस्तु पीडितस्तेन स्वस्रीयेण महात्मना ।
नकुलं पीडयामास पत्रिभिर्नतपर्वभिः ॥ ०१५ ॥

ततो युधिष्ठिरो राजा भीमसेनोऽथ सात्यकिः ।
सहदेवश्च माद्रेयो मद्रराजमुपाद्रवन् ॥ ०१६ ॥

तानापतत एवाशु पूरयानान्रथस्वनैः ।
दिशश्च प्रदिशश्चैव कम्पयानांश्च मेदिनीम् ॥ ०१७ ॥

प्रतिजग्राह समरे सेनापतिरमित्रजित् ॥ ०१७ ॥

युधिष्ठिरं त्रिभिर्विद्ध्वा भीमसेनं च सप्तभिः ।
सात्यकिं च शतेनाजौ सहदेवं त्रिभिः शरैः ॥ ०१८ ॥

ततस्तु सशरं चापं नकुलस्य महात्मनः ।
मद्रेश्वरः क्षुरप्रेण तदा चिच्छेद मारिष ॥ ०१९ ॥

तदशीर्यत विच्छिन्नं धनुः शल्यस्य सायकैः ॥ ०१९ ॥

अथान्यद्धनुरादाय माद्रीपुत्रो महारथः ।
मद्रराजरथं तूर्णं पूरयामास पत्रिभिः ॥ ०२० ॥

युधिष्ठिरस्तु मद्रेशं सहदेवश्च मारिष ।
दशभिर्दशभिर्बाणैरुरस्येनमविध्यताम् ॥ ०२१ ॥

भीमसेनस्ततः षष्ट्या सात्यकिर्नवभिः शरैः ।
मद्रराजमभिद्रुत्य जघ्नतुः कङ्कपत्रिभिः ॥ ०२२ ॥

मद्रराजस्ततः क्रुद्धः सात्यकिं नवभिः शरैः ।

विव्याध भूयः सप्तत्या शराणां नतपर्वणाम्  ॥ ०२३  ॥

अथास्य सशरं चापं मुष्टौ चिच्छेद मारिष ।
हयांश्च चतुरः संख्ये प्रेषयामास मृत्यवे  ॥ ०२४  ॥

विरथं सात्यकिं कृत्वा मद्रराजो महाबलः ।
विशिखानां शतेनैनमाजघान समन्ततः  ॥ ०२५  ॥

माद्रीपुत्रौ तु संरब्धौ भीमसेनं च पाण्डवम् ।
युधिष्ठिरं च कौरव्य विव्याध दशभिः शरैः  ॥ ०२६  ॥

तत्राद्भुतमपश्याम मद्रराजस्य पौरुषम् ।
यदेनं सहिताः पार्था नाभ्यवर्तन्त संयुगे  ॥ ०२७  ॥

अथान्यं रथमास्थाय सात्यकिः सत्यविक्रमः ।
पीडितान्पाण्डवान्दृष्ट्वा मद्रराजवशं गतान्  ॥ ०२८  ॥

अभिदुद्राव वेगेन मद्राणामधिपं बली  ॥ ०२८  ॥

आपतन्तं रथं तस्य शल्यः समितिशोभनः ।
प्रत्युद्ययौ रथेनैव मत्तो मत्तमिव द्विपम्  ॥ ०२९  ॥

स संनिपातस्तुमुलो बभूवाद्भुतदर्शनः ।
सात्यकेश्चैव शूरस्य मद्राणामधिपस्य च  ॥ ०३०  ॥

यादृशो वै पुरा वृत्तः शम्बरामरराजयोः  ॥ ०३०  ॥

सात्यकिः प्रेक्ष्य समरे मद्रराजं व्यवस्थितम् ।
विव्याध दशभिर्बाणैस्तिष्ठ तिष्ठेति चाब्रवीत्  ॥ ०३१  ॥

मद्रराजस्तु सुभृशं विद्धस्तेन महात्मना ।

सात्यकिं प्रतिविव्याध चित्रपुङ्खैः शितैः शरैः ॥ ०३२ ॥

ततः पार्था महेष्वासाः सात्वताभिसृतं नृपम् ।
अभ्यद्रवन्रथैस्तूर्णं मातुलं वधकाम्यया ॥ ०३३ ॥

तत आसीत्परामर्दस्तुमुलः शोणितोदकः ।
शूराणां युध्यमानानां सिंहानामिव नर्दताम् ॥ ०३४ ॥

तेषामासीन्महाराज व्यतिक्षेपः परस्परम् ।
सिंहानामामिषेप्सूनां कूजतामिव संयुगे ॥ ०३५ ॥

तेषां बाणसहस्रौघैराकीर्णा वसुधाभवत् ।
अन्तरिक्षं च सहसा बाणभूतमभूत्तदा ॥ ०३६ ॥

शरान्धकारं बहुधा कृतं तत्र समन्ततः ।
अभ्रच्छायेव सञ्जज्ञे शरैर्मुक्तैर्महात्मभिः ॥ ०३७ ॥

तत्र राजञ्शरैर्मुक्तैर्निर्मुक्तैरिव पन्नगैः ।
स्वर्णपुङ्खैः प्रकाशद्भिर्व्यरोचन्त दिशस्तथा ॥ ०३८ ॥

तत्राद्भुतं परं चक्रे शल्यः शत्रुनिबर्हणः ।
यदेकः समरे शूरो योधयामास वै बहून् ॥ ०३९ ॥

मद्रराजभुजोत्सृष्टैः कङ्कबर्हिणवाजितैः ।
संपतद्भिः शरैर्घोरैरवाकीर्यत मेदिनी ॥ ०४० ॥

तत्र शल्यरथं राजन्विचरन्तं महाहवे ।
अपश्याम यथा पूर्वं शक्रस्यासुरसङ्क्षये ॥ ०४१ ॥

# अध्याय ०१५

सञ्जय उवाच ॥

ततः सैन्यास्तव विभो मद्रराजपुरस्कृताः ।
पुनरभ्यद्रवन्पार्थान्वेगेन महता रणे ॥ ००१ ॥

पीडितास्तावकाः सर्वे प्रधावन्तो रणोत्कटाः ।
क्षणेनैव च पार्थांस्ते बहुत्वात्समलोडयन् ॥ ००२ ॥

ते वध्यमानाः कुरुभिः पाण्डवा नावतस्थिरे ।
निवार्यमाणा भीमेन पश्यतोः कृष्णपार्थयोः ॥ ००३ ॥

ततो धनञ्जयः क्रुद्धः कृपं सह पदानुगैः ।
अवाकिरच्छरौघेण कृतवर्माणमेव च ॥ ००४ ॥

शकुनिं सहदेवस्तु सहसैन्यमवारयत् ।
नकुलः पार्श्वतः स्थित्वा मद्रराजमवैक्षत ॥ ००५ ॥

द्रौपदेया नरेन्द्रांश्च भूयिष्ठं समवारयन् ।
द्रोणपुत्रं च पाञ्चाल्यः शिखण्डी समवारयत् ॥ ००६ ॥

भीमसेनस्तु राजानं गदापाणिरवारयत् ।
शल्यं तु सह सैन्येन कुन्तीपुत्रो युधिष्ठिरः ॥ ००७ ॥

ततः समभवद्युद्धं संसक्तं तत्र तत्र ह ।
तावकानां परेषां च सङ्ग्रामेष्वनिवर्तिनाम् ॥ ००८ ॥

तत्र पश्यामहे कर्म शल्यस्यातिमहद्रणे ।
यदेकः सर्वसैन्यानि पाण्डवानामयुध्यत ॥ ००९ ॥

व्यदृश्यत तदा शल्यो युधिष्ठिरसमीपतः ।
रणे चन्द्रमसोऽभ्याशे शनैश्चर इव ग्रहः ॥ ०१० ॥

पीडयित्वा तु राजानं शरैराशीविषोपमैः ।
अभ्यधावत्पुनर्भीमं शरवर्षैरवाकिरत् ॥ ०११ ॥

तस्य तल्लाघवं दृष्ट्वा तथैव च कृतास्त्रताम् ।
अपूजयन्ननीकानि परेषां तावकानि च ॥ ०१२ ॥

पीड्यमानास्तु शल्येन पाण्डवा भृशविक्षताः ।
प्राद्रवन्त रणं हित्वा क्रोशमाने युधिष्ठिरे ॥ ०१३ ॥

वध्यमानेष्वनीकेषु मद्रराजेन पाण्डवः ।
अमर्षवशमापन्नो धर्मराजो युधिष्ठिरः ॥ ०१४ ॥

ततः पौरुषमास्थाय मद्रराजमपीडयत् ॥ ०१४ ॥

जयो वास्तु वधो वेति कृतबुद्धिर्महारथः ।
समाहूयाब्रवीत्सर्वान्भ्रातॄन्कृष्णं च माधवम् ॥ ०१५ ॥

भीष्मो द्रोणश्च कर्णश्च ये चान्ये पृथिवीक्षितः ।
कौरवार्थे पराक्रान्ताः सङ्ग्रामे निधनं गताः ॥ ०१६ ॥

यथाभागं यथोत्साहं भवन्तः कृतपौरुषाः ।
भागोऽवशिष्ट एकोऽयं मम शल्यो महारथः ॥ ०१७ ॥

सोऽहमद्य युधा जेतुमाशंसे मद्रकेश्वरम् ।
तत्र यन्मानसं मह्यं तत्सर्वं निगदामि वः ॥ ०१८ ॥

चक्ररक्षाविमौ शूरौ मम माद्रवतीसुतौ ।
अजेयौ वासवेनापि समरे वीरसंमतौ ॥ ०१९ ॥

साध्विमौ मातुलं युद्धे क्षत्रधर्मपुरस्कृतौ ।
मदर्थं प्रतियुध्येतां मानार्हौ सत्यसङ्गरौ ॥ ०२० ॥

मां वा शल्यो रणे हन्ता तं वाहं भद्रमस्तु वः ।
इति सत्यामिमां वाणीं लोकवीरा निबोधत ॥ ०२१ ॥

योत्स्येऽहं मातुलेनाद्य क्षत्रधर्मेण पार्थिवाः ।
स्वयं समभिसंधाय विजयायेतराय वा ॥ ०२२ ॥

तस्य मेऽभ्यधिकं शस्त्रं सर्वोपकरणानि च ।
संयुञ्जन्तु रणे क्षिप्रं शास्त्रवद्रथयोजकाः ॥ ०२३ ॥

शैनेयो दक्षिणं चक्रं धृष्टद्युम्नस्तथोत्तरम् ।
पृष्ठगोपो भवत्वद्य मम पार्थो धनञ्जयः ॥ ०२४ ॥

पुरःसरो ममाद्यास्तु भीमः शस्त्रभृतां वरः ।
एवमभ्यधिकः शल्याद्भविष्यामि महामृधे ॥ ०२५ ॥

एवमुक्तास्तथा चक्रुः सर्वे राज्ञः प्रियैषिणः ।
ततः प्रहर्षः सैन्यानां पुनरासीत्तदा नृप ॥ ०२६ ॥

पाञ्चालानां सोमकानां मत्स्यानां च विशेषतः ।
प्रतिज्ञां तां च सङ्ग्रामे धर्मराजस्य पूरयन् ॥ ०२७ ॥

ततः शङ्खांश्च भेरीश्च शतशश्चैव पुष्करान् ।
अवादयन्त पाञ्चालाः सिंहनादांश्च नेदिरे ॥ ०२८ ॥

तेऽभ्यधावन्त संरब्धा मद्रराजं तरस्विनः ।
महता हर्षजेनाथ नादेन कुरुपुङ्गवाः ॥ ०२९ ॥

ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।
तूर्यशब्देन महता नादयन्तश्च मेदिनीम्  ॥ ०३० ॥

तान्प्रत्यगृह्णात्पुत्रस्ते मद्रराजश्च वीर्यवान् ।
महामेघानिव बहूञ्शैलावस्तोदयावुभौ  ॥ ०३१ ॥

शल्यस्तु समरश्लाघी धर्मराजमरिंदमम् ।
ववर्ष शरवर्षेण वर्षेण मघवानिव  ॥ ०३२ ॥

तथैव कुरुराजोऽपि प्रगृह्य रुचिरं धनुः ।
द्रोणोपदेशान्विविधान्दर्शयानो महामनाः  ॥ ०३३ ॥

ववर्ष शरवर्षाणि चित्रं लघु च सुष्ठु च ।
न चास्य विवरं कश्चिद्ददर्श चरतो रणे  ॥ ०३४ ॥

तावुभौ विविधैर्बाणैस्ततक्षाते परस्परम् ।
शार्दूलावामिषप्रेप्सू पराक्रान्ताविवाहवे  ॥ ०३५ ॥

भीमस्तु तव पुत्रेण रणशौण्डेन सङ्गतः ।
पाञ्चाल्यः सात्यकिश्चैव माद्रीपुत्रौ च पाण्डवौ  ॥ ०३६ ॥

शकुनिप्रमुखान्वीरान्प्रत्यगृह्णन्समन्ततः  ॥ ०३६ ॥

तदासीत्तुमुलं युद्धं पुनरेव जयैषिणाम् ।
तावकानां परेषां च राजन्दुर्मन्त्रिते तव  ॥ ०३७ ॥

दुर्योधनस्तु भीमस्य शरेणानतपर्वणा ।
चिच्छेदादिश्य सङ्ग्रामे ध्वजं हेमविभूषितम्  ॥ ०३८ ॥

सकिङ्किणीकजालेन महता चारुदर्शनः ।
पपात रुचिरः सिंहो भीमसेनस्य नानदन्  ॥ ०३९ ॥

पुनश्चास्य धनुश्चित्रं गजराजकरोपमम् ।
क्षुरेण शितधारेण प्रचकर्त नराधिपः ॥ ०४० ॥

स च्छिन्नधन्वा तेजस्वी रथशक्त्या सुतं तव ।
बिभेदोरसि विक्रम्य स रथोपस्थ आविशत् ॥ ०४१ ॥

तस्मिन्मोहमनुप्राप्ते पुनरेव वृकोदरः ।
यन्तुरेव शिरः कायात्क्षुरप्रेणाहरत्तदा ॥ ०४२ ॥

हतसूता हयास्तस्य रथमादाय भारत ।
व्यद्रवन्त दिशो राजन्हाहाकारस्तदाभवत् ॥ ०४३ ॥

तमभ्यधावत्त्राणार्थं द्रोणपुत्रो महारथः ।
कृपश्च कृतवर्मा च पुत्रं तेऽभिपरीप्सवः ॥ ०४४ ॥

तस्मिन्विलुलिते सैन्ये त्रस्तास्तस्य पदानुगाः ।
गाण्डीवधन्वा विस्फार्य धनुस्तानहनच्छरैः ॥ ०४५ ॥

युधिष्ठिरस्तु मद्रेशमभ्यधावदमर्षितः ।
स्वयं सञ्चोदयन्नश्वान्दन्तवर्णान्मनोजवान् ॥ ०४६ ॥

तत्राद्भुतमपश्याम कुन्तीपुत्रे युधिष्ठिरे ।
पुरा भूत्वा मृदुर्दान्तो यत्तदा दारुणोऽभवत् ॥ ०४७ ॥

विवृताक्षश्च कौन्तेयो वेपमानश्च मन्युना ।
चिच्छेद योधान्निशितैः शरैः शतसहस्रशः ॥ ०४८ ॥

यां यां प्रत्युद्ययौ सेनां तां तां ज्येष्ठः स पाण्डवः ।
शरैरपातयद्राजन्गिरीन्वज्रैरिवोत्तमैः ॥ ०४९ ॥

साश्वसूतध्वजरथान्रथिनः पातयन्बहून् ।
आक्रीडदेको बलवान्पवनस्तोयदानिव ॥ ०५० ॥

साश्वारोहांश्च तुरगान्पत्तींश्चैव सहस्रशः ।
व्यपोथयत सङ्ग्रामे क्रुद्धो रुद्रः पशूनिव ॥ ०५१ ॥

शून्यमायोधनं कृत्वा शरवर्षैः समन्ततः ।
अभ्यद्रवत मद्रेशं तिष्ठ शल्येति चाब्रवीत् ॥ ०५२ ॥

तस्य तच्चरितं दृष्ट्वा सङ्ग्रामे भीमकर्मणः ।
वित्रेसुस्तावकाः सर्वे शल्यस्त्वेनं समभ्ययात् ॥ ०५३ ॥

ततस्तौ तु सुसंरब्धौ प्रध्माप्य सलिलोद्भवौ ।
समाहूय तदान्योन्यं भर्त्सयन्तौ समीयतुः ॥ ०५४ ॥

शल्यस्तु शरवर्षेण युधिष्ठिरमवाकिरत् ।
मद्रराजं च कौन्तेयः शरवर्षैरवाकिरत् ॥ ०५५ ॥

व्यदृश्येतां तदा राजन्कङ्कपत्रिभिराहवे ।
उद्भिन्नरुधिरौ शूरौ मद्रराजयुधिष्ठिरौ ॥ ०५६ ॥

पुष्पिताविव रेजाते वने शल्मलिकिंशुका ।
दीप्यमानौ महात्मानौ प्राणयोर्युद्धदुर्मदौ ॥ ०५७ ॥

दृष्ट्वा सर्वाणि सैन्यानि नाध्यवस्यंस्तयोर्जयम् ।
हत्वा मद्राधिपं पार्थो भोक्ष्यतेऽद्य वसुंधराम् ॥ ०५८ ॥

शल्यो वा पाण्डवं हत्वा दद्याद्दुर्योधनाय गाम् ।
इतीव निश्चयो नाभूद्योधानां तत्र भारत ॥ ०५९ ॥

प्रदक्षिणमभूत्सर्वं धर्मराजस्य युध्यतः ।

ततः शरशतं शल्यो मुमोचाशु युधिष्ठिरे ।
धनुश्चास्य शिताग्रेण बाणेन निरकृन्तत ॥ ०६१ ॥

सोऽन्यत्कार्मुकमादाय शल्यं शरशतैस्त्रिभिः ।
अविध्यत्कार्मुकं चास्य क्षुरेण निरकृन्तत ॥ ०६२ ॥

अथास्य निजघानाश्वांश्चतुरो नतपर्वभिः ।
द्वाभ्यामथ शिताग्राभ्यामुभौ च पार्ष्णिसारथी ॥ ०६३ ॥

ततोऽस्य दीप्यमानेन पीतेन निशितेन च ।
प्रमुखे वर्तमानस्य भल्लेनापाहरद्ध्वजम् ॥ ०६४ ॥

ततः प्रभग्नं तत्सैन्यं दौर्योधनमरिंदम ॥ ०६४ ॥

ततो मद्राधिपं द्रौणिरभ्यधावत्तथाकृतम् ।
आरोप्य चैनं स्वरथं त्वरमाणः प्रदुद्रुवे ॥ ०६५ ॥

मुहूर्तमिव तौ गत्वा नर्दमाने युधिष्ठिरे ।
स्थित्वा ततो मद्रपतिरन्यं स्यन्दनमास्थितः ॥ ०६६ ॥

विधिवत्कल्पितं शुभ्रं महाम्बुदनिनादिनम् ।
सज्जयन्त्रोपकरणं द्विषतां रोमहर्षणम् ॥ ०६७ ॥

---

# अध्याय ०१६

सञ्जय उवाच ॥

अथान्यद्धनुरादाय बलवद्वेगवत्तरम् ।

युधिष्ठिरं मद्रपतिर्विद्ध्वा सिंह इवानदत्  ॥ ००१  ॥

ततः स शरवर्षेण पर्जन्य इव वृष्टिमान् ।
अभ्यवर्षदमेयात्मा क्षत्रियान्क्षत्रियर्षभः  ॥ ००२  ॥

सात्यकिं दशभिर्विद्ध्वा भीमसेनं त्रिभिः शरैः ।
सहदेवं त्रिभिर्विद्ध्वा युधिष्ठिरमपीडयत्  ॥ ००३  ॥

तांस्तानन्यान्महेष्वासान्साश्वान्सरथकुञ्जरान् ।
कुञ्जरान्कुञ्जरारोहानश्वानश्वप्रयायिनः  ॥ ००४  ॥

रथांश्च रथिभिः सार्धं जघान रथिनां वरः  ॥ ००४  ॥

बाहूंश्चिच्छेद च तथा सायुधान्केतनानि च ।
चकार च महीं योधैस्तीर्णां वेदीं कुशैरिव  ॥ ००५  ॥

तथा तमरिसैन्यानि घ्नन्तं मृत्युमिवान्तकम् ।
परिवव्रुर्भृशं क्रुद्धाः पाण्डुपाञ्चालसोमकाः  ॥ ००६  ॥

तं भीमसेनश्च शिनेश्च नप्ता ; माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
समागतं भीमबलेन राज्ञा ; पर्यापुरन्योन्यमथाह्वयन्तः  ॥ ००७  ॥

ततस्तु शूराः समरे नरेन्द्रं ; मद्रेश्वरं प्राप्य युधां वरिष्ठम् ।
आवार्य चैनं समरे नृवीरा ; जघ्नुः शरैः पत्रिभिरुग्रवेगैः  ॥ ००८  ॥

संरक्षितो भीमसेनेन राजा ; माद्रीसुताभ्यामथ माधवेन ।
मद्राधिपं पत्रिभिरुग्रवेगैः ; स्तनान्तरे धर्मसुतो निजघ्ने  ॥ ००९  ॥

ततो रणे तावकानां रथौघाः ; समीक्ष्य मद्राधिपतिं शरार्तम् ।
पर्यावव्रुः प्रवराः सर्वशश्च ; दुर्योधनस्यानुमते समन्तात्  ॥ ०१०  ॥

ततो द्रुतं मद्रजनाधिपो रणे ; युधिष्ठिरं सप्तभिरभ्यविध्यत् ।
तं चापि पार्थो नवभिः पृषत्कै ;र्विव्याध राजंस्तुमुले महात्मा ॥ ०११ ॥

आकर्णपूर्णायतसंप्रयुक्तैः ; शरैस्तदा संयति तैलधौतैः ।
अन्योन्यमाच्छादयतां महारथौ ; मद्राधिपश्चापि युधिष्ठिरश्च ॥ ०१२ ॥

ततस्तु तूर्णं समरे महारथौ ; परस्परस्यान्तरमीक्षमाणौ ।
शरैर्भृशं विव्यधतुर्नृपोत्तमौ ; महाबलौ शत्रुभिरप्रधृष्यौ ॥ ०१३ ॥

तयोर्धनुर्ज्यातलनिस्वनो महा ;न्महेन्द्रवज्राशनितुल्यनिस्वनः ।
परस्परं बाणगणैर्महात्मनोः ; प्रवर्षतोर्मद्रपपाण्डुवीरयोः ॥ ०१४ ॥

तौ चेरतुर्व्याघ्रशिशुप्रकाशौ ; महावनेष्वामिषगृद्धिनाविव ।
विषाणिनौ नागवराविवोभौ ; ततक्षतुः संयुगजातदर्पौ ॥ ०१५ ॥

ततस्तु मद्राधिपतिर्महात्मा ; युधिष्ठिरं भीमबलं प्रसह्य ।
विव्याध वीरं हृदयेऽतिवेगं ; शरेण सूर्याग्निसमप्रभेण ॥ ०१६ ॥

ततोऽतिविद्धोऽथ युधिष्ठिरोऽपि ; सुसंप्रयुक्तेन शरेण राजन् ।
जघान मद्राधिपतिं महात्मा ; मुदं च लेभे ऋषभः कुरूणाम् ॥ ०१७ ॥

ततो मुहूर्तादिव पार्थिवेन्द्रो ; लब्ध्वा सञ्ज्ञां क्रोधसंरक्तनेत्रः ।
शतेन पार्थं त्वरितो जघान ; सहस्रनेत्रप्रतिमप्रभावः ॥ ०१८ ॥

त्वरंस्ततो धर्मसुतो महात्मा ; शल्यस्य क्रुद्धो नवभिः पृषत्कैः ।
भित्त्वा ह्युरस्तपनीयं च वर्म ; जघान षड्भिस्त्वपरैः पृषत्कैः ॥ ०१९ ॥

ततस्तु मद्राधिपतिः प्रहृष्टो ; धनुर्विकृष्य व्यसृजत्पृषत्कान् ।
द्वाभ्यां क्षुराभ्यां च तथैव राज्ञ ;श्चिच्छेद चापं कुरुपुङ्गवस्य ॥ ०२० ॥

नवं ततोऽन्यत्समरे प्रगृह्य ; राजा धनुर्घोरतरं महात्मा ।

शल्यं तु विद्धा निशितैः समन्ता ;द्यथा महेन्द्रो नमुचिं शिताग्रैः ॥ ०२१ ॥

ततस्तु शल्यो नवभिः पृषत्कै ;र्भीमस्य राज्ञश्च युधिष्ठिरस्य ।
निकृत्य रौक्मे पटुवर्मणी तयो ;र्विदारयामास भुजौ महात्मा ॥ ०२२ ॥

ततोऽपरेण ज्वलितार्कतेजसा ; क्षुरेण राज्ञो धनुरुन्ममाथ ।
कृपश्च तस्यैव जघान सूतं ; षड्भिः शरैः सोऽभिमुखं पपात ॥ ०२३ ॥

मद्राधिपश्चापि युधिष्ठिरस्य ; शरैश्चतुर्भिर्निजघान वाहान् ।
वाहांश्च हत्वा व्यकरोन्महात्मा ; योधक्षयं धर्मसुतस्य राज्ञः ॥ ०२४ ॥

तथा कृते राजनि भीमसेनो ; मद्राधिपस्याशु ततो महात्मा ।
छित्त्वा धनुर्वेगवता शरेण ; द्वाभ्यामविध्यत्सुभृशं नरेन्द्रम् ॥ ०२५ ॥

अथापरेणास्य जहार यन्तुः ; कायाच्छिरः संनहनीयमध्यात् ।
जघान चाश्वांश्चतुरः स शीघ्रं ; तथा भृशं कुपितो भीमसेनः ॥ ०२६ ॥

तमग्रणीः सर्वधनुर्धराणा ;मेकं चरन्तं समरेऽतिवेगम् ।
भीमः शतेन व्यकिरच्छराणां ; माद्रीपुत्रः सहदेवस्तथैव ॥ ०२७ ॥

तैः सायकैर्मोहितं वीक्ष्य शल्यं ; भीमः शरैरस्य चकर्त वर्म ।
स भीमसेनेन निकृत्तवर्मा ; मद्राधिपश्चर्म सहस्रतारम् ॥ ०२८ ॥

प्रगृह्य खड्गं च रथान्महात्मा ; प्रस्कन्द्य कुन्तीसुतमभ्यधावत् ।
छित्त्वा रथेषां नकुलस्य सोऽथ ; युधिष्ठिरं भीमबलोऽभ्यधावत् ॥ ०२९ ॥

तं चापि राजानमथोत्पतन्तं ; क्रुद्धं यथैवान्तकमापतन्तम् ।
धृष्टद्युम्नो द्रौपदेयाः शिखण्डी ; शिनेश्च नप्ता सहसा परीयुः ॥ ०३० ॥

अथास्य चर्माप्रतिमं न्यकृन्त ;द्भीमो महात्मा दशभिः पृषत्कः ।
खड्गं च भल्लैर्निचकर्त मुष्टौ ; नदन्प्रहृष्टस्तव सैन्यमध्ये ॥ ०३१ ॥

तत्कर्म भीमस्य समीक्ष्य हृष्टा ;स्ते पाण्डवानां प्रवरा रथौघाः ।
नादं च चक्रुर्भृशमुत्स्मयन्तः ; शङ्खांश्च दध्मुः शशिसंनिकाशान् ॥ ०३२ ॥

तेनाथ शब्देन विभीषणेन ; तवाभितप्तं बलमप्रहृष्टम् ।
स्वेदाभिभूतं रुधिरोक्षिताङ्गं ; विसञ्ज्ञकल्पं च तथा विषण्णम् ॥ ०३३ ॥

स मद्रराजः सहसावकीर्णो ; भीमाग्रगैः पाण्डवयोधमुख्यैः ।
युधिष्ठिरस्याभिमुखं जवेन ; सिंहो यथा मृगहेतोः प्रयातः ॥ ०३४ ॥

स धर्मराजो निहताश्वसूतं ; क्रोधेन दीप्तज्वलनप्रकाशम् ।
दृष्ट्वा तु मद्राधिपतिं स तूर्णं ; समभ्यधावत्तमरिं बलेन ॥ ०३५ ॥

गोविन्दवाक्यं त्वरितं विचिन्त्य ; दध्रे मतिं शल्यविनाशनाय ।
स धर्मराजो निहताश्वसूते ; रथे तिष्ठञ्शक्तिमेवाभिकाङ्क्षन् ॥ ०३६ ॥

तच्चापि शल्यस्य निशम्य कर्म ; महात्मनो भागमथावशिष्टम् ।
स्मृत्वा मनः शल्यवधे यतात्मा ; यथोक्तमिन्द्रावरजस्य चक्रे ॥ ०३७ ॥

स धर्मराजो मणिहेमदण्डां ; जग्राह शक्तिं कनकप्रकाशाम् ।
नेत्रे च दीप्ते सहसा विवृत्य ; मद्राधिपं क्रुद्धमना निरैक्षत् ॥ ०३८ ॥

निरीक्षितो वै नरदेव राज्ञा ; पूतात्मना निर्हृतकल्मषेण ।
अभून्न यद्भस्मसान्मद्रराज ;स्तदद्भुतं मे प्रतिभाति राजन् ॥ ०३९ ॥

ततस्तु शक्तिं रुचिरोग्रदण्डां ; मणिप्रवालोज्ज्वलितां प्रदीप्ताम् ।
चिक्षेप वेगात्सुभृशं महात्मा ; मद्राधिपाय प्रवरः कुरूणाम् ॥ ०४० ॥

दीप्तामथैनां महता बलेन ; सविस्फुलिङ्गां सहसा पतन्तीम् ।
प्रैक्षन्त सर्वे कुरवः समेता ; यथा युगान्ते महतीमिवोल्काम् ॥ ०४१ ॥

तां कालरात्रीमिव पाशहस्तां ; यमस्य धात्रीमिव चोग्ररूपाम् ।
सब्रह्मदण्डप्रतिमाममोघां ; ससर्ज यत्तो युधि धर्मराजः ॥ ०४२ ॥

गन्धस्त्रगग्र्यासनपानभोजनै ;रभ्यर्चितां पाण्डुसुतैः प्रयत्नात् ।
संवर्तकाग्निप्रतिमां ज्वलन्तीं ; कृत्यामथर्वाङ्गिरसीमिवोग्राम् ॥ ०४३ ॥

ईशानहेतोः प्रतिनिर्मितां तां ; त्वष्ट्रा रिपूणामसुदेहभक्षाम् ।
भूम्यन्तरिक्षादिजलाशयानि ; प्रसह्य भूतानि निहन्तुमीशाम् ॥ ०४४ ॥

घण्टापताकामणिवज्रभाजं ; वैडूर्यचित्रां तपनीयदण्डाम् ।
त्वष्ट्रा प्रयत्नान्नियमेन क्लृप्तां ; ब्रह्मद्विषामन्तकरीममोघाम् ॥ ०४५ ॥

बलप्रयत्नादधिरूढवेगां ; मन्त्रैश्च घोरैरभिमन्त्रयित्वा ।
ससर्ज मार्गेण च तां परेण ; वधाय मद्राधिपतेस्तदानीम् ॥ ०४६ ॥

हतोऽस्यसावित्यभिगर्जमानो ; रुद्रोऽन्तकायान्तकरं यथेषुम् ।
प्रसार्य बाहुं सुदृढं सुपाणिं ; क्रोधेन नृत्यन्निव धर्मराजः ॥ ०४७ ॥

तां सर्वशक्त्या प्रहितां स शक्तिं ; युधिष्ठिरेणाप्रतिवार्यवीर्याम् ।
प्रतिग्रहायाभिननर्द शल्यः ; सम्यग्घुतामग्निरिवाज्यधाराम् ॥ ०४८ ॥

सा तस्य मर्माणि विदार्य शुभ्र ;मुरो विशालं च तथैव वर्म ।
विवेश गां तोयमिवाप्रसक्ता ; यशो विशालं नृपतेर्दहन्ती ॥ ०४९ ॥

नासाक्षिकर्णास्यविनिःसृतेन ; प्रस्यन्दता च व्रणसंभवेन ।
संसिक्तगात्रो रुधिरेण सोऽभू ;त्क्रौञ्चो यथा स्कन्दहतो महाद्रिः ॥ ०५० ॥

प्रसार्य बाहू स रथाद्गतो गां ; संछिन्नवर्मा कुरुनन्दनेन ।
महेन्द्रवाहप्रतिमो महात्मा ; वज्राहतं शृङ्गमिवाचलस्य ॥ ०५१ ॥

बाहू प्रसार्याभिमुखो धर्मराजस्य मद्रराट् ।

ततो निपतितो भूमाविन्द्रध्वज इवोच्छ्रितः ॥ ०५२ ॥

स तथा भिन्नसर्वाङ्गो रुधिरेण समुक्षितः ।
प्रत्युद्गत इव प्रेम्णा भूम्या स नरपुङ्गवः ॥ ०५३ ॥

प्रियया कान्तया कान्तः पतमान इवोरसि ।
चिरं भुक्त्वा वसुमतीं प्रियां कान्तामिव प्रभुः ॥ ०५४ ॥

सर्वैरङ्गैः समाश्लिष्य प्रसुप्त इव सोऽभवत् ॥ ०५४ ॥

धर्म्ये धर्मात्मना युद्धे निहतो धर्मसूनुना ।
सम्यग्घुत इव स्विष्टः प्रशान्तोऽग्निरिवाध्वरे ॥ ०५५ ॥

शक्त्या विभिन्नहृदयं विप्रविद्धायुधध्वजम् ।
संशान्तमपि मद्रेशं लक्ष्मीर्नैव व्यमुञ्चत ॥ ०५६ ॥

ततो युधिष्ठिरश्चापमादायेन्द्रधनुष्प्रभम् ।
व्यधमद्द्विषतः संख्ये खगराडिव पन्नगान् ॥ ०५७ ॥

देहासून्निशितैर्भल्लै रिपूणां नाशयन्क्षणात् ॥ ०५७ ॥

ततः पार्थस्य बाणौघैरावृताः सैनिकास्तव ।
निमीलिताक्षाः क्षिण्वन्तो भृशमन्योन्यमर्दिताः ॥ ०५८ ॥

संन्यस्तकवचा देहैर्विपत्रायुधजीविताः ॥ ०५८ ॥

ततः शल्ये निपतिते मद्रराजानुजो युवा ।
भ्रातुः सर्वैर्गुणैस्तुल्यो रथी पाण्डवमभ्ययात् ॥ ०५९ ॥

विव्याध च नरश्रेष्ठो नाराचैर्बहुभिस्त्वरन् ।
हतस्यापचितिं भ्रातुश्चिकीर्षुर्युद्धदुर्मदः ॥ ०६० ॥

तं विव्याधाशुगैः षड्भिर्धर्मराजस्त्वरन्निव ।
कार्मुकं चास्य चिच्छेद क्षुराभ्यां ध्वजमेव च ॥ ०६१ ॥

ततोऽस्य दीप्यमानेन सुदृढेन शितेन च ।
प्रमुखे वर्तमानस्य भल्लेनापाहरच्छिरः ॥ ०६२ ॥

सकुण्डलं तद्ददृशे पतमानं शिरो रथात् ।
पुण्यक्षयमिव प्राप्य पतन्तं स्वर्गवासिनम् ॥ ०६३ ॥

तस्यापकृष्टशीर्षं तच्छरीरं पतितं रथात् ।
रुधिरेणावसिक्ताङ्गं दृष्ट्वा सैन्यमभज्यत ॥ ०६४ ॥

विचित्रकवचे तस्मिन्हते मद्रनृपानुजे ।
हाहाकारं विकुर्वाणाः कुरवो विप्रदुद्रुवुः ॥ ०६५ ॥

शल्यानुजं हतं दृष्ट्वा तावकास्त्यक्तजीविताः ।
वित्रेसुः पाण्डवभयाद्रजोध्वस्तास्तथा भृशम् ॥ ०६६ ॥

तांस्तथा भज्यतस्त्रस्तान्कौरवान्भरतर्षभ ।
शिनेर्नप्ता किरन्बाणैरभ्यवर्तत सात्यकिः ॥ ०६७ ॥

तमायान्तं महेष्वासमप्रसह्यं दुरासदम् ।
हार्दिक्यस्त्वरितो राजन्प्रत्यगृह्णादभीतवत् ॥ ०६८ ॥

तौ समेतौ महात्मानौ वार्ष्णेयावपराजितौ ।
हार्दिक्यः सात्यकिश्चैव सिंहाविव मदोत्कटौ ॥ ०६९ ॥

इषुभिर्विमलाभासैश्छादयन्तौ परस्परम् ।
अर्चिर्भिरिव सूर्यस्य दिवाकरसमप्रभौ ॥ ०७० ॥

चापमार्गबलोद्धूतान्मार्गणान्वृष्णिसिंहयोः ।
आकाशे समपश्याम पतङ्गानिव शीघ्रगान् ॥ ०७१ ॥

सात्यकिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिः शरैः ।
चापमेकेन चिच्छेद हार्दिक्यो नतपर्वणा ॥ ०७२ ॥

तन्निकृत्तं धनुः श्रेष्ठमपास्य शिनिपुङ्गवः ।
अन्यदादत्त वेगेन वेगवत्तरमायुधम् ॥ ०७३ ॥

तदादाय धनुः श्रेष्ठं वरिष्ठः सर्वधन्विनाम् ।
हार्दिक्यं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ ०७४ ॥

ततो रथं युगेषां च छित्त्वा भल्लैः सुसंयतैः ।
अश्वांस्तस्यावधीत्तूर्णमुभौ च पार्ष्णिसारथी ॥ ०७५ ॥

मद्रराजे हते राजन्विरथे कृतवर्मणि ।
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ॥ ०७६ ॥

तत्परे नावबुध्यन्त सैन्येन रजसा वृते ।
बलं तु हतभूयिष्ठं तत्तदासीत्पराङ्मुखम् ॥ ०७७ ॥

ततो मुहूर्तात्तेऽपश्यन्रजो भौमं समुत्थितम् ।
विविधैः शोणितस्रावैः प्रशान्तं पुरुषर्षभ ॥ ०७८ ॥

ततो दुर्योधनो दृष्ट्वा भग्नं स्वबलमन्तिकात् ।
जवेनापततः पार्थानेकः सर्वानवारयत् ॥ ०७९ ॥

पाण्डवान्सरथान्दृष्ट्वा धृष्टद्युम्नं च पार्षतम् ।
आनर्तं च दुराधर्षं शितैर्बाणैरवाकिरत् ॥ ०८० ॥

तं परे नाभ्यवर्तन्त मर्त्या मृत्युमिवागतम् ।

अथान्यं रथमास्थाय हार्दिक्योऽपि न्यवर्तत ॥ ०८१ ॥

ततो युधिष्ठिरो राजा त्वरमाणो महारथः ।
चतुर्भिर्निजघानाश्वान्पत्रिभिः कृतवर्मणः ॥ ०८२ ॥

विव्याध गौतमं चापि षड्भिर्भल्लैः सुतेजनैः ॥ ०८२ ॥

अश्वत्थामा ततो राज्ञा हताश्वं विरथीकृतम् ।
समपोवाह हार्दिक्यं स्वरथेन युधिष्ठिरात् ॥ ०८३ ॥

ततः शारद्वतोऽष्टाभिः प्रत्यविध्यद्युधिष्ठिरम् ।
विव्याध चाश्वान्निशितैस्तस्याष्टाभिः शिलीमुखैः ॥ ०८४ ॥

एवमेतन्महाराज युद्धशेषमवर्तत ।
तव दुर्मन्त्रिते राजन्सहपुत्रस्य भारत ॥ ०८५ ॥

तस्मिन्महेष्वासवरे विशस्ते ; सङ्ग्राममध्ये कुरुपुङ्गवेन ।
पार्थाः समेताः परमप्रहृष्टाः ; शङ्खान्प्रदध्मुर्हतमीक्ष्य शल्यम् ॥ ०८६ ॥

युधिष्ठिरं च प्रशशंसुराजौ ; पुरा सुरा वृत्रवधे यथेन्द्रम् ।
चक्रुश्च नानाविधवाद्यशब्दा ;न्निनादयन्तो वसुधां समन्तात् ॥ ०८७ ॥

---

# ह्रदप्रवेशपर्व

## अध्याय ०१७

सञ्जय उवाच ॥

शल्ये तु निहते राजन्मद्रराजपदानुगाः ।
रथाः सप्तशता वीरा निर्ययुर्महतो बलात् ॥ ००१ ॥

दुर्योधनस्तु द्विरदमारुह्याचलसंनिभम् ।
छत्रेण ध्रियमाणेन वीज्यमानश्च चामरैः ॥ ००२ ॥

न गन्तव्यं न गन्तव्यमिति मद्रानवारयत् ॥ ००२ ॥

दुर्योधनेन ते वीरा वार्यमाणाः पुनः पुनः ।
युधिष्ठिरं जिघांसन्तः पाण्डूनां प्राविशन्बलम् ॥ ००३ ॥

ते तु शूरा महाराज कृतचित्ताः स्म योधने ।
धनुःशब्दं महत्कृत्वा सहायुध्यन्त पाण्डवैः ॥ ००४ ॥

श्रुत्वा तु निहतं शल्यं धर्मपुत्रं च पीडितम् ।
मद्रराजप्रिये युक्तैर्मद्रकाणां महारथैः ॥ ००५ ॥

आजगाम ततः पार्थो गाण्डीवं विक्षिपन्धनुः ।
पूरयन्रथघोषेण दिशः सर्वा महारथः ॥ ००६ ॥

ततोऽर्जुनश्च भीमश्च माद्रीपुत्रौ च पाण्डवौ ।
सात्यकिश्च नरव्याघ्रो द्रौपदेयाश्च सर्वशः ॥ ००७ ॥

धृष्टद्युम्नः शिखण्डी च पाञ्चालाः सह सोमकैः ।
युधिष्ठिरं परीप्सन्तः समन्तात्पर्यवारयन् ॥ ००८ ॥

ते समन्तात्परिवृताः पाण्डवैः पुरुषर्षभाः ।
क्षोभयन्ति स्म तां सेनां मकराः सागरं यथा ॥ ००९ ॥

पुरोवातेन गङ्गेव क्षोभ्यमाना महानदी ।

अक्षोभ्यत तदा राजन्पाण्डूनां ध्वजिनी पुनः ॥ ०१० ॥

प्रस्कन्द्य सेनां महतीं त्यक्तात्मानो महारथाः ।
वृक्षानिव महावाताः कम्पयन्ति स्म तावकाः ॥ ०११ ॥

बहवश्चुक्रुशुस्तत्र क्व स राजा युधिष्ठिरः ।
भ्रातरो वास्य ते शूरा दृश्यन्ते नेह केचन ॥ ०१२ ॥

पाञ्चालानां महावीर्याः शिखण्डी च महारथः ।
धृष्टद्युम्नोऽथ शैनेयो द्रौपदेयाश्च सर्वशः ॥ ०१३ ॥

एवं तान्वादिनः शूरान्द्रौपदेया महारथाः ।
अभ्यघ्नन्युयुधानश्च मद्रराजपदानुगान् ॥ ०१४ ॥

चक्रैर्विमथितैः केचित्केचिच्छिन्नैर्महाध्वजैः ।
प्रत्यदृश्यन्त समरे तावका निहताः परैः ॥ ०१५ ॥

आलोक्य पाण्डवान्युद्धे योधा राजन्समन्ततः ।
वार्यमाणा ययुर्वेगात्तव पुत्रेण भारत ॥ ०१६ ॥

दुर्योधनस्तु तान्वीरान्वारयामास सान्त्वयन् ।
न चास्य शासनं कश्चित्तत्र चक्रे महारथः ॥ ०१७ ॥

ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत् ।
दुर्योधनं महाराज वचनं वचनक्षमः ॥ ०१८ ॥

किं नः संप्रेक्षमाणानां मद्राणां हन्यते बलम् ।
न युक्तमेतत्समरे त्वयि तिष्ठति भारत ॥ ०१९ ॥

सहितैर्नाम योद्धव्यमित्येष समयः कृतः ।
अथ कस्मात्परानेव घ्नतो मर्षयसे नृप ॥ ०२० ॥

दुर्योधन उवाच ॥

वार्यमाणा मया पूर्वं नैते चक्रुर्वचो मम ।
एते हि निहताः सर्वे प्रस्कन्नाः पाण्डुवाहिनीम् ॥ ०२१ ॥

शकुनिरुवाच ॥

न भर्तुः शासनं वीरा रणे कुर्वन्त्यमर्षिताः ।
अलं क्रोद्धुं तथैतेषां नायं काल उपेक्षितुम् ॥ ०२२ ॥

यामः सर्वेऽत्र संभूय सवाजिरथकुञ्जराः ।
परित्रातुं महेष्वासान्मद्रराजपदानुगान् ॥ ०२३ ॥

अन्योन्यं परिरक्षामो यत्नेन महता नृप ।
एवं सर्वेऽनुसञ्चिन्त्य प्रययुर्यत्र सैनिकाः ॥ ०२४ ॥

सञ्जय उवाच ॥

एवमुक्तस्ततो राजा बलेन महता वृतः ।
प्रययौ सिंहनादेन कम्पयन्वै वसुंधराम् ॥ ०२५ ॥

हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत ।
इत्यासीत्तुमुलः शब्दस्तव सैन्यस्य भारत ॥ ०२६ ॥

पाण्डवास्तु रणे दृष्ट्वा मद्रराजपदानुगान् ।
सहितानभ्यवर्तन्त गुल्ममास्थाय मध्यमम् ॥ ०२७ ॥

ते मुहूर्ताद्रणे वीरा हस्ताहस्तं विशां पते ।
निहताः प्रत्यदृश्यन्त मद्रराजपदानुगाः ॥ ०२८ ॥

ततो नः संप्रयातानां हतामित्रास्तरस्विनः ।
हृष्टाः किलकिलाशब्दमकुर्वन्सहिताः परे ॥ ०२९ ॥

अथोत्थितानि रुण्डानि समदृश्यन्त सर्वशः ।
पपात महती चोल्का मध्येनादित्यमण्डलम् ॥ ०३० ॥

रथैर्भग्नैर्युगाक्षैश्च निहतैश्च महारथैः ।
अश्वैर्निपतितैश्चैव संछन्नाभूद्वसुंधरा ॥ ०३१ ॥

वातायमानैस्तुरगैर्युगासक्तैस्तुरङ्गमैः ।
अदृश्यन्त महाराज योधास्तत्र रणाजिरे ॥ ०३२ ॥

भग्नचक्रान्रथान्केचिदवहंस्तुरगा रणे ।
रथार्धं केचिदादाय दिशो दश विबभ्रमुः ॥ ०३३ ॥

तत्र तत्र च दृश्यन्ते योक्त्रैः श्लिष्टाः स्म वाजिनः ॥ ०३३ ॥

रथिनः पतमानाश्च व्यदृश्यन्त नरोत्तम ।
गगनात्प्रच्युताः सिद्धाः पुण्यानामिव सङ्क्षये ॥ ०३४ ॥

निहतेषु च शूरेषु मद्रराजानुगेषु च ।
अस्मानापततश्चापि दृष्ट्वा पार्था महारथाः ॥ ०३५ ॥

अभ्यवर्तन्त वेगेन जयगृध्राः प्रहारिणः ।
बाणशब्दरवान्कृत्वा विमिश्राञ्शङ्खनिस्वनैः ॥ ०३६ ॥

अस्मांस्तु पुनरासाद्य लब्धलक्षाः प्रहारिणः ।
शरासनानि धुन्वानाः सिंहनादान्प्रचुक्रुशुः ॥ ०३७ ॥

ततो हतमभिप्रेक्ष्य मद्रराजबलं महत् ।
मद्रराजं च समरे दृष्ट्वा शूरं निपातितम् ॥ ०३८ ॥

दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम्  ॥ ०३८  ॥

वध्यमानं महाराज पाण्डवैर्जितकाशिभिः ।
दिशो भेजेऽथ संभ्रान्तं त्रासितं दृढधन्विभिः  ॥ ०३९  ॥

---

# अध्याय ०१८

सञ्जय उवाच  ॥

पातिते युधि दुर्धर्षे मद्रराजे महारथे ।
तावकास्तव पुत्राश्च प्रायशो विमुखाभवन्  ॥ ००१  ॥

वणिजो नावि भिन्नायां यथागाधेऽप्लवेऽर्णवे ।
अपारे पारमिच्छन्तो हते शूरे महात्मनि  ॥ ००२  ॥

मद्रराजे महाराज वित्रस्ताः शरविक्षताः ।
अनाथा नाथमिच्छन्तो मृगाः सिंहार्दिता इव  ॥ ००३  ॥

वृषा यथा भग्नशृङ्गाः शीर्णदन्ता गजा इव ।
मध्याह्ने प्रत्यपायाम निर्जिता धर्मसूनुना  ॥ ००४  ॥

न संधातुमनीकानि न च राजन्पराक्रमे ।
आसीद्बुद्धिर्हते शल्ये तव योधस्य कस्यचित्  ॥ ००५  ॥

भीष्मे द्रोणे च निहते सूतपुत्रे च भारत ।
यद्दुःखं तव योधानां भयं चासीद्विशां पते  ॥ ००६  ॥

तद्भयं स च नः शोको भूय एवाभ्यवर्तत ॥ ००६ ॥

निराशाश्च जये तस्मिन्हते शल्ये महारथे ।
हतप्रवीरा विध्वस्ता विकृत्ताश्च शितैः शरैः ॥ ००७ ॥

मद्रराजे हते राजन्योधास्ते प्राद्रवन्भयात् ॥ ००७ ॥

अश्वानन्ये गजानन्ये रथानन्ये महारथाः ।
आरुह्य जवसंपन्नाः पादाताः प्राद्रवन्भयात् ॥ ००८ ॥

द्विसाहस्राश्च मातङ्गा गिरिरूपाः प्रहारिणः ।
संप्राद्रवन्हते शल्ये अङ्कुशाङ्गुष्ठचोदिताः ॥ ००९ ॥

ते रणाद्भरतश्रेष्ठ तावकाः प्राद्रवन्दिशः ।
धावन्तश्चाप्यदृश्यन्त श्वसमानाः शरातुराः ॥ ०१० ॥

तान्प्रभग्नान्द्रुतान्दृष्ट्वा हतोत्साहान्पराजितान् ।
अभ्यद्रवन्त पाञ्चालाः पाण्डवाश्च जयैषिणः ॥ ०११ ॥

बाणशब्दरवश्चापि सिंहनादश्च पुष्कलः ।
शङ्खशब्दश्च शूराणां दारुणः समपद्यत ॥ ०१२ ॥

दृष्ट्वा तु कौरवं सैन्यं भयत्रस्तं प्रविद्रुतम् ।
अन्योन्यं समभाषन्त पाञ्चालाः पाण्डवैः सह ॥ ०१३ ॥

अद्य राजा सत्यधृतिर्जितामित्रो युधिष्ठिरः ।
अद्य दुर्योधनो हीनो दीप्तया नृपतिश्रिया ॥ ०१४ ॥

अद्य श्रुत्वा हतं पुत्रं धृतराष्ट्रो जनेश्वरः ।
निःसञ्ज्ञः पतितो भूमौ किल्बिषं प्रतिपद्यताम् ॥ ०१५ ॥

अद्य जानातु कौन्तेयं समर्थं सर्वधन्विनाम् ।
अद्यात्मानं च दुर्मेधा गर्हयिष्यति पापकृत् ॥ ०१६ ॥

अद्य क्षत्तुर्वचः सत्यं स्मरतां ब्रुवतो हितम् ॥ ०१६ ॥

अद्यप्रभृति पार्थांश्च प्रेष्यभूत उपाचरन् ।
विजानातु नृपो दुःखं यत्प्राप्तं पाण्डुनन्दनैः ॥ ०१७ ॥

अद्य कृष्णस्य माहात्म्यं जानातु स महीपतिः ।
अद्यार्जुनधनुर्घोषं घोरं जानातु संयुगे ॥ ०१८ ॥

अस्त्राणां च बलं सर्वं बाह्वोश्च बलमाहवे ।
अद्य ज्ञास्यति भीमस्य बलं घोरं महात्मनः ॥ ०१९ ॥

हते दुर्योधने युद्धे शक्रेणेवासुरे मये ।
यत्कृतं भीमसेनेन दुःशासनवधे तदा ॥ ०२० ॥

नान्यः कर्तास्ति लोके तद्दते भीमं महाबलम् ॥ ०२० ॥

जानीतामद्य ज्येष्ठस्य पाण्डवस्य पराक्रमम् ।
मद्रराजं हतं श्रुत्वा देवैरपि सुदुःसहम् ॥ ०२१ ॥

अद्य ज्ञास्यति सङ्ग्रामे माद्रीपुत्रौ महाबलौ ।
निहते सौबले शूरे गान्धारेषु च सर्वशः ॥ ०२२ ॥

कथं तेषां जयो न स्याद्येषां योद्धा धनञ्जयः ।
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ०२३ ॥

द्रौपद्यास्तनयाः पञ्च माद्रीपुत्रौ च पाण्डवौ ।
शिखण्डी च महेष्वासो राजा चैव युधिष्ठिरः ॥ ०२४ ॥

येषां च जगतां नाथो नाथः कृष्णो जनार्दनः ।
कथं तेषां जयो न स्याद्येषां धर्मो व्यपाश्रयः ॥ ०२५ ॥

भीष्मं द्रोणं च कर्णं च मद्रराजानमेव च ।
तथान्यान्नृपतीन्वीराञ्शतशोऽथ सहस्रशः ॥ ०२६ ॥

कोऽन्यः शक्तो रणे जेतुमृते पार्थं युधिष्ठिरम् ।
यस्य नाथो हृषीकेशः सदा धर्मयशोनिधिः ॥ ०२७ ॥

इत्येवं वदमानास्ते हर्षेण महता युताः ।
प्रभग्नांस्तावकान्राजन्सृञ्जयाः पृष्ठतोऽन्वयुः ॥ ०२८ ॥

धनञ्जयो रथानीकमभ्यवर्तत वीर्यवान् ।
माद्रीपुत्रौ च शकुनिं सात्यकिश्च महारथः ॥ ०२९ ॥

तान्प्रेक्ष्य द्रवतः सर्वान्भीमसेनभयार्दितान् ।
दुर्योधनस्तदा सूतमब्रवीदुत्स्मयन्निव ॥ ०३० ॥

न मातिक्रमते पार्थो धनुष्पाणिमवस्थितम् ।
जघने सर्वसैन्यानां ममाश्वान्प्रतिपादय ॥ ०३१ ॥

जघने युध्यमानं हि कौन्तेयो मां धनञ्जयः ।
नोत्सहेताभ्यतिक्रान्तुं वेलामिव महोदधिः ॥ ०३२ ॥

पश्य सैन्यं महत्सूत पाण्डवैः समभिद्रुतम् ।
सैन्यरेणुं समुद्धूतं पश्यस्वैनं समन्ततः ॥ ०३३ ॥

सिंहनादांश्च बहुशः शृणु घोरान्भयानकान् ।
तस्माद्याहि शनैः सूत जघनं परिपालय ॥ ०३४ ॥

मयि स्थिते च समरे निरुद्धेषु च पाण्डुषु ।

पुनरावर्तते तूर्णं मामकं बलमोजसा ॥ ०३५ ॥

तच्छ्रुत्वा तव पुत्रस्य शूराग्र्यसदृशं वचः ।
सारथिर्हेमसंछन्नाञ्शनैरश्वानचोदयत् ॥ ०३६ ॥

गजाश्वरथिभिर्हीनास्त्यक्तात्मानः पदातयः ।
एकविंशतिसाहस्राः संयुगायावतस्थिरे ॥ ०३७ ॥

नानादेशसमुद्भूता नानारञ्जितवाससः ।
अवस्थितास्तदा योधाः प्रार्थयन्तो महद्यशः ॥ ०३८ ॥

तेषामापततां तत्र संहृष्टानां परस्परम् ।
संमर्दः सुमहाञ्जज्ञे घोररूपो भयानकः ॥ ०३९ ॥

भीमसेनं तदा राजन्धृष्टद्युम्नं च पार्षतम् ।
बलेन चतुरङ्गेण नानादेश्या न्यवारयन् ॥ ०४० ॥

भीममेवाभ्यवर्तन्त रणेऽन्ये तु पदातयः ।
प्रक्ष्वेड्यास्फोट्य संहृष्टा वीरलोकं यियासवः ॥ ०४१ ॥

आसाद्य भीमसेनं तु संरब्धा युद्धदुर्मदाः ।
धार्तराष्ट्रा विनेदुर्हि नान्यां चाकथयन्कथाम् ॥ ०४२ ॥

परिवार्य रणे भीमं निजघ्नुस्ते समन्ततः ॥ ०४२ ॥

स वध्यमानः समरे पदातिगणसंवृतः ।
न चचाल रथोपस्थे मैनाक इव पर्वतः ॥ ०४३ ॥

ते तु क्रुद्धा महाराज पाण्डवस्य महारथम् ।
निग्रहीतुं प्रचक्रुर्हि योधांश्चान्यानवारयन् ॥ ०४४ ॥

अक्रुध्यत रणे भीमस्तैस्तदा पर्यवस्थितैः ।
सोऽवतीर्य रथात्तूर्णं पदातिः समवस्थितः ॥ ०४५ ॥

जातरूपपरिच्छन्नां प्रगृह्य महतीं गदाम् ।
अवधीत्तावकान्योधान्दण्डपाणिरिवान्तकः ॥ ०४६ ॥

रथाश्वद्विपहीनांस्तु तान्भीमो गदया बली ।
एकविंशतिसाहस्रान्पदातीनवपोथयत् ॥ ०४७ ॥

हत्वा तत्पुरुषानीकं भीमः सत्यपराक्रमः ।
धृष्टद्युम्नं पुरस्कृत्य नचिरात्प्रत्यदृश्यत ॥ ०४८ ॥

पादाता निहता भूमौ शिश्यिरे रुधिरोक्षिताः ।
संभग्ना इव वातेन कर्णिकाराः सुपुष्पिताः ॥ ०४९ ॥

नानापुष्पस्रजोपेता नानाकुण्डलधारिणः ।
नानाजात्या हतास्तत्र नानादेशसमागताः ॥ ०५० ॥

पताकाध्वजसंछन्नं पदातीनां महद्बलम् ।
निकृत्तं विबभौ तत्र घोररूपं भयानकम् ॥ ०५१ ॥

युधिष्ठिरपुरोगास्तु सर्वसैन्यमहारथाः ।
अभ्यधावन्महात्मानं पुत्रं दुर्योधनं तव ॥ ०५२ ॥

ते सर्वे तावकान्दृष्ट्वा महेष्वासान्पराङ्मुखान् ।
नाभ्यवर्तन्त ते पुत्रं वेलेव मकरालयम् ॥ ०५३ ॥

तदद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
यदेकं सहिताः पार्था न शेकुरतिवर्तितुम् ॥ ०५४ ॥

नातिदूरापयातं तु कृतबुद्धिं पलायने ।

दुर्योधनः स्वकं सैन्यमब्रवीद्भृशविक्षतम् ॥ ०५५ ॥

न तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु वा ।
यत्र यातान्न वो हन्युः पाण्डवाः किं सृतेन वः ॥ ०५६ ॥

अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ ।
यदि सर्वेऽत्र तिष्ठामो ध्रुवो नो विजयो भवेत् ॥ ०५७ ॥

विप्रयातांस्तु वो भिन्नान्पाण्डवाः कृतकिल्बिषान् ।
अनुसृत्य हनिष्यन्ति श्रेयो नः समरे स्थितम् ॥ ०५८ ॥

शृणुध्वं क्षत्रियाः सर्वे यावन्तः स्थ समागताः ।
यदा शूरं च भीरुं च मारयत्यन्तकः सदा ॥ ०५९ ॥

को नु मूढो न युध्येत पुरुषः क्षत्रियब्रुवः ॥ ०५९ ॥

श्रेयो नो भीमसेनस्य क्रुद्धस्य प्रमुखे स्थितम् ।
सुखः साङ्ग्रामिको मृत्युः क्षत्रधर्मेण युध्यताम् ॥ ०६० ॥

जित्वेह सुखमाप्नोति हतः प्रेत्य महत्फलम् ॥ ०६० ॥

न युद्धधर्माच्छ्रेयान्वै पन्थाः स्वर्गस्य कौरवाः ।
अचिरेण जिता.णल्लोकान्हतो युद्धे समश्नुते ॥ ०६१ ॥

श्रुत्वा तु वचनं तस्य पूजयित्वा च पार्थिवाः ।
पुनरेवान्ववर्तन्त पाण्डवानाततायिनः ॥ ०६२ ॥

तानापतत एवाशु व्यूढानीकाः प्रहारिणः ।
प्रत्युद्ययुस्तदा पार्था जयगृध्राः प्रहारिणः ॥ ०६३ ॥

धनञ्जयो रथेनाजावभ्यवर्तत वीर्यवान् ।

विश्रुतं त्रिषु लोकेषु गाण्डीवं विक्षिपन्धनुः ॥ ०६४ ॥

माद्रीपुत्रौ च शकुनिं सात्यकिश्च महाबलः ।
जवेनाभ्यपतन्हृष्टा यतो वै तावकं बलम् ॥ ०६५ ॥

---

# अध्याय ०१९

सञ्जय उवाच ॥

संनिवृत्ते बलौघे तु शाल्वो म्लेच्छगणाधिपः ।
अभ्यवर्तत सङ्क्रुद्धः पाण्डूनां सुमहद्बलम् ॥ ००१ ॥

आस्थाय सुमहानागं प्रभिन्नं पर्वतोपमम् ।
दृप्तमैरावतप्रख्यममित्रगणमर्दनम् ॥ ००२ ॥

योऽसौ महाभद्रकुलप्रसूतः ; सुपूजितो धार्तराष्ट्रेण नित्यम् ।
सुकल्पितः शास्त्रविनिश्चयज्ञैः ; सदोपवाह्यः समरेषु राजन् ॥ ००३ ॥

तमास्थितो राजवरो बभूव ; यथोदयस्थः सविता क्षपान्ते ।
स तेन नागप्रवरेण राज ;न्नभ्युद्ययौ पाण्डुसुतान्समन्तात् ॥ ००४ ॥

शितैः पृषत्कैर्विददार चापि ; महेन्द्रवज्रप्रतिमैः सुघोरैः ॥ ००४ ॥

ततः शरान्वै सृजतो महारणे ; योधांश्च राजन्नयतो यमाय ।
नास्यान्तरं ददृशुः स्वे परे वा ; यथा पुरा वज्रधरस्य दैत्याः ॥ ००५ ॥

ते पाण्डवाः सोमकाः सृञ्जयाश्च ; तमेव नागं ददृशुः समन्तात् ।

सहस्रशो वै विचरन्तमेकं ; यथा महेन्द्रस्य गजं समीपे ॥ ००६ ॥

संद्राव्यमाणं तु बलं परेषां ; परीतकल्पं विबभौ समन्तात् ।
नैवावतस्थे समरे भृशं भया ;द्विमर्दमानं तु परस्परं तदा ॥ ००७ ॥

ततः प्रभग्ना सहसा महाचमूः ; सा पाण्डवी तेन नराधिपेन ।
दिशश्चतस्रः सहसा प्रधाविता ; गजेन्द्रवेगं तमपारयन्ती ॥ ००८ ॥

दृष्ट्वा च तां वेगवता प्रभग्नां ; सर्वे त्वदीया युधि योधमुख्याः ।
अपूजयंस्तत्र नराधिपं तं ; दध्मुश्च शङ्खाञ्शशिसंनिकाशान् ॥ ००९ ॥

श्रुत्वा निनादं त्वथ कौरवाणां ; हर्षाद्विमुक्तं सह शङ्खशब्दैः ।
सेनापतिः पाण्डवसृञ्जयानां ; पाञ्चालपुत्रो न ममर्ष रोषात् ॥ ०१० ॥

ततस्तु तं वै द्विरदं महात्मा ; प्रत्युद्ययौ त्वरमाणो जयाय ।
जम्भो यथा शक्रसमागमे वै ; नागेन्द्रमैरावणमिन्द्रवाह्यम् ॥ ०११ ॥

तमापतन्तं सहसा तु दृष्ट्वा ; पाञ्चालराजं युधि राजसिंहः ।
तं वै द्विपं प्रेषयामास तूर्णं ; वधाय राजन्द्रुपदात्मजस्य ॥ ०१२ ॥

स तं द्विपं सहसाभ्यापतन्त ;मविध्यदर्कप्रतिमैः पृषत्कैः ।
कर्मारधौतैर्निशितैर्ज्वलद्भि ;र्नाराचमुख्यैस्त्रिभिरुग्रवेगैः ॥ ०१३ ॥

ततोऽपरान्पञ्च शितान्महात्मा ; नाराचमुख्यान्विससर्ज कुम्भे ।
स तैस्तु विद्धः परमद्विपो रणे ; तदा परावृत्य भृशं प्रदुद्रुवे ॥ ०१४ ॥

तं नागराजं सहसा प्रणुन्नं ; विद्राव्यमाणं च निगृह्य शाल्वः ।
तोत्त्राङ्कुशैः प्रेषयामास तूर्णं ; पाञ्चालराजस्य रथं प्रदिश्य ॥ ०१५ ॥

दृष्ट्वापतन्तं सहसा तु नागं ; धृष्टद्युम्नः स्वरथाच्छीघ्रमेव ।
गदां प्रगृह्याशु जवेन वीरो ; भूमिं प्रपन्नो भयविह्वलाङ्गः ॥ ०१६ ॥

स तं रथं हेमविभूषिताङ्गं ; साश्वं ससूतं सहसा विमृद्य ।
उत्क्षिप्य हस्तेन तदा महाद्विपो ; विपोथयामास वसुंधरातले ॥ ०१७ ॥

पाञ्चालराजस्य सुतं स दृष्ट्वा ; तदार्दितं नागवरेण तेन ।
तमभ्यधावत्सहसा जवेन ; भीमः शिखण्डी च शिनेश्च नप्ता ॥ ०१८ ॥

शरैश्च वेगं सहसा निगृह्य ; तस्याभितोऽभ्यापततो गजस्य ।
स सङ्गृहीतो रथिभिर्गजो वै ; चचाल तैर्वार्यमाणश्च संख्ये ॥ ०१९ ॥

ततः पृषत्कान्प्रववर्ष राजा ; सूर्यो यथा रश्मिजालं समन्तात् ।
तेनाशुगैर्वध्यमाना रथौघाः ; प्रदुद्रुवुस्तत्र ततस्तु सर्वे ॥ ०२० ॥

तत्कर्म शाल्वस्य समीक्ष्य सर्वे ; पाञ्चालमत्स्या नृप सृञ्जयाश्च ।
हाहाकारैर्नादयन्तः स्म युद्धे ; द्विपं समन्ताद्रुरुधुर्नराग्र्याः ॥ ०२१ ॥

पाञ्चालराजस्त्वरितस्तु शूरो ; गदां प्रगृह्याचलशृङ्गकल्पाम् ।
असंभ्रमं भारत शत्रुघाती ; जवेन वीरोऽनुससार नागम् ॥ ०२२ ॥

ततोऽथ नागं धरणीधराभं ; मदं स्रवन्तं जलदप्रकाशम् ।
गदां समाविध्य भृशं जघान ; पाञ्चालराजस्य सुतस्तरस्वी ॥ ०२३ ॥

स भिन्नकुम्भः सहसा विनद्य ; मुखात्प्रभूतं क्षतजं विमुञ्चन् ।
पपात नागो धरणीधराभः ; क्षितिप्रकम्पाच्चलितो यथाद्रिः ॥ ०२४ ॥

निपात्यमाने तु तदा गजेन्द्रे ; हाहाकृते तव पुत्रस्य सैन्ये ।
स शाल्वराजस्य शिनिप्रवीरो ; जहार भल्लेन शिरः शितेन ॥ ०२५ ॥

हतोत्तमाङ्गो युधि सात्वतेन ; पपात भूमौ सह नागराज्ञा ।
यथाद्रिशृङ्गं सुमहत्प्रणुन्नं ; वज्रेण देवाधिपचोदितेन ॥ ०२६ ॥

# अध्याय ०२०

सञ्जय उवाच ॥

तस्मिंस्तु निहते शूरे शाल्वे समितिशोभने ।
तवाभज्यद्बलं वेगाद्वातेनेव महाद्रुमः ॥ ००१ ॥

तत्प्रभग्नं बलं दृष्ट्वा कृतवर्मा महारथः ।
दधार समरे शूरः शत्रुसैन्यं महाबलः ॥ ००२ ॥

संनिवृत्तास्तु ते शूरा दृष्ट्वा सात्वतमाहवे ।
शैलोपमं स्थितं राजन्कीर्यमाणं शरैर्युधि ॥ ००३ ॥

ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह ।
निवृत्तानां महाराज मृत्युं कृत्वा निवर्तनम् ॥ ००४ ॥

तत्राश्चर्यमभूद्युद्धं सात्वतस्य परैः सह ।
यदेको वारयामास पाण्डुसेनां दुरासदाम् ॥ ००५ ॥

तेषामन्योन्यसुहृदां कृते कर्मणि दुष्करे ।
सिंहनादः प्रहृष्टानां दिवःस्पृक्सुमहानभूत् ॥ ००६ ॥

तेन शब्देन वित्रस्तान्पाञ्चालान्भरतर्षभ ।
शिनेर्नप्ता महाबाहुरन्वपद्यत सात्यकिः ॥ ००७ ॥

स समासाद्य राजानं क्षेमधूर्तिं महाबलम् ।
सप्तभिर्निशितैर्बाणैरनयद्यमसादनम् ॥ ००८ ॥

तमायान्तं महाबाहुं प्रवपन्तं शिताञ्शरान् ।
जवेनाभ्यपतद्धीमान्हार्दिक्यः शिनिपुङ्गवम्  ॥ ००९  ॥

तौ सिंहाविव नर्दन्तौ धन्विनौ रथिनां वरौ ।
अन्योन्यमभ्यधावेतां शस्त्रप्रवरधारिणौ  ॥ ०१०  ॥

पाण्डवाः सह पाञ्चालैर्योधाश्चान्ये नृपोत्तमाः ।
प्रेक्षकाः समपद्यन्त तयोः पुरुषसिंहयोः  ॥ ०११  ॥

नाराचैर्वत्सदन्तैश्च वृष्ण्यन्धकमहारथौ ।
अभिजघ्नतुरन्योन्यं प्रहृष्टाविव कुञ्जरौ  ॥ ०१२  ॥

चरन्तौ विविधान्मार्गान्हार्दिक्यशिनिपुङ्गवौ ।
मुहुरन्तर्दधाते तौ बाणवृष्ट्या परस्परम्  ॥ ०१३  ॥

चापवेगबलोद्धूतान्मार्गणान्वृष्णिसिंहयोः ।
आकाशे समपश्याम पतङ्गानिव शीघ्रगान्  ॥ ०१४  ॥

तमेकं सत्यकर्माणमासाद्य हृदिकात्मजः ।
अविध्यन्निशितैर्बाणैश्चतुर्भिश्चतुरो हयान्  ॥ ०१५  ॥

स दीर्घबाहुः सङ्क्रुद्धस्तोत्त्रार्दित इव द्विपः ।
अष्टाभिः कृतवर्माणमविध्यत्परमेषुभिः  ॥ ०१६  ॥

ततः पूर्णायतोत्सृष्टैः कृतवर्मा शिलाशितैः ।
सात्यकिं त्रिभिराहत्य धनुरेकेन चिच्छिदे  ॥ ०१७  ॥

निकृत्तं तद्धनुःश्रेष्ठमपास्य शिनिपुङ्गवः ।
अन्यदादत्त वेगेन शैनेयः सशरं धनुः  ॥ ०१८  ॥

तदादाय धनुःश्रेष्ठं वरिष्ठः सर्वधन्विनाम् ।
आरोप्य च महावीर्यो महाबुद्धिर्महाबलः ॥ ०१९ ॥

अमृष्यमाणो धनुषश्छेदनं कृतवर्मणा ।
कुपितोऽतिरथः शीघ्रं कृतवर्माणमभ्ययात् ॥ ०२० ॥

ततः सुनिशितैर्बाणैर्दशभिः शिनिपुङ्गवः ।
जघान सूतमश्वांश्च ध्वजं च कृतवर्मणः ॥ ०२१ ॥

ततो राजन्महेष्वासः कृतवर्मा महारथः ।
हताश्वसूतं संप्रेक्ष्य रथं हेमपरिष्कृतम् ॥ ०२२ ॥

रोषेण महताविष्टः शूलमुद्यम्य मारिष ।
चिक्षेप भुजवेगेन जिघांसुः शिनिपुङ्गवम् ॥ ०२३ ॥

तच्छूलं सात्वतो ह्याजौ निर्भिद्य निशितैः शरैः ।
चूर्णितं पातयामास मोहयन्निव माधवम् ॥ ०२४ ॥

ततोऽपरेण भल्लेन हृद्येनं समताडयत् ॥ ०२४ ॥

स युद्धे युयुधानेन हताश्वो हतसारथिः ।
कृतवर्मा कृतास्त्रेण धरणीमन्वपद्यत ॥ ०२५ ॥

तस्मिन्सात्यकिना वीरे द्वैरथे विरथीकृते ।
समपद्यत सर्वेषां सैन्यानां सुमहद्भयम् ॥ ०२६ ॥

पुत्रस्य तव चात्यर्थं विषादः समपद्यत ।
हतसूते हताश्वे च विरथे कृतवर्मणि ॥ ०२७ ॥

हताश्वं च समालक्ष्य हतसूतमरिंदमम् ।
अभ्यधावत्कृपो राजञ्जिघांसुः शिनिपुङ्गवम् ॥ ०२८ ॥

तमारोप्य रथोपस्थे मिषतां सर्वधन्विनाम् ।
अपोवाह महाबाहुस्तूर्णमायोधनादपि ॥ ०२९ ॥

शैनेयेऽधिष्ठिते राजन्विरथे कृतवर्मणि ।
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ॥ ०३० ॥

तत्परे नावबुध्यन्त सैन्येन रजसावृते ।
तावकाः प्रद्रुता राजन्दुर्योधनमृते नृपम् ॥ ०३१ ॥

दुर्योधनस्तु संप्रेक्ष्य भग्नं स्वबलमन्तिकात् ।
जवेनाभ्यपतत्तूर्णं सर्वांश्चैको न्यवारयत् ॥ ०३२ ॥

पाण्डूंश्च सर्वान्सङ्क्रुद्धो धृष्टद्युम्नं च पार्षतम् ।
शिखण्डिनं द्रौपदेयान्पाञ्चालानां च ये गणाः ॥ ०३३ ॥

केकयान्सोमकांश्चैव पाञ्चालांश्चैव मारिष ।
असंभ्रमं दुराधर्षः शितैरस्त्रैरवारयत् ॥ ०३४ ॥

अतिष्ठदाहवे यत्तः पुत्रस्तव महाबलः ।
यथा यज्ञे महानग्निर्मन्त्रपूतः प्रकाशयन् ॥ ०३५ ॥

तं परे नाभ्यवर्तन्त मर्त्या मृत्युमिवाहवे ।
अथान्यं रथमास्थाय हार्दिक्यः समपद्यत ॥ ०३६ ॥

---

# अध्याय ०२१

सञ्जय उवाच ॥

पुत्रस्तु ते महाराज रथस्थो रथिनां वरः ।
दुरुत्सहो बभौ युद्धे यथा रुद्रः प्रतापवान् ॥ ००१ ॥

तस्य बाणसहस्रैस्तु प्रच्छन्ना ह्यभवन्मही ।
परांश्च सिषिचे बाणैर्धाराभिरिव पर्वतान् ॥ ००२ ॥

न च सोऽस्ति पुमान्कश्चित्पाण्डवानां महाहवे ।
हयो गजो रथो वापि योऽस्य बाणैरविक्षतः ॥ ००३ ॥

यं यं हि समरे योधं प्रपश्यामि विशां पते ।
स स बाणैश्चितोऽभूद्वै पुत्रेण तव भारत ॥ ००४ ॥

यथा सैन्येन रजसा समुद्धूतेन वाहिनी ।
प्रत्यदृश्यत संछन्ना तथा बाणैर्महात्मनः ॥ ००५ ॥

बाणभूतामपश्याम पृथिवीं पृथिवीपते ।
दुर्योधनेन प्रकृतां क्षिप्रहस्तेन धन्विना ॥ ००६ ॥

तेषु योधसहस्रेषु तावकेषु परेषु च ।
एको दुर्योधनो ह्यासीत्पुमानिति मतिर्मम ॥ ००७ ॥

तत्राद्भुतमपश्याम तव पुत्रस्य विक्रमम् ।
यदेकं सहिताः पार्था नात्यवर्तन्त भारत ॥ ००८ ॥

युधिष्ठिरं शतेनाजौ विव्याध भरतर्षभ ।
भीमसेनं च सप्तत्या सहदेवं च सप्तभिः ॥ ००९ ॥

नकुलं च चतुःषष्ट्या धृष्टद्युम्नं च पञ्चभिः ।
सप्तभिर्द्रौपदेयांश्च त्रिभिर्विव्याध सात्यकिम्  ॥ ०१०  ॥

धनुश्चिच्छेद भल्लेन सहदेवस्य मारिष  ॥ ०१०  ॥

तदपास्य धनुश्छिन्नं माद्रीपुत्रः प्रतापवान् ।
अभ्यधावत राजानं प्रगृह्यान्यन्महद्धनुः  ॥ ०११  ॥

ततो दुर्योधनं संख्ये विव्याध दशभिः शरैः  ॥ ०११  ॥

नकुलश्च ततो वीरो राजानं नवभिः शरैः ।
घोररूपैर्महेष्वासो विव्याध च ननाद च  ॥ ०१२  ॥

सात्यकिश्चापि राजानं शरेणानतपर्वणा ।
द्रौपदेयास्त्रिसप्तत्या धर्मराजश्च सप्तभिः  ॥ ०१३  ॥

अशीत्या भीमसेनश्च शरै राजानमार्दयत्  ॥ ०१३  ॥

समन्तात्कीर्यमाणस्तु बाणसंघैर्महात्मभिः ।
न चचाल महाराज सर्वसैन्यस्य पश्यतः  ॥ ०१४  ॥

लाघवं सौष्ठवं चापि वीर्यं चैव महात्मनः ।
अति सर्वाणि भूतानि ददृशुः सर्वमानवाः  ॥ ०१५  ॥

धार्तराष्ट्रास्तु राजेन्द्र यात्वा तु स्वल्पमन्तरम् ।
अपश्यमाना राजानं पर्यवर्तन्त दंशिताः  ॥ ०१६  ॥

तेषामापततां घोरस्तुमुलः समजायत ।
क्षुब्धस्य हि समुद्रस्य प्रावृट्काले यथा निशि  ॥ ०१७  ॥

समासाद्य रणे ते तु राजानमपराजितम् ।

प्रत्युद्ययुर्महेष्वासाः पाण्डवानाततायिनः ॥ ०१८ ॥

भीमसेनं रणे क्रुद्धं द्रोणपुत्रो न्यवारयत् ।
ततो बाणैर्महाराज प्रमुक्तैः सर्वतोदिशम् ॥ ०१९ ॥

नाज्ञायन्त रणे वीरा न दिशः प्रदिशस्तथा ॥ ०१९ ॥

तावुभौ क्रूरकर्माणावुभौ भारत दुःसहौ ।
घोररूपमयुध्येतां कृतप्रतिकृतैषिणौ ॥ ०२० ॥

त्रासयन्तौ जगत्सर्वं ज्याक्षेपविहतत्वचौ ॥ ०२० ॥

शकुनिस्तु रणे वीरो युधिष्ठिरमपीडयत् ।
तस्याश्वांश्चतुरो हत्वा सुबलस्य सुतो विभुः ॥ ०२१ ॥

नादं चकार बलवान्सर्वसैन्यानि कम्पयन् ॥ ०२१ ॥

एतस्मिन्नन्तरे वीरं राजानमपराजितम् ।
अपोवाह रथेनाजौ सहदेवः प्रतापवान् ॥ ०२२ ॥

अथान्यं रथमास्थाय धर्मराजो युधिष्ठिरः ।
शकुनिं नवभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ ०२३ ॥

ननाद च महानादं प्रवरः सर्वधन्विनाम् ॥ ०२३ ॥

तद्युद्धमभवच्चित्रं घोररूपं च मारिष ।
ईक्षितृप्रीतिजननं सिद्धचारणसेवितम् ॥ ०२४ ॥

उलूकस्तु महेष्वासं नकुलं युद्धदुर्मदम् ।
अभ्यद्रवदमेयात्मा शरवर्षैः समन्ततः ॥ ०२५ ॥

तथैव नकुलः शूरः सौबलस्य सुतं रणे ।
शरवर्षेण महता समन्तात्पर्यवारयत् ॥ ०२६ ॥

तौ तत्र समरे वीरौ कुलपुत्रौ महारथौ ।
योधयन्तावपश्येतां परस्परकृतागसौ ॥ ०२७ ॥

तथैव कृतवर्मा तु शैनेयं शत्रुतापनम् ।
योधयञ्शुशुभे राजन्बलं शक्र इवाहवे ॥ ०२८ ॥

दुर्योधनो धनुश्छित्त्वा धृष्टद्युम्नस्य संयुगे ।
अथैनं छिन्नधन्वानं विव्याध निशितैः शरैः ॥ ०२९ ॥

धृष्टद्युम्नोऽपि समरे प्रगृह्य परमायुधम् ।
राजानं योधयामास पश्यतां सर्वधन्विनाम् ॥ ०३० ॥

तयोर्युद्धं महच्चासीत्सङ्ग्रामे भरतर्षभ ।
प्रभिन्नयोर्यथा सक्तं मत्तयोर्वरहस्तिनोः ॥ ०३१ ॥

गौतमस्तु रणे क्रुद्धो द्रौपदेयान्महाबलान् ।
विव्याध बहुभिः शूरः शरैः संनतपर्वभिः ॥ ०३२ ॥

तस्य तैरभवद्युद्धमिन्द्रियैरिव देहिनः ।
घोररूपमसंवार्यं निर्मर्यादमतीव च ॥ ०३३ ॥

ते च तं पीडयामासुरिन्द्रियाणीव बालिशम् ।
स च तान्प्रतिसंरब्धः प्रत्ययोधयदाहवे ॥ ०३४ ॥

एवं चित्रमभूद्युद्धं तस्य तैः सह भारत ।
उत्थायोत्थाय हि यथा देहिनामिन्द्रियैर्विभो ॥ ०३५ ॥

नराश्चैव नरैः सार्धं दन्तिनो दन्तिभिस्तथा ।

हया हयैः समासक्ता रथिनो रथिभिस्तथा ॥ ०३६ ॥

सङ्कुलं चाभवद्भूयो घोररूपं विशां पते ॥ ०३६ ॥

इदं चित्रमिदं घोरमिदं रौद्रमिति प्रभो ।
युद्धान्यासन्महाराज घोराणि च बहूनि च ॥ ०३७ ॥

ते समासाद्य समरे परस्परमरिंदमाः ।
विव्यधुश्चैव जघ्नुश्च समासाद्य महाहवे ॥ ०३८ ॥

तेषां शस्त्रसमुद्भूतं रजस्तीव्रमदृश्यत ।
प्रवातेनोद्धतं राजन्धावद्भिश्चाश्वसादिभिः ॥ ०३९ ॥

रथनेमिसमुद्भूतं निःश्वासैश्चापि दन्तिनाम् ।
रजः संध्याभ्रकपिलं दिवाकरपथं ययौ ॥ ०४० ॥

रजसा तेन संपृक्ते भास्करे निष्प्रभीकृते ।
संछादिताभवद्भूमिस्ते च शूरा महारथाः ॥ ०४१ ॥

मुहूर्तादिव संवृत्तं नीरजस्कं समन्ततः ।
वीरशोणितसिक्तायां भूमौ भरतसत्तम ॥ ०४२ ॥

उपाशाम्यत्ततस्तीव्रं तद्रजो घोरदर्शनम् ॥ ०४२ ॥

ततोऽपश्यं महाराज द्वंद्वयुद्धानि भारत ।
यथाप्राग्र्यं यथाज्येष्ठं मध्याह्ने वै सुदारुणे ॥ ०४३ ॥

वर्मणां तत्र राजेन्द्र व्यदृश्यन्तोज्ज्वलाः प्रभाः ॥ ०४३ ॥

शब्दः सुतुमुलः संख्ये शराणां पततामभूत् ।
महावेणुवनस्येव दह्यमानस्य सर्वतः ॥ ०४४ ॥

# अध्याय ०२२

सञ्जय उवाच ॥

वर्तमाने तथा युद्धे घोररूपे भयानके ।
अभज्यत बलं तत्र तव पुत्रस्य पाण्डवैः ॥ ००१ ॥

तांस्तु यत्नेन महता संनिवार्य महारथान् ।
पुत्रस्ते योधयामास पाण्डवानामनीकिनीम् ॥ ००२ ॥

निवृत्ताः सहसा योधास्तव पुत्रप्रियैषिणः ।
संनिवृत्तेषु तेष्वेवं युद्धमासीत्सुदारुणम् ॥ ००३ ॥

तावकानां परेषां च देवासुररणोपमम् ।
परेषां तव सैन्ये च नासीत्कश्चित्पराङ्मुखः ॥ ००४ ॥

अनुमानेन युध्यन्ते सञ्ज्ञाभिश्च परस्परम् ।
तेषां क्षयो महानासीद्युध्यतामितरेतरम् ॥ ००५ ॥

ततो युधिष्ठिरो राजा क्रोधेन महता युतः ।
जिगीषमाणः सङ्ग्रामे धार्तराष्ट्रान्सराजकान् ॥ ००६ ॥

त्रिभिः शारद्वतं विद्ध्वा रुक्मपुङ्खैः शिलाशितैः ।
चतुर्भिर्निजघानाश्वान्कल्याणान्कृतवर्मणः ॥ ००७ ॥

अश्वत्थामा तु हार्दिक्यमपोवाह यशस्विनम् ।
अथ शारद्वतोऽष्टाभिः प्रत्यविध्यद्युधिष्ठिरम् ॥ ००८ ॥

ततो दुर्योधनो राजा रथान्सप्तशतान्रणे ।
प्रेषयद्यत्र राजासौ धर्मपुत्रो युधिष्ठिरः ॥ ००९ ॥

ते रथा रथिभिर्युक्ता मनोमारुतरंहसः ।
अभ्यद्रवन्त सङ्ग्रामे कौन्तेयस्य रथं प्रति ॥ ०१० ॥

ते समन्तान्महाराज परिवार्य युधिष्ठिरम् ।
अदृश्यं सायकैश्चक्रुर्मेघा इव दिवाकरम् ॥ ०११ ॥

नामृष्यन्त सुसंरब्धाः शिखण्डिप्रमुखा रथाः ।
रथैरग्र्यजवैर्युक्तैः किङ्किणीजालसंवृतैः ॥ ०१२ ॥

आजग्मुरभिरक्षन्तः कुन्तीपुत्रं युधिष्ठिरम् ॥ ०१२ ॥

ततः प्रववृते रौद्रः सङ्ग्रामः शोणितोदकः ।
पाण्डवानां कुरूणां च यमराष्ट्रविवर्धनः ॥ ०१३ ॥

रथान्सप्तशतान्हत्वा कुरूणामाततायिनाम् ।
पाण्डवाः सह पाञ्चालैः पुनरेवाभ्यवारयन् ॥ ०१४ ॥

तत्र युद्धं महच्चासीत्तव पुत्रस्य पाण्डवैः ।
न च नस्तादृशं दृष्टं नैव चापि परिश्रुतम् ॥ ०१५ ॥

वर्तमाने तथा युद्धे निर्मर्यादे समन्ततः ।
वध्यमानेषु योधेषु तावकेष्वितरेषु च ॥ ०१६ ॥

निनदत्सु च योधेषु शङ्खवर्यैश्च पूरितैः ।
उत्कृष्टैः सिंहनादैश्च गर्जितेन च धन्विनाम् ॥ ०१७ ॥

अतिप्रवृद्धे युद्धे च छिद्यमानेषु मर्मसु ।

धावमानेषु योधेषु जयगृद्धिषु मारिष ॥ ०१८ ॥

संहारे सर्वतो जाते पृथिव्यां शोकसंभवे ।
बह्वीनामुत्तमस्त्रीणां सीमन्तोद्धरणे तथा ॥ ०१९ ॥

निर्मर्यादे तथा युद्धे वर्तमाने सुदारुणे ।
प्रादुरासन्विनाशाय तदोत्पाताः सुदारुणाः ॥ ०२० ॥

चचाल शब्दं कुर्वाणा सपर्वतवना मही ॥ ०२० ॥

सदण्डाः सोल्मुका राजञ्शीर्यमाणाः समन्ततः ।
उल्काः पेतुर्दिवो भूमावाहत्य रविमण्डलम् ॥ ०२१ ॥

विष्वग्वाताः प्रादुरासन्नीचैः शर्करवर्षिणः ।
अश्रूणि मुमुचुर्नागा वेपथुश्चास्पृशद्भृशम् ॥ ०२२ ॥

एतान्घोराननादृत्य समुत्पातान्सुदारुणान् ।
पुनर्युद्धाय संमन्त्र्य क्षत्रियास्तस्थुरव्यथाः ॥ ०२३ ॥

रमणीये कुरुक्षेत्रे पुण्ये स्वर्गं यियासवः ॥ ०२३ ॥

ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत् ।
युध्यध्वमग्रतो यावत्पृष्ठतो हन्मि पाण्डवान् ॥ ०२४ ॥

ततो नः संप्रयातानां मद्रयोधास्तरस्विनः ।
हृष्टाः किलकिलाशब्दमकुर्वन्तापरे तथा ॥ ०२५ ॥

अस्मांस्तु पुनरासाद्य लब्धलक्षा दुरासदाः ।
शरासनानि धुन्वन्तः शरवर्षैरवाकिरन् ॥ ०२६ ॥

ततो हतं परैस्तत्र मद्रराजबलं तदा ।

दुर्योधनबलं दृष्ट्वा पुनरासीत्पराङ्मुखम्  ॥ ०२७  ॥

गान्धारराजस्तु पुनर्वाक्यमाह ततो बली ।
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः  ॥ ०२८  ॥

अनीकं दशसाहस्रमश्वानां भरतर्षभ ।
आसीद्गान्धारराजस्य विमलप्रासयोधिनाम्  ॥ ०२९  ॥

बलेन तेन विक्रम्य वर्तमाने जनक्षये ।
पृष्ठतः पाण्डवानीकमभ्यघ्नन्निशितैः शरैः  ॥ ०३०  ॥

तदभ्रमिव वातेन क्षिप्यमाणं समन्ततः ।
अभज्यत महाराज पाण्डूनां सुमहद्बलम्  ॥ ०३१  ॥

ततो युधिष्ठिरः प्रेक्ष्य भग्नं स्वबलमन्तिकात् ।
अभ्यचोदयदव्यग्रः सहदेवं महाबलम्  ॥ ०३२  ॥

असौ सुबलपुत्रो नो जघनं पीड्य दंशितः ।
सेनां निसूदयन्त्येष पश्य पाण्डव दुर्मतिम्  ॥ ०३३  ॥

गच्छ त्वं द्रौपदेयाश्च शकुनिं सौबलं जहि ।
रथानीकमहं रक्ष्ये पाञ्चालसहितोऽनघ  ॥ ०३४  ॥

गच्छन्तु कुञ्जराः सर्वे वाजिनश्च सह त्वया ।
पादाताश्च त्रिसाहस्राः शकुनिं सौबलं जहि  ॥ ०३५  ॥

ततो गजाः सप्तशताश्चापपाणिभिरास्थिताः ।
पञ्च चाश्वसहस्राणि सहदेवश्च वीर्यवान्  ॥ ०३६  ॥

पादाताश्च त्रिसाहस्रा द्रौपदेयाश्च सर्वशः ।
रणे ह्यभ्यद्रवंस्ते तु शकुनिं युद्धदुर्मदम्  ॥ ०३७  ॥

ततस्तु सौबलो राजन्नभ्यतिक्रम्य पाण्डवान् ।
जघान पृष्ठतः सेनां जयगृध्रः प्रतापवान् ॥ ०३८ ॥

अश्वारोहास्तु संरब्धाः पाण्डवानां तरस्विनाम् ।
प्राविशन्सौबलानीकमभ्यतिक्रम्य तान्रथान् ॥ ०३९ ॥

ते तत्र सादिनः शूराः सौबलस्य महद्बलम् ।
गजमध्येऽवतिष्ठन्तः शरवर्षैरवाकिरन् ॥ ०४० ॥

तदुद्यतगदाप्रासमकापुरुषसेवितम् ।
प्रावर्तत महद्युद्धं राजन्दुर्मन्त्रिते तव ॥ ०४१ ॥

उपारमन्त ज्याशब्दाः प्रेक्षका रथिनोऽभवन् ।
न हि स्वेषां परेषां वा विशेषः प्रत्यदृश्यत ॥ ०४२ ॥

शूरबाहुविसृष्टानां शक्तीनां भरतर्षभ ।
ज्योतिषामिव संपातमपश्यन्कुरुपाण्डवाः ॥ ०४३ ॥

ऋष्टिभिर्विमलाभिश्च तत्र तत्र विशां पते ।
संपतन्तीभिराकाशमावृतं बह्वशोभत ॥ ०४४ ॥

प्रासानां पततां राजन्रूपमासीत्समन्ततः ।
शलभानामिवाकाशे तदा भरतसत्तम ॥ ०४५ ॥

रुधिरोक्षितसर्वाङ्गा विप्रविद्धैर्नियन्तृभिः ।
हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः ॥ ०४६ ॥

अन्योन्यपरिपिष्टाश्च समासाद्य परस्परम् ।
अविक्षताः स्म दृश्यन्ते वमन्तो रुधिरं मुखैः ॥ ०४७ ॥

ततोऽभवत्तमो घोरं सैन्येन रजसा वृते ।
तानपाक्रमतोऽद्राक्षं तस्माद्देशादरिंदमान्  ॥ ०४८  ॥

अश्वान्राजन्मनुष्यांश्च रजसा संवृते सति  ॥ ०४८  ॥

भूमौ निपतिताश्चान्ये वमन्तो रुधिरं बहु ।
केशाकेशिसमालग्ना न शेकुश्चेष्टितुं जनाः  ॥ ०४९  ॥

अन्योन्यमश्वपृष्ठेभ्यो विकर्षन्तो महाबलाः ।
मल्ला इव समासाद्य निजघ्नुरितरेतरम्  ॥ ०५०  ॥

अश्वैश्च व्यपकृष्यन्त बहवोऽत्र गतासवः  ॥ ०५०  ॥

भूमौ निपतिताश्चान्ये बहवो विजयैषिणः ।
तत्र तत्र व्यदृश्यन्त पुरुषाः शूरमानिनः  ॥ ०५१  ॥

रक्तोक्षितैश्छिन्नभुजैरपकृष्टशिरोरुहैः ।
व्यदृश्यत मही कीर्णा शतशोऽथ सहस्रशः  ॥ ०५२  ॥

दूरं न शक्यं तत्रासीद्गन्तुमश्वेन केनचित् ।
साश्वारोहैर्हतैरश्वैरावृते वसुधातले  ॥ ०५३  ॥

रुधिरोक्षितसंनाहैरात्तशस्त्रैरुदायुधैः ।
नानाप्रहरणैर्घोरैः परस्परवधैषिभिः  ॥ ०५४  ॥

सुसंनिकृष्टैः सङ्ग्रामे हतभूयिष्ठसैनिकैः  ॥ ०५४  ॥

स मुहूर्तं ततो युद्ध्वा सौबलोऽथ विशां पते ।
षट्सहस्रैर्हयैः शिष्टैरपायाच्छकुनिस्ततः  ॥ ०५५  ॥

तथैव पाण्डवानीकं रुधिरेण समुक्षितम् ।

षड्भिस्सहस्रैर्हयैः शिष्टैरपायाच्छ्रान्तवाहनम् ॥ ०५६ ॥

अश्वारोहास्तु पाण्डूनामब्रुवन्रुधिरोक्षिताः ।
सुसंनिकृष्टाः सङ्ग्रामे भूयिष्ठं त्यक्तजीविताः ॥ ०५७ ॥

नेह शक्यं रथैर्योद्धुं कुत एव महागजैः ।
रथानेव रथा यान्तु कुञ्जराः कुञ्जरानपि ॥ ०५८ ॥

प्रतियातो हि शकुनिः स्वमनीकमवस्थितः ।
न पुनः सौबलो राजा युद्धमभ्यागमिष्यति ॥ ०५९ ॥

ततस्तु द्रौपदेयाश्च ते च मत्ता महाद्विपाः ।
प्रययुर्यत्र पाञ्चाल्यो धृष्टद्युम्नो महारथः ॥ ०६० ॥

सहदेवोऽपि कौरव्य रजोमेघे समुत्थिते ।
एकाकी प्रययौ तत्र यत्र राजा युधिष्ठिरः ॥ ०६१ ॥

ततस्तेषु प्रयातेषु शकुनिः सौबलः पुनः ।
पार्श्वतोऽभ्यहनत्क्रुद्धो धृष्टद्युम्नस्य वाहिनीम् ॥ ०६२ ॥

तत्पुनस्तुमुलं युद्धं प्राणांस्त्यक्त्वाभ्यवर्तत ।
तावकानां परेषां च परस्परवधैषिणाम् ॥ ०६३ ॥

ते ह्यन्योन्यमवेक्षन्त तस्मिन्वीरसमागमे ।
योधाः पर्यपतन्राजञ्शतशोऽथ सहस्रशः ॥ ०६४ ॥

असिभिश्छिद्यमानानां शिरसां लोकसङ्क्षये ।
प्रादुरासीन्महाशब्दस्तालानां पततामिव ॥ ०६५ ॥

विमुक्तानां शरीराणां भिन्नानां पततां भुवि ।
सायुधानां च बाहूनामुरूणां च विशां पते ॥ ०६६ ॥

आसीत्कटकटाशब्दः सुमहाल्रोमहर्षणः ॥ ०६६ ॥

निघ्नन्तो निशितैः शस्त्रैर्भ्रातॄन्पुत्रान्सखीनपि ।
योधाः परिपतन्ति स्म यथामिषकृते खगाः ॥ ०६७ ॥

अन्योन्यं प्रतिसंरब्धाः समासाद्य परस्परम् ।
अहं पूर्वमहं पूर्वमिति न्यघ्नन्सहस्रशः ॥ ०६८ ॥

संघातैरासनभ्रष्टैरश्वारोहैर्गतासुभिः ।
हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः ॥ ०६९ ॥

स्फुरतां प्रतिपिष्टानामश्वानां शीघ्रसारिणाम् ।
स्तनतां च मनुष्याणां संनद्धानां विशां पते ॥ ०७० ॥

शक्त्यृष्टिप्रासशब्दश्च तुमुलः समजायत ।
भिन्दतां परमर्माणि राजन्दुर्मन्त्रिते तव ॥ ०७१ ॥

श्रमाभिभूताः संरब्धाः श्रान्तवाहाः पिपासिताः ।
विक्षताश्च शितैः शस्त्रैरभ्यवर्तन्त तावकाः ॥ ०७२ ॥

मत्ता रुधिरगन्धेन बहवोऽत्र विचेतसः ।
जघ्नुः परान्स्वकांश्चैव प्राप्तान्प्राप्ताननन्तरान् ॥ ०७३ ॥

बहवश्च गतप्राणाः क्षत्रिया जयगृद्धिनः ।
भूमावभ्यपतन्राजञ्शरवृष्टिभिरावृताः ॥ ०७४ ॥

वृकगृध्रशृगालानां तुमुले मोदनेऽहनि ।
आसीद्बलक्षयो घोरस्तव पुत्रस्य पश्यतः ॥ ०७५ ॥

नराश्वकायसंछन्ना भूमिरासीद्विशां पते ।

रुधिरोदकचित्रा च भीरूणां भयवर्धिनी ॥ ०७६ ॥

असिभिः पट्टिशैः शूलैस्तक्षमाणाः पुनः पुनः ।
तावकाः पाण्डवाश्चैव नाभ्यवर्तन्त भारत ॥ ०७७ ॥

प्रहरन्तो यथाशक्ति यावत्प्राणस्य धारणम् ।
योधाः परिपतन्ति स्म वमन्तो रुधिरं व्रणैः ॥ ०७८ ॥

शिरो गृहीत्वा केशेषु कबन्धः समदृश्यत ।
उद्यम्य निशितं खड्गं रुधिरेण समुक्षितम् ॥ ०७९ ॥

अथोत्थितेषु बहुषु कबन्धेषु जनाधिप ।
तथा रुधिरगन्धेन योधाः कश्मलमाविशन् ॥ ०८० ॥

मन्दीभूते ततः शब्दे पाण्डवानां महद्बलम् ।
अल्पावशिष्टैस्तुरगैरभ्यवर्तत सौबलः ॥ ०८१ ॥

ततोऽभ्यधावंस्त्वरिताः पाण्डवा जयगृद्धिनः ।
पदातयश्च नागाश्च सादिनश्चोद्यतायुधाः ॥ ०८२ ॥

कोष्टकीकृत्य चाप्येनं परिक्षिप्य च सर्वशः ।
शस्त्रैर्नानाविधैर्जघ्नुर्युद्धपारं तितीर्षवः ॥ ०८३ ॥

त्वदीयास्तांस्तु संप्रेक्ष्य सर्वतः समभिद्रुतान् ।
साश्वपत्तिद्विपरथाः पाण्डवानभिदुद्रुवुः ॥ ०८४ ॥

केचित्पदातयः पद्भिर्मुष्टिभिश्च परस्परम् ।
निजघ्नुः समरे शूराः क्षीणशस्त्रास्ततोऽपतन् ॥ ०८५ ॥

रथेभ्यो रथिनः पेतुर्द्विपेभ्यो हस्तिसादिनः ।
विमानेभ्य इव भ्रष्टाः सिद्धाः पुण्यक्षयाद्यथा ॥ ०८६ ॥

एवमन्योन्यमायस्ता योधा जघ्नुर्महामृधे ।
पितॄन्भ्रातॄन्वयस्यांश्च पुत्रानपि तथापरे ॥ ०८७ ॥

एवमासीदमर्यादं युद्धं भरतसत्तम ।
प्रासासिबाणकलिले वर्तमाने सुदारुणे ॥ ०८८ ॥

---

# अध्याय ०२३

सञ्जय उवाच ॥

तस्मिञ्शब्दे मृदौ जाते पाण्डवैर्निहते बले ।
अश्वैः सप्तशतैः शिष्टैरुपावर्तत सौबलः ॥ ००१ ॥

स यात्वा वाहिनीं तूर्णमब्रवीत्त्वरयन्युधि ।
युध्यध्वमिति संहृष्टाः पुनः पुनररिंदमः ॥ ००२ ॥

अपृच्छत्क्षत्रियांस्तत्र क्व नु राजा महारथः ॥ ००२ ॥

शकुनेस्तु वचः श्रुत्वा त ऊचुर्भरतर्षभ ।
असौ तिष्ठति कौरव्यो रणमध्ये महारथः ॥ ००३ ॥

यत्रैतत्सुमहच्छत्रं पूर्णचन्द्रसमप्रभम् ।
यत्रैते सतलत्राणा रथास्तिष्ठन्ति दंशिताः ॥ ००४ ॥

यत्रैष शब्दस्तुमुलः पर्जन्यनिनदोपमः ।
तत्र गच्छ द्रुतं राजंस्ततो द्रक्ष्यसि कौरवम् ॥ ००५ ॥

एवमुक्तस्तु तैः शूरैः शकुनिः सौबलस्तदा ।
प्रययौ तत्र यत्रासौ पुत्रस्तव नराधिप ॥ ००६ ॥

सर्वतः संवृतो वीरैः समरेष्वनिवर्तिभिः ॥ ००६ ॥

ततो दुर्योधनं दृष्ट्वा रथानीके व्यवस्थितम् ।
सरथांस्तावकान्सर्वान्हर्षयञ्शकुनिस्ततः ॥ ००७ ॥

दुर्योधनमिदं वाक्यं हृष्टरूपो विशां पते ।
कृतकार्यमिवात्मानं मन्यमानोऽब्रवीन्नृपम् ॥ ००८ ॥

जहि राजन्रथानीकमश्वाः सर्वे जिता मया ।
नात्यक्त्वा जीवितं संख्ये शक्यो जेतुं युधिष्ठिरः ॥ ००९ ॥

हते तस्मिन्रथानीके पाण्डवेनाभिपालिते ।
गजानेतान्हनिष्यामः पदातींश्चेतरांस्तथा ॥ ०१० ॥

श्रुत्वा तु वचनं तस्य तावका जयगृद्धिनः ।
जवेनाभ्यपतन्हृष्टाः पाण्डवानामनीकिनीम् ॥ ०११ ॥

सर्वे विवृततूणीराः प्रगृहीतशरासनाः ।
शरासनानि धुन्वानाः सिंहनादं प्रचक्रिरे ॥ ०१२ ॥

ततो ज्यातलनिर्घोषः पुनरासीद्विशां पते ।
प्रादुरासीच्छराणां च सुमुक्तानां सुदारुणः ॥ ०१३ ॥

तान्समीपगतान्दृष्ट्वा जवेनोद्यतकार्मुकान् ।
उवाच देवकीपुत्रं कुन्तीपुत्रो धनञ्जयः ॥ ०१४ ॥

चोदयाश्वानसंभ्रान्तः प्रविशैतद्बलार्णवम् ।

अन्तमद्य गमिष्यामि शत्रूणां निशितैः शरैः ॥ ०१५ ॥

अष्टादश दिनान्यद्य युद्धस्यास्य जनार्दन ।
वर्तमानस्य महतः समासाद्य परस्परम् ॥ ०१६ ॥

अनन्तकल्पा ध्वजिनी भूत्वा ह्येषां महात्मनाम् ।
क्षयमद्य गता युद्धे पश्य दैवं यथाविधम् ॥ ०१७ ॥

समुद्रकल्पं तु बलं धार्तराष्ट्रस्य माधव ।
अस्मानासाद्य सञ्जातं गोष्पदोपममच्युत ॥ ०१८ ॥

हते भीष्मे च संदध्याच्छिवं स्यादिह माधव ।
न च तत्कृतवान्मूढो धार्तराष्ट्रः सुबालिशः ॥ ०१९ ॥

उक्तं भीष्मेण यद्वाक्यं हितं पथ्यं च माधव ।
तच्चापि नासौ कृतवान्वीतबुद्धिः सुयोधनः ॥ ०२० ॥

तस्मिंस्तु पतिते भीष्मे प्रच्युते पृथिवीतले ।
न जाने कारणं किं नु येन युद्धमवर्तत ॥ ०२१ ॥

मूढांस्तु सर्वथा मन्ये धार्तराष्ट्रान्सुबालिशान् ।
पतिते शंतनोः पुत्रे येऽकार्षुः संयुगं पुनः ॥ ०२२ ॥

अनन्तरं च निहते द्रोणे ब्रह्मविदां वरे ।
राधेये च विकर्णे च नैवाशाम्यत वैशसम् ॥ ०२३ ॥

अल्पावशिष्टे सैन्येऽस्मिन्सूतपुत्रे च पातिते ।
सपुत्रे वै नरव्याघ्रे नैवाशाम्यत वैशसम् ॥ ०२४ ॥

श्रुतायुषि हते शूरे जलसंधे च पौरवे ।
श्रुतायुधे च नृपतौ नैवाशाम्यत वैशसम् ॥ ०२५ ॥

भूरिश्रवसि शल्ये च शाल्वे चैव जनार्दन ।
आवन्त्येषु च वीरेषु नैवाशाम्यत वैशसम्  ॥ ०२६  ॥

जयद्रथे च निहते राक्षसे चाप्यलायुधे ।
बाह्लिके सोमदत्ते च नैवाशाम्यत वैशसम्  ॥ ०२७  ॥

भगदत्ते हते शूरे काम्बोजे च सुदक्षिणे ।
दुःशासने च निहते नैवाशाम्यत वैशसम्  ॥ ०२८  ॥

दृष्ट्वा च निहताञ्शूरान्पृथङ्माण्डलिकान्नृपान् ।
बलिनश्च रणे कृष्ण नैवाशाम्यत वैशसम्  ॥ ०२९  ॥

अक्षौहिणीपतीन्दृष्ट्वा भीमसेनेन पातितान् ।
मोहाद्वा यदि वा लोभान्नैवाशाम्यत वैशसम्  ॥ ०३०  ॥

को नु राजकुले जातः कौरवेयो विशेषतः ।
निरर्थकं महद्वैरं कुर्यादन्यः सुयोधनात्  ॥ ०३१  ॥

गुणतोऽभ्यधिकं ज्ञात्वा बलतः शौर्यतोऽपि वा ।
अमूढः को नु युध्येत जानन्प्राज्ञो हिताहितम्  ॥ ०३२  ॥

यन्न तस्य मनो ह्यासीत्त्वयोक्तस्य हितं वचः ।
प्रशमे पाण्डवैः सार्धं सोऽन्यस्य शृणुयात्कथम्  ॥ ०३३  ॥

येन शांतनवो भीष्मो द्रोणो विदुर एव च ।
प्रत्याख्याताः शमस्यार्थे किं नु तस्याद्य भेषजम्  ॥ ०३४  ॥

मौर्ख्याद्येन पिता वृद्धः प्रत्याख्यातो जनार्दन ।
तथा माता हितं वाक्यं भाषमाणा हितैषिणी  ॥ ०३५  ॥

प्रत्याख्याता ह्यसत्कृत्य स कस्मै रोचयेद्वचः ॥ ०३५ ॥

कुलान्तकरणो व्यक्तं जात एष जनार्दन ।
तथास्य दृश्यते चेष्टा नीतिश्चैव विशां पते ॥ ०३६ ॥

नैष दास्यति नो राज्यमिति मे मतिरच्युत ॥ ०३६ ॥

उक्तोऽहं बहुशस्तात विदुरेण महात्मना ।
न जीवन्दास्यते भागं धार्तराष्ट्रः कथञ्चन ॥ ०३७ ॥

यावत्प्राणा धमिष्यन्ति धार्तराष्ट्रस्य मानद ।
तावद्युष्मास्वपापेषु प्रचरिष्यति पातकम् ॥ ०३८ ॥

न स युक्तोऽन्यथा जेतुमृते युद्धेन माधव ।
इत्यब्रवीत्सदा मां हि विदुरः सत्यदर्शनः ॥ ०३९ ॥

तत्सर्वमद्य जानामि व्यवसायं दुरात्मनः ।
यदुक्तं वचनं तेन विदुरेण महात्मना ॥ ०४० ॥

यो हि श्रुत्वा वचः पथ्यं जामदग्न्याद्यथातथम् ।
अवामन्यत दुर्बुद्धिर्ध्रुवं नाशमुखे स्थितः ॥ ०४१ ॥

उक्तं हि बहुभिः सिद्धैर्जातमात्रे सुयोधने ।
एनं प्राप्य दुरात्मानं क्षयं क्षत्रं गमिष्यति ॥ ०४२ ॥

तदिदं वचनं तेषां निरुक्तं वै जनार्दन ।
क्षयं याता हि राजानो दुर्योधनकृते भृशम् ॥ ०४३ ॥

सोऽद्य सर्वान्रणे योधान्निहनिष्यामि माधव ।
क्षत्रियेषु हतेष्वाशु शून्ये च शिबिरे कृते ॥ ०४४ ॥

वधाय चात्मनोऽस्माभिः संयुगं रोचयिष्यति ।
तदन्तं हि भवेद्वैरमनुमानेन माधव ॥ ०४५ ॥

एवं पश्यामि वार्ष्णेय चिन्तयन्प्रज्ञया स्वया ।
विदुरस्य च वाक्येन चेष्टया च दुरात्मनः ॥ ०४६ ॥

संयाहि भारतीं वीर यावद्धन्मि शितैः शरैः ।
दुर्योधनं दुरात्मानं वाहिनीं चास्य संयुगे ॥ ०४७ ॥

क्षेममद्य करिष्यामि धर्मराजस्य माधव ।
हत्वैतद्दुर्बलं सैन्यं धार्तराष्ट्रस्य पश्यतः ॥ ०४८ ॥

सञ्जय उवाच ॥

अभीशुहस्तो दाशार्हस्तथोक्तः सव्यसाचिना ।
तद्बलौघममित्राणामभीतः प्राविशद्रणे ॥ ०४९ ॥

शरासनवरं घोरं शक्तिकण्टकसंवृतम् ।
गदापरिघपन्थानं रथनागमहाद्रुमम् ॥ ०५० ॥

हयपत्तिलताकीर्णं गाहमानो महायशाः ।
व्यचरत्तत्र गोविन्दो रथेनातिपताकिना ॥ ०५१ ॥

ते हयाः पाण्डुरा राजन्वहन्तोऽर्जुनमाहवे ।
दिक्षु सर्वास्वदृश्यन्त दाशार्हेण प्रचोदिताः ॥ ०५२ ॥

ततः प्रायाद्रथेनाजौ सव्यसाची परंतपः ।
किरञ्शरशतांस्तीक्ष्णान्वारिधारा इवाम्बुदः ॥ ०५३ ॥

प्रादुरासीन्महाञ्शब्दः शराणां नतपर्वणाम् ।
इषुभिश्छाद्यमानानां समरे सव्यसाचिना ॥ ०५४ ॥

असज्जन्तस्तनुत्रेषु शरौघाः प्रापतन्भुवि ।
इन्द्राशनिसमस्पर्शा गाण्डीवप्रेषिताः शराः ॥ ०५५ ॥

नरान्नागान्समाहत्य हयांश्चापि विशां पते ।
अपतन्त रणे बाणाः पतङ्गा इव घोषिणः ॥ ०५६ ॥

आसीत्सर्वमवच्छन्नं गाण्डीवप्रेषितैः शरैः ।
न प्राज्ञायन्त समरे दिशो वा प्रदिशोऽपि वा ॥ ०५७ ॥

सर्वमासीज्जगत्पूर्णं पार्थनामाङ्कितैः शरैः ।
रुक्मपुङ्खैस्तैलधौतैः कर्मारपरिमार्जितैः ॥ ०५८ ॥

ते दह्यमानाः पार्थेन पावकेनेव कुञ्जराः ।
समासीदन्त कौरव्या वध्यमानाः शितैः शरैः ॥ ०५९ ॥

शरचापधरः पार्थः प्रज्वलन्निव भारत ।
ददाह समरे योधान्कक्षमग्निरिव ज्वलन् ॥ ०६० ॥

यथा वनान्ते वनपैर्विसृष्टः ; कक्षं दहेत्कृष्णगतिः सघोषः ।
भूरिद्रुमं शुष्कलतावितानं ; भृशं समृद्धो ज्वलनः प्रतापी ॥ ०६१ ॥

एवं स नाराचगणप्रतापी ; शरार्चिरुच्चावचतिग्मतेजाः ।
ददाह सर्वां तव पुत्रसेना ;ममृष्यमाणस्तरसा तरस्वी ॥ ०६२ ॥

तस्येषवः प्राणहराः सुमुक्ता ; नासज्जन्वै वर्मसु रुक्मपुङ्खाः ।
न च द्वितीयं प्रमुमोच बाणं ; नरे हये वा परमद्विपे वा ॥ ०६३ ॥

अनेकरूपाकृतिभिर्हि बाणै ;र्महारथानीकमनुप्रविश्य ।
स एव एकस्तव पुत्रसेनां ; जघान दैत्यानिव वज्रपाणिः ॥ ०६४ ॥

# अध्याय ०२४

सञ्जय उवाच ॥

अस्यतां यतमानानां शूराणामनिवर्तिनाम् ।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ ००१ ॥

इन्द्राशनिसमस्पर्शानविषह्यान्महौजसः ।
विसृजन्दृश्यते बाणान्धारा मुञ्चन्निवाम्बुदः ॥ ००२ ॥

तत्सैन्यं भरतश्रेष्ठ वध्यमानं किरीटिना ।
संप्रदुद्राव सङ्ग्रामात्तव पुत्रस्य पश्यतः ॥ ००३ ॥

हतधुर्या रथाः केचिद्धतसूतास्तथापरे ।
भग्नाक्षयुगचक्रेषाः केचिदासन्विशां पते ॥ ००४ ॥

अन्येषां सायकाः क्षीणास्तथान्ये शरपीडिताः ।
अक्षता युगपत्केचित्प्राद्रवन्भयपीडिताः ॥ ००५ ॥

केचित्पुत्रानुपादाय हतभूयिष्ठवाहनाः ।
विचुक्रुशुः पितृनन्ये सहायानपरे पुनः ॥ ००६ ॥

बान्धवांश्च नरव्याघ्र भ्रातृन्संबन्धिनस्तथा ।
दुद्रुवुः केचिदुत्सृज्य तत्र तत्र विशां पते ॥ ००७ ॥

बहवोऽत्र भृशं विद्धा मुह्यमाना महारथाः ।
निष्टनन्तः स्म दृश्यन्ते पार्थबाणहता नराः ॥ ००८ ॥

तानन्ये रथमारोप्य समाश्वास्य मुहूर्तकम् ।
विश्रान्ताश्च वितृष्णाश्च पुनर्युद्धाय जग्मिरे ॥ ००९ ॥

तानपास्य गताः केचित्पुनरेव युयुत्सवः ।
कुर्वन्तस्तव पुत्रस्य शासनं युद्धदुर्मदाः ॥ ०१० ॥

पानीयमपरे पीत्वा पर्याश्वास्य च वाहनम् ।
वर्माणि च समारोप्य केचिद्भरतसत्तम ॥ ०११ ॥

समाश्वास्यापरे भ्रातॄन्निक्षिप्य शिबिरेऽपि च ।
पुत्रानन्ये पितॄनन्ये पुनर्युद्धमरोचयन् ॥ ०१२ ॥

सज्जयित्वा रथान्केचिद्यथामुख्यं विशां पते ।
आप्लुत्य पाण्डवानीकं पुनर्युद्धमरोचयन् ॥ ०१३ ॥

ते शूराः किङ्किणीजालैः समाच्छन्ना बभासिरे ।
त्रैलोक्यविजये युक्ता यथा दैतेयदानवाः ॥ ०१४ ॥

आगम्य सहसा केचिद्रथैः स्वर्णविभूषितैः ।
पाण्डवानामनीकेषु धृष्टद्युम्नमयोधयन् ॥ ०१५ ॥

धृष्टद्युम्नोऽपि पाञ्चाल्यः शिखण्डी च महारथः ।
नाकुलिश्च शतानीको रथानीकमयोधयन् ॥ ०१६ ॥

पाञ्चाल्यस्तु ततः क्रुद्धः सैन्येन महता वृतः ।
अभ्यद्रवत्सुसंरब्धस्तावकान्हन्तुमुद्यतः ॥ ०१७ ॥

ततस्त्वापततस्तस्य तव पुत्रो जनाधिप ।
बाणसंघाननेकान्वै प्रेषयामास भारत ॥ ०१८ ॥

धृष्टद्युम्नस्ततो राजंस्तव पुत्रेण धन्विना ।

नाराचैर्बहुभिः क्षिप्रं बाह्वोरुरसि चार्पितः ॥ ०१९ ॥

सोऽतिविद्धो महेष्वासस्तोत्त्रार्दित इव द्विपः ।
तस्याश्वांश्चतुरो बाणैः प्रेषयामास मृत्यवे ॥ ०२० ॥

सारथेश्चास्य भल्लेन शिरः कायादपाहरत् ॥ ०२० ॥

ततो दुर्योधनो राजा पृष्ठमारुह्य वाजिनः ।
अपाक्रामद्धतरथो नातिदूरमरिंदमः ॥ ०२१ ॥

दृष्ट्वा तु हतविक्रान्तं स्वमनीकं महाबलः ।
तव पुत्रो महाराज प्रययौ यत्र सौबलः ॥ ०२२ ॥

ततो रथेषु भग्नेषु त्रिसाहस्रा महाद्विपाः ।
पाण्डवान्रथिनः पञ्च समन्तात्पर्यवारयन् ॥ ०२३ ॥

ते वृताः समरे पञ्च गजानीकेन भारत ।
अशोभन्त नरव्याघ्रा ग्रहा व्याप्ता घनैरिव ॥ ०२४ ॥

ततोऽर्जुनो महाराज लब्धलक्षो महाभुजः ।
विनिर्ययौ रथेनैव श्वेताश्वः कृष्णसारथिः ॥ ०२५ ॥

तैः समन्तात्परिवृतः कुञ्जरैः पर्वतोपमैः ।
नाराचैर्विमलैस्तीक्ष्णैर्गजानीकमपोथयत् ॥ ०२६ ॥

तत्रैकबाणनिहतानपश्याम महागजान् ।
पतितान्पात्यमानांश्च विभिन्नान्सव्यसाचिना ॥ ०२७ ॥

भीमसेनस्तु तान्दृष्ट्वा नागान्मत्तगजोपमः ।
करेण गृह्य महतीं गदामभ्यपतद्बली ॥ ०२८ ॥

अवप्लुत्य रथात्तूर्णं दण्डपाणिरिवान्तकः ॥ ०२८ ॥

तमुद्यतगदं दृष्ट्वा पाण्डवानां महारथम् ।
वित्रेसुस्तावकाः सैन्याः शकृन्मूत्रं प्रसुस्रुवुः ॥ ०२९ ॥

आविग्नं च बलं सर्वं गदाहस्ते वृकोदरे ॥ ०२९ ॥

गदया भीमसेनेन भिन्नकुम्भान्रजस्वलान् ।
धावमानानपश्याम कुञ्जरान्पर्वतोपमान् ॥ ०३० ॥

प्रधाव्य कुञ्जरास्ते तु भीमसेनगदाहताः ।
पेतुरार्तस्वरं कृत्वा छिन्नपक्षा इवाद्रयः ॥ ०३१ ॥

तान्भिन्नकुम्भान्सुबहून्द्रवमाणानितस्ततः ।
पतमानांश्च संप्रेक्ष्य वित्रेसुस्तव सैनिकाः ॥ ०३२ ॥

युधिष्ठिरोऽपि सङ्क्रुद्धो माद्रीपुत्रौ च पाण्डवौ ।
गृध्रपक्षैः शितैर्बाणैर्जघ्नुर्वै गजयोधिनः ॥ ०३३ ॥

धृष्टद्युम्नस्तु समरे पराजित्य नराधिपम् ।
अपक्रान्ते तव सुते हयपृष्ठं समाश्रिते ॥ ०३४ ॥

दृष्ट्वा च पाण्डवान्सर्वान्कुञ्जरैः परिवारितान् ।
धृष्टद्युम्नो महाराज सह सर्वैः प्रभद्रकैः ॥ ०३५ ॥

पुत्रः पाञ्चालराजस्य जिघांसुः कुञ्जरान्ययौ ॥ ०३५ ॥

अदृष्ट्वा तु रथानीके दुर्योधनमरिंदमम् ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ ०३६ ॥

अपृच्छन्क्षत्रियांस्तत्र क्व नु दुर्योधनो गतः ॥ ०३६ ॥

अपश्यमाना राजानं वर्तमाने जनक्षये ।
मन्वाना निहतं तत्र तव पुत्रं महारथाः ॥ ०३७ ॥

विषण्णवदना भूत्वा पर्यपृच्छन्त ते सुतम् ॥ ०३७ ॥

आहुः केचिद्धते सूते प्रयातो यत्र सौबलः ।
अपरे त्वब्रुवंस्तत्र क्षत्रिया भृशविक्षताः ॥ ०३८ ॥

दुर्योधनेन किं कार्यं द्रक्ष्यध्वं यदि जीवति ।
युध्यध्वं सहिताः सर्वे किं वो राजा करिष्यति ॥ ०३९ ॥

ते क्षत्रियाः क्षतैर्गात्रैर्हतभूयिष्ठवाहनाः ।
शरैः संपीड्यमानाश्च नातिव्यक्तमिवाब्रुवन् ॥ ०४० ॥

इदं सर्वं बलं हन्मो येन स्म परिवारिताः ।
एते सर्वे गजान्हत्वा उपयान्ति स्म पाण्डवाः ॥ ०४१ ॥

श्रुत्वा तु वचनं तेषामश्वत्थामा महाबलः ।
हित्वा पाञ्चालराजस्य तदनीकं दुरुत्सहम् ॥ ०४२ ॥

कृपश्च कृतवर्मा च प्रययुर्यत्र सौबलः ।
रथानीकं परित्यज्य शूराः सुदृढधन्विनः ॥ ०४३ ॥

ततस्तेषु प्रयातेषु धृष्टद्युम्नपुरोगमाः ।
आययुः पाण्डवा राजन्विनिघ्नन्तः स्म तावकान् ॥ ०४४ ॥

दृष्ट्वा तु तानापततः संप्रहृष्टान्महारथान् ।
पराक्रान्तांस्ततो वीरान्निराशाञ्जीविते तदा ॥ ०४५ ॥

विवर्णमुखभूयिष्ठमभवत्तावकं बलम् ॥ ०४५ ॥

परिक्षीणायुधान्दृष्ट्वा तानहं परिवारितान् ।
राजन्बलेन द्व्यङ्गेन त्यक्त्वा जीवितमात्मनः ॥ ०४६ ॥

आत्मनापञ्चमोऽयुध्यं पाञ्चालस्य बलेन ह ।
तस्मिन्देशे व्यवस्थाप्य यत्र शारद्वतः स्थितः ॥ ०४७ ॥

संप्रयुद्धा वयं पञ्च किरीटिशरपीडिताः ।
धृष्टद्युम्नं महानीकं तत्र नोऽभूद्रणो महान् ॥ ०४८ ॥

जितास्तेन वयं सर्वे व्यपयाम रणात्ततः ॥ ०४८ ॥

अथापश्यं सात्यकिं तमुपायान्तं महारथम् ।
रथैश्चतुःशतैर्वीरो मां चाभ्यद्रवदाहवे ॥ ०४९ ॥

धृष्टद्युम्नादहं मुक्तः कथञ्चिच्छ्रान्तवाहनः ।
पतितो माधवानीकं दुष्कृती नरकं यथा ॥ ०५० ॥

तत्र युद्धमभूद्घोरं मुहूर्तमतिदारुणम् ॥ ०५० ॥

सात्यकिस्तु महाबाहुर्मम हत्वा परिच्छदम् ।
जीवग्राहमगृह्णान्मां मूर्छितं पतितं भुवि ॥ ०५१ ॥

ततो मुहूर्तादिव तद्गजानीकमवध्यत ।
गदया भीमसेनेन नाराचैरर्जुनेन च ॥ ०५२ ॥

प्रतिपिष्टैर्महानागैः समन्तात्पर्वतोपमैः ।
नातिप्रसिद्धेव गतिः पाण्डवानामजायत ॥ ०५३ ॥

रथमार्गांस्ततश्चक्रे भीमसेनो महाबलः ।
पाण्डवानां महाराज व्यपकर्षन्महागजान् ॥ ०५४ ॥

अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
अपश्यन्तो रथानीके दुर्योधनमरिंदमम्  ॥ ०५५  ॥

राजानं मृगयामासुस्तव पुत्रं महारथम्  ॥ ०५५  ॥

परित्यज्य च पाञ्चालं प्रयाता यत्र सौबलः ।
राज्ञोऽदर्शनसंविग्ना वर्तमाने जनक्षये  ॥ ०५६  ॥

---

# अध्याय ०२५

सञ्जय उवाच  ॥

गजानीके हते तस्मिन्पाण्डुपुत्रेण भारत ।
वध्यमाने बले चैव भीमसेनेन संयुगे  ॥ ००१  ॥

चरन्तं च तथा दृष्ट्वा भीमसेनमरिंदमम् ।
दण्डहस्तं यथा क्रुद्धमन्तकं प्राणहारिणम्  ॥ ००२  ॥

समेत्य समरे राजन्हतशेषाः सुतास्तव ।
अदृश्यमाने कौरव्ये पुत्रे दुर्योधने तव  ॥ ००३  ॥

सोदर्याः सहिता भूत्वा भीमसेनमुपाद्रवन्  ॥ ००३  ॥

दुर्मर्षणो महाराज जैत्रो भूरिबलो रविः ।
इत्येते सहिता भूत्वा तव पुत्राः समन्ततः  ॥ ००४  ॥

भीमसेनमभिद्रुत्य रुरुधुः सर्वतोदिशम्  ॥ ००४  ॥

ततो भीमो महाराज स्वरथं पुनरास्थितः ।
मुमोच निशितान्बाणान्पुत्राणां तव मर्मसु ॥ ००५ ॥

ते कीर्यमाणा भीमेन पुत्रास्तव महारणे ।
भीमसेनमपासेधन्प्रवणादिव कुञ्जरम् ॥ ००६ ॥

ततः क्रुद्धो रणे भीमः शिरो दुर्मर्षणस्य ह ।
क्षुरप्रेण प्रमथ्याशु पातयामास भूतले ॥ ००७ ॥

ततोऽपरेण भल्लेन सर्वावरणभेदिना ।
श्रुतान्तमवधीद्भीमस्तव पुत्रं महारथः ॥ ००८ ॥

जयत्सेनं ततो विद्ध्वा नाराचेन हसन्निव ।
पातयामास कौरव्यं रथोपस्थादरिंदमः ॥ ००९ ॥

स पपात रथाद्राजन्भूमौ तूर्णं ममार च ॥ ००९ ॥

श्रुतर्वा तु ततो भीमं क्रुद्धो विव्याध मारिष ।
शतेन गृध्रवाजानां शराणां नतपर्वणाम् ॥ ०१० ॥

ततः क्रुद्धो रणे भीमो जैत्रं भूरिबलं रविम् ।
त्रीनेतांस्त्रिभिरानर्छद्विषाग्निप्रतिमैः शरैः ॥ ०११ ॥

ते हता न्यपतन्भूमौ स्यन्दनेभ्यो महारथाः ।
वसन्ते पुष्पशबला निकृत्ता इव किंशुकाः ॥ ०१२ ॥

ततोऽपरेण तीक्ष्णेन नाराचेन परंतपः ।
दुर्विमोचनमाहत्य प्रेषयामास मृत्यवे ॥ ०१३ ॥

स हतः प्रापतद्भूमौ स्वरथाद्रथिनां वरः ।

गिरेस्तु कूटजो भग्नो मारुतेनेव पादपः ॥ ०१४ ॥

दुष्प्रधर्षं ततश्चैव सुजातं च सुतौ तव ।
एकैकं न्यवधीत्संख्ये द्वाभ्यां द्वाभ्यां चमूमुखे ॥ ०१५ ॥

तौ शिलीमुखविद्धाङ्गौ पेततू रथसत्तमौ ॥ ०१५ ॥

ततो यतन्तमपरमभिवीक्ष्य सुतं तव ।
भल्लेन युधि विव्याध भीमो दुर्विषहं रणे ॥ ०१६ ॥

स पपात हतो वाहात्पश्यतां सर्वधन्विनाम् ॥ ०१६ ॥

दृष्ट्वा तु निहतान्भ्रातॄन्बहूनेकेन संयुगे ।
अमर्षवशमापन्नः श्रुतर्वा भीममभ्ययात् ॥ ०१७ ॥

विक्षिपन्सुमहच्चापं कार्तस्वरविभूषितम् ।
विसृजन्सायकांश्चैव विषाग्निप्रतिमान्बहून् ॥ ०१८ ॥

स तु राजन्धनुश्छित्त्वा पाण्डवस्य महामृधे ।
अथैनं छिन्नधन्वानं विंशत्या समवाकिरत् ॥ ०१९ ॥

ततोऽन्यद्धनुरादाय भीमसेनो महारथः ।
अवाकिरत्तव सुतं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ०२० ॥

महदासीत्तयोर्युद्धं चित्ररूपं भयानकम् ।
यादृशं समरे पूर्वं जम्भवासवयोरभूत् ॥ ०२१ ॥

तयोस्तत्र शरैर्मुक्तैर्यमदण्डनिभैः शुभैः ।
समाच्छन्ना धरा सर्वा खं च सर्वा दिशस्तथा ॥ ०२२ ॥

ततः श्रुतर्वा सङ्क्रुद्धो धनुरायम्य सायकैः ।

भीमसेनं रणे राजन्बाह्वोरुरसि चार्पयत् ॥ ०२३ ॥

सोऽतिविद्धो महाराज तव पुत्रेण धन्विना ।
भीमः सञ्चुक्षुभे क्रुद्धः पर्वणीव महोदधिः ॥ ०२४ ॥

ततो भीमो रुषाविष्टः पुत्रस्य तव मारिष ।
सारथिं चतुरश्चाश्वान्बाणैर्निन्ये यमक्षयम् ॥ ०२५ ॥

विरथं तं समालक्ष्य विशिखैर्लोमवाहिभिः ।
अवाकिरदमेयात्मा दर्शयन्पाणिलाघवम् ॥ ०२६ ॥

श्रुतर्वा विरथो राजन्नाददे खड्गचर्मणी ।
अथास्याददतः खड्गं शतचन्द्रं च भानुमत् ॥ ०२७ ॥

क्षुरप्रेण शिरः कायात्पातयामास पाण्डवः ॥ ०२७ ॥

छिन्नोत्तमाङ्गस्य ततः क्षुरप्रेण महात्मनः ।
पपात कायः स रथाद्वसुधामनुनादयन् ॥ ०२८ ॥

तस्मिन्निपतिते वीरे तावका भयमोहिताः ।
अभ्यद्रवन्त सङ्ग्रामे भीमसेनं युयुत्सवः ॥ ०२९ ॥

तानापतत एवाशु हतशेषाद्बलार्णवात् ।
दंशितः प्रतिजग्राह भीमसेनः प्रतापवान् ॥ ०३० ॥

ते तु तं वै समासाद्य परिवव्रुः समन्ततः ॥ ०३० ॥

ततस्तु संवृतो भीमस्तावकैर्निशितैः शरैः ।
पीडयामास तान्सर्वान्सहस्राक्ष इवासुरान् ॥ ०३१ ॥

ततः पञ्चशतान्हत्वा सवरूथान्महारथान् ।

जघान कुञ्जरानीकं पुनः सप्तशतं युधि ॥ ०३२ ॥

हत्वा दश सहस्राणि पत्तीनां परमेषुभिः ।
वाजिनां च शतान्यष्टौ पाण्डवः स्म विराजते ॥ ०३३ ॥

भीमसेनस्तु कौन्तेयो हत्वा युद्धे सुतांस्तव ।
मेने कृतार्थमात्मानं सफलं जन्म च प्रभो ॥ ०३४ ॥

तं तथा युध्यमानं च विनिघ्नन्तं च तावकान् ।
ईक्षितुं नोत्सहन्ते स्म तव सैन्यानि भारत ॥ ०३५ ॥

विद्राव्य तु कुरून्सर्वांस्तांश्च हत्वा पदानुगान् ।
दोर्भ्यां शब्दं ततश्चक्रे त्रासयानो महाद्विपान् ॥ ०३६ ॥

हतभूयिष्ठयोधा तु तव सेना विशां पते ।
किञ्चिच्छेषा महाराज कृपणा समपद्यत ॥ ०३७ ॥

---

# अध्याय ०२६

सञ्जय उवाच ॥

दुर्योधनो महाराज सुदर्शश्चापि ते सुतः ।
हतशेषौ तदा संख्ये वाजिमध्ये व्यवस्थितौ ॥ ००१ ॥

ततो दुर्योधनं दृष्ट्वा वाजिमध्ये व्यवस्थितम् ।
उवाच देवकीपुत्रः कुन्तीपुत्रं धनञ्जयम् ॥ ००२ ॥

शत्रवो हतभूयिष्ठा ज्ञातयः परिपालिताः ।

गृहीत्वा सञ्जयं चासौ निवृत्तः शिनिपुङ्गवः ॥ ००३ ॥

परिश्रान्तश्च नकुलः सहदेवश्च भारत ।
योधयित्वा रणे पापान्धार्तराष्ट्रपदानुगान् ॥ ००४ ॥

सुयोधनमभित्यज्य त्रय एते व्यवस्थिताः ।
कृपश्च कृतवर्मा च द्रौणिश्चैव महारथः ॥ ००५ ॥

असौ तिष्ठति पाञ्चाल्यः श्रिया परमया युतः ।
दुर्योधनबलं हत्वा सह सर्वैः प्रभद्रकैः ॥ ००६ ॥

असौ दुर्योधनः पार्थ वाजिमध्ये व्यवस्थितः ।
छत्रेण ध्रियमाणेन प्रेक्षमाणो मुहुर्मुहुः ॥ ००७ ॥

प्रतिव्यूह्य बलं सर्वं रणमध्ये व्यवस्थितः ।
एनं हत्वा शितैर्बाणैः कृतकृत्यो भविष्यसि ॥ ००८ ॥

गजानीकं हतं दृष्ट्वा त्वां च प्राप्तमरिंदम ।
यावन्न विद्रवन्त्येते तावज्जहि सुयोधनम् ॥ ००९ ॥

यातु कश्चित्तु पाञ्चाल्यं क्षिप्रमागम्यतामिति ।
परिश्रान्तबलस्तात नैष मुच्येत किल्बिषी ॥ ०१० ॥

तव हत्वा बलं सर्वं सङ्ग्रामे धृतराष्ट्रजः ।
जितान्पाण्डुसुतान्मत्वा रूपं धारयते महत् ॥ ०११ ॥

निहतं स्वबलं दृष्ट्वा पीडितं चापि पाण्डवैः ।
ध्रुवमेष्यति सङ्ग्रामे वधायैवात्मनो नृपः ॥ ०१२ ॥

एवमुक्तः फल्गुनस्तु कृष्णं वचनमब्रवीत् ।
धृतराष्ट्रसुताः सर्वे हता भीमेन मानद ॥ ०१३ ॥

यावेतावास्थितौ कृष्ण तावद्य न भविष्यतः ॥ ०१३ ॥

हतो भीष्मो हतो द्रोणः कर्णो वैकर्तनो हतः ।
मद्रराजो हतः शल्यो हतः कृष्ण जयद्रथः ॥ ०१४ ॥

हयाः पञ्चशताः शिष्टाः शकुनेः सौबलस्य च ।
रथानां तु शते शिष्टे द्वे एव तु जनार्दन ॥ ०१५ ॥

दन्तिनां च शतं साग्रं त्रिसाहस्राः पदातयः ॥ ०१५ ॥

अश्वत्थामा कृपश्चैव त्रिगर्ताधिपतिस्तथा ।
उलूकः शकुनिश्चैव कृतवर्मा च सात्वतः ॥ ०१६ ॥

एतद्बलमभूच्छेषं धार्तराष्ट्रस्य माधव ।
मोक्षो न नूनं कालाद्धि विद्यते भुवि कस्यचित् ॥ ०१७ ॥

तथा विनिहते सैन्ये पश्य दुर्योधनं स्थितम् ।
अद्याह्ना हि महाराजो हतामित्रो भविष्यति ॥ ०१८ ॥

न हि मे मोक्ष्यते कश्चित्परेषामिति चिन्तये ।
ये त्वद्य समरं कृष्ण न हास्यन्ति रणोत्कटाः ॥ ०१९ ॥

तान्वै सर्वान्हनिष्यामि यद्यपि स्युरमानुषाः ॥ ०१९ ॥

अद्य युद्धे सुसङ्क्रुद्धो दीर्घं राज्ञः प्रजागरम् ।
अपनेष्यामि गान्धारं पातयित्वा शितैः शरैः ॥ ०२० ॥

निकृत्या वै दुराचारो यानि रत्नानि सौबलः ।
सभायामहरद्द्यूते पुनस्तान्याहराम्यहम् ॥ ०२१ ॥

अद्य ता अपि वेत्स्यन्ति सर्वा नागपुरस्त्रियः ।
श्रुत्वा पतींश्च पुत्रांश्च पाण्डवैर्निहतान्युधि ॥ ०२२ ॥

समाप्तमद्य वै कर्म सर्वं कृष्ण भविष्यति ।
अद्य दुर्योधनो दीप्तां श्रियं प्राणांश्च त्यक्ष्यति ॥ ०२३ ॥

नापयाति भयात्कृष्ण सङ्ग्रामाद्यदि चेन्मम ।
निहतं विद्धि वार्ष्णेय धार्तराष्ट्रं सुबालिशम् ॥ ०२४ ॥

मम ह्येतदशक्तं वै वाजिवृन्दमरिंदम ।
सोढुं ज्यातलनिर्घोषं याहि यावन्निहन्म्यहम् ॥ ०२५ ॥

एवमुक्तस्तु दाशार्हः पाण्डवेन यशस्विना ।
अचोदयद्धयान्राजन्दुर्योधनबलं प्रति ॥ ०२६ ॥

तदनीकमभिप्रेक्ष्य त्रयः सज्जा महारथाः ।
भीमसेनोऽर्जुनश्चैव सहदेवश्च मारिष ॥ ०२७ ॥

प्रययुः सिंहनादेन दुर्योधनजिघांसया ॥ ०२७ ॥

तान्प्रेक्ष्य सहितान्सर्वाञ्जवेनोद्यतकार्मुकान् ।
सौबलोऽभ्यद्रवद्युद्धे पाण्डवानाततायिनः ॥ ०२८ ॥

सुदर्शनस्तव सुतो भीमसेनं समभ्ययात् ।
सुशर्मा शकुनिश्चैव युयुधाते किरीटिना ॥ ०२९ ॥

सहदेवं तव सुतो हयपृष्ठगतोऽभ्ययात् ॥ ०२९ ॥

ततो ह्ययत्नतः क्षिप्रं तव पुत्रो जनाधिप ।
प्रासेन सहदेवस्य शिरसि प्राहरद्भृशम् ॥ ०३० ॥

सोपाविशद्रथोपस्थे तव पुत्रेण ताडितः ।
रुधिराप्लुतसर्वाङ्ग आशीविष इव श्वसन् ॥ ०३१ ॥

प्रतिलभ्य ततः सञ्ज्ञां सहदेवो विशां पते ।
दुर्योधनं शरैस्तीक्ष्णैः सङ्क्रुद्धः समवाकिरत् ॥ ०३२ ॥

पार्थोऽपि युधि विक्रम्य कुन्तीपुत्रो धनञ्जयः ।
शूराणामश्वपृष्ठेभ्यः शिरांसि निचकर्त ह ॥ ०३३ ॥

तदनीकं तदा पार्थो व्यधमद्बहुभिः शरैः ।
पातयित्वा हयान्सर्वांस्त्रिगर्तानां रथान्ययौ ॥ ०३४ ॥

ततस्ते सहिता भूत्वा त्रिगर्तानां महारथाः ।
अर्जुनं वासुदेवं च शरवर्षैरवाकिरन् ॥ ०३५ ॥

सत्यकर्माणमाक्षिप्य क्षुरप्रेण महायशाः ।
ततोऽस्य स्यन्दनस्येषां चिच्छिदे पाण्डुनन्दनः ॥ ०३६ ॥

शिलाशितेन च विभो क्षुरप्रेण महायशाः ।
शिरश्चिच्छेद प्रहसंस्तप्तकुण्डलभूषणम् ॥ ०३७ ॥

सत्येषुमथ चादत्त योधानां मिषतां ततः ।
यथा सिंहो वने राजन्मृगं परिबुभुक्षितः ॥ ०३८ ॥

तं निहत्य ततः पार्थः सुशर्माणं त्रिभिः शरैः ।
विद्ध्वा तानहनत्सर्वान्रथान्रुक्मविभूषितान् ॥ ०३९ ॥

ततस्तु प्रत्वरन्पार्थो दीर्घकालं सुसंभृतम् ।
मुञ्चन्क्रोधविषं तीक्ष्णं प्रस्थलाधिपतिं प्रति ॥ ०४० ॥

तमर्जुनः पृषत्कानां शतेन भरतर्षभ ।

पूरयित्वा ततो वाहान्न्यहनत्तस्य धन्विनः ॥ ०४१ ॥

ततः शरं समादाय यमदण्डोपमं शितम् ।
सुशर्माणं समुद्दिश्य चिक्षेपाशु हसन्निव ॥ ०४२ ॥

स शरः प्रेषितस्तेन क्रोधदीप्तेन धन्विना ।
सुशर्माणं समासाद्य बिभेद हृदयं रणे ॥ ०४३ ॥

स गतासुर्महाराज पपात धरणीतले ।
नन्दयन्पाण्डवान्सर्वान्व्यथयंश्चापि तावकान् ॥ ०४४ ॥

सुशर्माणं रणे हत्वा पुत्रानस्य महारथान् ।
सप्त चाष्टौ च त्रिंशच्च सायकैरनयत्क्षयम् ॥ ०४५ ॥

ततोऽस्य निशितैर्बाणैः सर्वान्हत्वा पदानुगान् ।
अभ्यगाद्भारतीं सेनां हतशेषां महारथः ॥ ०४६ ॥

भीमस्तु समरे क्रुद्धः पुत्रं तव जनाधिप ।
सुदर्शनमदृश्यं तं शरैश्चक्रे हसन्निव ॥ ०४७ ॥

ततोऽस्य प्रहसन्क्रुद्धः शिरः कायादपाहरत् ।
क्षुरप्रेण सुतीक्ष्णेन स हतः प्रापतद्भुवि ॥ ०४८ ॥

तस्मिंस्तु निहते वीरे ततस्तस्य पदानुगाः ।
परिवव्रू रणे भीमं किरन्तो विशिखाञ्शितान् ॥ ०४९ ॥

ततस्तु निशितैर्बाणैस्तदनीकं वृकोदरः ।
इन्द्राशनिसमस्पर्शैः समन्तात्पर्यवाकिरत् ॥ ०५० ॥

ततः क्षणेन तद्भीमो न्यहनद्भरतर्षभ ॥ ०५० ॥

तेषु तूत्साद्यमानेषु सेनाध्यक्षा महाबलाः ।
भीमसेनं समासाद्य ततोऽयुध्यन्त भारत ॥ ०५१ ॥

तांस्तु सर्वाञ्शरैर्घोरैरवाकिरत पाण्डवः ॥ ०५१ ॥

तथैव तावका राजन्पाण्डवेयान्महारथान् ।
शरवर्षेण महता समन्तात्पर्यवारयन् ॥ ०५२ ॥

व्याकुलं तदभूत्सर्वं पाण्डवानां परैः सह ।
तावकानां च समरे पाण्डवेयैर्युयुत्सताम् ॥ ०५३ ॥

तत्र योधास्तदा पेतुः परस्परसमाहताः ।
उभयोः सेनयो राजन्संशोचन्तः स्म बान्धवान् ॥ ०५४ ॥

---

# अध्याय ०२७

सञ्जय उवाच ॥

तस्मिन्प्रवृत्ते सङ्ग्रामे नरवाजिगजक्षये ।
शकुनिः सौबलो राजन्सहदेवं समभ्ययात् ॥ ००१ ॥

ततोऽस्यापततस्तूर्णं सहदेवः प्रतापवान् ।
शरौघान्प्रेषयामास पतङ्गानिव शीघ्रगान् ॥ ००२ ॥

उलूकश्च रणे भीमं विव्याध दशभिः शरैः ॥ ००२ ॥

शकुनिस्तु महाराज भीमं विद्ध्वा त्रिभिः शरैः ।
सायकानां नवत्या वै सहदेवमवाकिरत् ॥ ००३ ॥

ते शूराः समरे राजन्समासाद्य परस्परम् ।
विव्यधुर्निशितैर्बाणैः कङ्कबर्हिणवाजितैः ॥ ००४ ॥

स्वर्णपुङ्खैः शिलाधौतैरा कर्णात्प्रहितैः शरैः ॥ ००४ ॥

तेषां चापभुजोत्सृष्टा शरवृष्टिर्विशां पते ।
आच्छादयद्दिशः सर्वा धाराभिरिव तोयदः ॥ ००५ ॥

ततः क्रुद्धो रणे भीमः सहदेवश्च भारत ।
चेरतुः कदनं संख्ये कुर्वन्तौ सुमहाबलौ ॥ ००६ ॥

ताभ्यां शरशतैश्छन्नं तद्बलं तव भारत ।
अन्धकारमिवाकाशमभवत्तत्र तत्र ह ॥ ००७ ॥

अश्वैर्विपरिधावद्भिः शरच्छन्नैर्विशां पते ।
तत्र तत्र कृतो मार्गो विकर्षद्भिर्हतान्बहून् ॥ ००८ ॥

निहतानां हयानां च सहैव हययोधिभिः ।
वर्मभिर्विनिकृत्तैश्च प्रासैश्छिन्नैश्च मारिष ॥ ००९ ॥

संछन्ना पृथिवी जज्ञे कुसुमैः शबला इव ॥ ००९ ॥

योधास्तत्र महाराज समासाद्य परस्परम् ।
व्यचरन्त रणे क्रुद्धा विनिघ्नन्तः परस्परम् ॥ ०१० ॥

उद्वृत्तनयनै रोषात्संदष्टौष्ठपुटैर्मुखैः ।
सकुण्डलैर्मही छन्ना पद्मकिञ्जल्कसंनिभैः ॥ ०११ ॥

भुजैश्छिन्नैर्महाराज नागराजकरोपमैः ।
साङ्गदैः सतनुत्रैश्च सासिप्रासपरश्वधैः ॥ ०१२ ॥

कबन्धैरुत्थितैश्छिन्नैर्नृत्यद्भिश्चापरैर्युधि ।
क्रव्यादगणसङ्कीर्णा घोराभूत्पृथिवी विभो ॥ ०१३ ॥

अल्पावशिष्टे सैन्ये तु कौरवेयान्महाहवे ।
प्रहृष्टाः पाण्डवा भूत्वा निन्यिरे यमसादनम् ॥ ०१४ ॥

एतस्मिन्नन्तरे शूरः सौबलेयः प्रतापवान् ।
प्रासेन सहदेवस्य शिरसि प्राहरद्भृशम् ॥ ०१५ ॥

स विह्वलो महाराज रथोपस्थ उपाविशत् ॥ ०१५ ॥

सहदेवं तथा दृष्ट्वा भीमसेनः प्रतापवान् ।
सर्वसैन्यानि सङ्क्रुद्धो वारयामास भारत ॥ ०१६ ॥

निर्बिभेद च नाराचैः शतशोऽथ सहस्रशः ।
विनिर्भिद्याकरोच्चैव सिंहनादमरिंदम ॥ ०१७ ॥

तेन शब्देन वित्रस्ताः सर्वे सहयवारणाः ।
प्राद्रवन्सहसा भीताः शकुनेश्च पदानुगाः ॥ ०१८ ॥

प्रभग्नानथ तान्दृष्ट्वा राजा दुर्योधनोऽब्रवीत् ।
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः ॥ ०१९ ॥

इह कीर्तिं समाधाय प्रेत्य लोकान्समश्नुते ।
प्राणाञ्जहाति यो वीरो युधि पृष्ठमदर्शयन् ॥ ०२० ॥

एवमुक्तास्तु ते राज्ञा सौबलस्य पदानुगाः ।
पाण्डवानभ्यवर्तन्त मृत्युं कृत्वा निवर्तनम् ॥ ०२१ ॥

द्रवद्भिस्तत्र राजेन्द्र कृतः शब्दोऽतिदारुणः ।

क्षुब्धसागरसङ्काशः क्षुभितः सर्वतोऽभवत् ॥ ०२२ ॥

तांस्तदापततो दृष्ट्वा सौबलस्य पदानुगान् ।
प्रत्युद्ययुर्महाराज पाण्डवा विजये वृताः ॥ ०२३ ॥

प्रत्याश्वस्य च दुर्धर्षः सहदेवो विशां पते ।
शकुनिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिः शरैः ॥ ०२४ ॥

धनुश्चिच्छेद च शरैः सौबलस्य हसन्निव ॥ ०२४ ॥

अथान्यद्धनुरादाय शकुनिर्युद्धदुर्मदः ।
विव्याध नकुलं षष्ट्या भीमसेनं च सप्तभिः ॥ ०२५ ॥

उलूकोऽपि महाराज भीमं विव्याध सप्तभिः ।
सहदेवं च सप्तत्या परीप्सन्पितरं रणे ॥ ०२६ ॥

तं भीमसेनः समरे विव्याध निशितैः शरैः ।
शकुनिं च चतुःषष्ट्या पार्श्वस्थांश्च त्रिभिस्त्रिभिः ॥ ०२७ ॥

ते हन्यमाना भीमेन नाराचैस्तैलपायितैः ।
सहदेवं रणे क्रुद्धाश्छादयञ्शरवृष्टिभिः ॥ ०२८ ॥

पर्वतं वारिधाराभिः सविद्युत इवाम्बुदाः ॥ ०२८ ॥

ततोऽस्यापततः शूरः सहदेवः प्रतापवान् ।
उलूकस्य महाराज भल्लेनापाहरच्छिरः ॥ ०२९ ॥

स जगाम रथाद्भूमिं सहदेवेन पातितः ।
रुधिराप्लुतसर्वाङ्गो नन्दयन्पाण्डवान्युधि ॥ ०३० ॥

पुत्रं तु निहतं दृष्ट्वा शकुनिस्तत्र भारत ।

साश्रुकण्ठो विनिःश्वस्य क्षत्तुर्वाक्यमनुस्मरन् ॥ ०३१ ॥

चिन्तयित्वा मुहूर्तं स बाष्पपूर्णेक्षणः श्वसन् ।
सहदेवं समासाद्य त्रिभिर्विव्याध सायकैः ॥ ०३२ ॥

तानपास्य शरान्मुक्ताञ्शरसंघैः प्रतापवान् ।
सहदेवो महाराज धनुश्चिच्छेद संयुगे ॥ ०३३ ॥

छिन्ने धनुषि राजेन्द्र शकुनिः सौबलस्तदा ।
प्रगृह्य विपुलं खड्गं सहदेवाय प्राहिणोत् ॥ ०३४ ॥

तमापतन्तं सहसा घोररूपं विशां पते ।
द्विधा चिच्छेद समरे सौबलस्य हसन्निव ॥ ०३५ ॥

असिं दृष्ट्वा द्विधा छिन्नं प्रगृह्य महतीं गदाम् ।
प्राहिणोत्सहदेवाय सा मोघा न्यपतद्भुवि ॥ ०३६ ॥

ततः शक्तिं महाघोरां कालरात्रिमिवोद्यताम् ।
प्रेषयामास सङ्क्रुद्धः पाण्डवं प्रति सौबलः ॥ ०३७ ॥

तामापतन्तीं सहसा शरैः काञ्चनभूषणैः ।
त्रिधा चिच्छेद समरे सहदेवो हसन्निव ॥ ०३८ ॥

सा पपात त्रिधा छिन्ना भूमौ कनकभूषणा ।
शीर्यमाणा यथा दीप्ता गगनाद्वै शतह्रदा ॥ ०३९ ॥

शक्तिं विनिहतां दृष्ट्वा सौबलं च भयार्दितम् ।
दुद्रुवुस्तावकाः सर्वे भये जाते ससौबलाः ॥ ०४० ॥

अथोत्क्रुष्टं महच्चासीत्पाण्डवैर्जितकाशिभिः ।
धार्तराष्ट्रास्ततः सर्वे प्रायशो विमुखाभवन् ॥ ०४१ ॥

तान्वै विमनसो दृष्ट्वा माद्रीपुत्रः प्रतापवान् ।
शरैरनेकसाहस्रैर्वारयामास संयुगे ॥ ०४२ ॥

ततो गान्धारकैर्गुप्तं पृष्ठैरश्वैर्जये धृतम् ।
आससाद रणे यान्तं सहदेवोऽथ सौबलम् ॥ ०४३ ॥

स्वमंशमवशिष्टं स संस्मृत्य शकुनिं नृप ।
रथेन काञ्चनाङ्गेन सहदेवः समभ्ययात् ॥ ०४४ ॥

अधिज्यं बलवत्कृत्वा व्याक्षिपन्सुमहद्धनुः ॥ ०४४ ॥

स सौबलमभिद्रुत्य गृध्रपत्रैः शिलाशितैः ।
भृशमभ्यहनत्क्रुद्धस्तोत्त्रैरिव महाद्विपम् ॥ ०४५ ॥

उवाच चैनं मेधावी निगृह्य स्मारयन्निव ।
क्षत्रधर्मे स्थितो भूत्वा युध्यस्व पुरुषो भव ॥ ०४६ ॥

यत्तदा हृष्यसे मूढ ग्लहन्नक्षैः सभातले ।
फलमद्य प्रपद्यस्व कर्मणस्तस्य दुर्मते ॥ ०४७ ॥

निहतास्ते दुरात्मानो येऽस्मानवहसन्पुरा ।
दुर्योधनः कुलाङ्गारः शिष्टस्त्वं तस्य मातुलः ॥ ०४८ ॥

अद्य ते विहनिष्यामि क्षुरेणोन्मथितं शिरः ।
वृक्षात्फलमिवोद्धृत्य लगुडेन प्रमाथिना ॥ ०४९ ॥

एवमुक्त्वा महाराज सहदेवो महाबलः ।
सङ्क्रुद्धो नरशार्दूलो वेगेनाभिजगाम ह ॥ ०५० ॥

अभिगम्य तु दुर्धर्षः सहदेवो युधां पतिः ।

विकृष्य बलवच्चापं क्रोधेन प्रहसन्निव ॥ ०५१ ॥

शकुनिं दशभिर्विद्ध्वा चतुर्भिश्चास्य वाजिनः ।
छत्रं ध्वजं धनुश्चास्य छित्त्वा सिंह इवानदत् ॥ ०५२ ॥

छिन्नध्वजधनुश्छत्रः सहदेवेन सौबलः ।
ततो विद्धश्च बहुभिः सर्वमर्मसु सायकैः ॥ ०५३ ॥

ततो भूयो महाराज सहदेवः प्रतापवान् ।
शकुनेः प्रेषयामास शरवृष्टिं दुरासदाम् ॥ ०५४ ॥

ततस्तु क्रुद्धः सुबलस्य पुत्रो ; माद्रीसुतं सहदेवं विमर्दे ।
प्रासेन जाम्बूनदभूषणेन ; जिघांसुरेकोऽभिपपात शीघ्रम् ॥ ०५५ ॥

माद्रीसुतस्तस्य समुद्यतं तं ; प्रासं सुवृत्तौ च भुजौ रणाग्रे ।
भल्लैस्त्रिभिर्युगपत्सञ्चकर्त ; ननाद चोच्चैस्तरसाजिमध्ये ॥ ०५६ ॥

तस्याशुकारी सुसमाहितेन ; सुवर्णपुङ्खेन दृढायसेन ।
भल्लेन सर्वावरणातिगेन ; शिरः शरीरात्प्रममाथ भूयः ॥ ०५७ ॥

शरेण कार्तस्वरभूषितेन ; दिवाकराभेन सुसंशितेन ।
हृतोत्तमाङ्गो युधि पाण्डवेन ; पपात भूमौ सुबलस्य पुत्रः ॥ ०५८ ॥

स तच्छिरो वेगवता शरेण ; सुवर्णपुङ्खेन शिलाशितेन ।
प्रावेरयत्कुपितः पाण्डुपुत्रो ; यत्तत्कुरूणामनयस्य मूलम् ॥ ०५९ ॥

हृतोत्तमाङ्गं शकुनिं समीक्ष्य ; भूमौ शयानं रुधिरार्द्रगात्रम् ।
योधास्त्वदीया भयनष्टसत्त्वा ; दिशः प्रजग्मुः प्रगृहीतशस्त्राः ॥ ०६० ॥

विप्रद्रुताः शुष्कमुखा विसञ्ज्ञा ; गाण्डीवघोषेण समाहताश्च ।
भयार्दिता भग्नरथाश्वनागाः ; पदातयश्चैव सधार्तराष्ट्राः ॥ ०६१ ॥

ततो रथाच्छकुनिं पातयित्वा ; मुदान्विता भारत पाण्डवेयाः ।
शङ्खान्प्रदध्मुः समरे प्रहृष्टाः ; सकेशवाः सैनिकान्हर्षयन्तः ॥ ०६२ ॥

तं चापि सर्वे प्रतिपूजयन्तो ; हृष्टा ब्रुवाणाः सहदेवमाजौ ।
दिष्ट्या हतो नैकृतिको दुरात्मा ; सहात्मजो वीर रणे त्वयेति ॥ ०६३ ॥

---

# अध्याय ०२८

सञ्जय उवाच ॥

ततः क्रुद्धा महाराज सौबलस्य पदानुगाः ।
त्यक्त्वा जीवितमाक्रन्दे पाण्डवान्पर्यवारयन् ॥ ००१ ॥

तानर्जुनः प्रत्यगृह्णात्सहदेवजये धृतः ।
भीमसेनश्च तेजस्वी क्रुद्धाशीविषदर्शनः ॥ ००२ ॥

शक्त्यृष्टिप्रासहस्तानां सहदेवं जिघांसताम् ।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ ००३ ॥

प्रगृहीतायुधान्बाहून्योधानामभिधावताम् ।
भल्लैश्चिच्छेद बीभत्सुः शिरांस्यपि हयानपि ॥ ००४ ॥

ते हताः प्रत्यपद्यन्त वसुधां विगतासवः ।
त्वरिता लोकवीरेण प्रहताः सव्यसाचिना ॥ ००५ ॥

ततो दुर्योधनो राजा दृष्ट्वा स्वबलसङ्क्षयम् ।

हतशेषान्समानीय क्रुद्धो रथशतान्विभो ॥ ००६ ॥

कुञ्जरांश्च हयांश्चैव पादातांश्च परंतप ।
उवाच सहितान्सर्वान्धार्तराष्ट्र इदं वचः ॥ ००७ ॥

समासाद्य रणे सर्वान्पाण्डवान्ससुहृद्गणान् ।
पाञ्चाल्यं चापि सबलं हत्वा शीघ्रं निवर्तत ॥ ००८ ॥

तस्य ते शिरसा गृह्य वचनं युद्धदुर्मदाः ।
प्रत्युद्ययू रणे पार्थांस्तव पुत्रस्य शासनात् ॥ ००९ ॥

तानभ्यापततः शीघ्रं हतशेषान्महारणे ।
शरैराशीविषाकारैः पाण्डवाः समवाकिरन् ॥ ०१० ॥

तत्सैन्यं भरतश्रेष्ठ मुहूर्तेन महात्मभिः ।
अवध्यत रणं प्राप्य त्रातारं नाभ्यविन्दत ॥ ०११ ॥

प्रतिष्ठमानं तु भयान्नावतिष्ठत दंशितम् ॥ ०११ ॥

अश्वैर्विपरिधावद्भिः सैन्येन रजसा वृते ।
न प्राज्ञायन्त समरे दिशश्च प्रदिशस्तथा ॥ ०१२ ॥

ततस्तु पाण्डवानीकान्निःसृत्य बहवो जनाः ।
अभ्यघ्नंस्तावकान्युद्धे मुहूर्तादिव भारत ॥ ०१३ ॥

ततो निःशेषमभवत्तत्सैन्यं तव भारत ॥ ०१३ ॥

अक्षौहिण्यः समेतास्तु तव पुत्रस्य भारत ।
एकादश हता युद्धे ताः प्रभो पाण्डुसृञ्जयैः ॥ ०१४ ॥

तेषु राजसहस्रेषु तावकेषु महात्मसु ।

एको दुर्योधनो राजन्नदृश्यत भृशं क्षतः ॥ ०१५ ॥

ततो वीक्ष्य दिशः सर्वा दृष्ट्वा शून्यां च मेदिनीम् ।
विहीनः सर्वयोधैश्च पाण्डवान्वीक्ष्य संयुगे ॥ ०१६ ॥

मुदितान्सर्वसिद्धार्थान्नर्दमानान्समन्ततः ।
बाणशब्दरवांश्चैव श्रुत्वा तेषां महात्मनाम् ॥ ०१७ ॥

दुर्योधनो महाराज कश्मलेनाभिसंवृतः ।
अपयाने मनश्चक्रे विहीनबलवाहनः ॥ ०१८ ॥

धृतराष्ट्र उवाच ॥

निहते मामके सैन्ये निःशेषे शिबिरे कृते ।
पाण्डवानां बलं सूत किं नु शेषमभूत्तदा ॥ ०१९ ॥

एतन्मे पृच्छतो ब्रूहि कुशलो ह्यसि सञ्जय ॥ ०१९ ॥

यच्च दुर्योधनो मन्दः कृतवांस्तनयो मम ।
बलक्षयं तथा दृष्ट्वा स एकः पृथिवीपतिः ॥ ०२० ॥

सञ्जय उवाच ॥

रथानां द्वे सहस्रे तु सप्त नागशतानि च ।
पञ्च चाश्वसहस्राणि पत्तीनां च शतं शताः ॥ ०२१ ॥

एतच्छेषमभूद्राजन्पाण्डवानां महद्बलम् ।
परिगृह्य हि यद्युद्धे धृष्टद्युम्नो व्यवस्थितः ॥ ०२२ ॥

एकाकी भरतश्रेष्ठ ततो दुर्योधनो नृपः ।
नापश्यत्समरे कञ्चित्सहायं रथिनां वरः ॥ ०२३ ॥

नर्दमानान्परांश्चैव स्वबलस्य च सङ्क्षयम् ।
हतं स्वहयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात्  ॥ ०२४  ॥

एकादशचमूभर्ता पुत्रो दुर्योधनस्तव ।
गदामादाय तेजस्वी पदातिः प्रस्थितो ह्रदम्  ॥ ०२५  ॥

नातिदूरं ततो गत्वा पद्भ्यामेव नराधिपः ।
सस्मार वचनं क्षत्तुर्धर्मशीलस्य धीमतः  ॥ ०२६  ॥

इदं नूनं महाप्राज्ञो विदुरो दृष्टवान्पुरा ।
महद्वैशसमस्माकं क्षत्रियाणां च संयुगे  ॥ ०२७  ॥

एवं विचिन्तयानस्तु प्रविविक्षुर्ह्रदं नृपः ।
दुःखसंतप्तहृदयो दृष्ट्वा राजन्बलक्षयम्  ॥ ०२८  ॥

पाण्डवाश्च महाराज धृष्टद्युम्नपुरोगमाः ।
अभ्यधावन्त सङ्क्रुद्धास्तव राजन्बलं प्रति  ॥ ०२९  ॥

शक्त्यृष्टिप्रासहस्तानां बलानामभिगर्जताम् ।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः  ॥ ०३०  ॥

तान्हत्वा निशितैर्बाणैः सामात्यान्सह बन्धुभिः ।
रथे श्वेतहये तिष्ठन्नर्जुनो बह्वशोभत  ॥ ०३१  ॥

सुबलस्य हते पुत्रे सवाजिरथकुञ्जरे ।
महावनमिव छिन्नमभवत्तावकं बलम्  ॥ ०३२  ॥

अनेकशतसाहस्रे बले दुर्योधनस्य ह ।
नान्यो महारथो राजञ्जीवमानो व्यदृश्यत  ॥ ०३३  ॥

द्रोणपुत्रादृते वीरात्तथैव कृतवर्मणः ।
कृपाच्च गौतमाद्राजन्पार्थिवाच्च तवात्मजात् ॥ ०३४ ॥

धृष्टद्युम्नस्तु मां दृष्ट्वा हसन्सात्यकिमब्रवीत् ।
किमनेन गृहीतेन नानेनार्थोऽस्ति जीवता ॥ ०३५ ॥

धृष्टद्युम्नवचः श्रुत्वा शिनेर्नप्ता महारथः ।
उद्यम्य निशितं खड्गं हन्तुं मामुद्यतस्तदा ॥ ०३६ ॥

तमागम्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ।
मुच्यतां सञ्जयो जीवन्न हन्तव्यः कथञ्चन ॥ ०३७ ॥

द्वैपायनवचः श्रुत्वा शिनेर्नप्ता कृताञ्जलिः ।
ततो मामब्रवीन्मुक्त्वा स्वस्ति सञ्जय साधय ॥ ०३८ ॥

अनुज्ञातस्त्वहं तेन न्यस्तवर्मा निरायुधः ।
प्रातिष्ठं येन नगरं सायाह्ने रुधिरोक्षितः ॥ ०३९ ॥

क्रोशमात्रमपक्रान्तं गदापाणिमवस्थितम् ।
एकं दुर्योधनं राजन्नपश्यं भृशविक्षतम् ॥ ०४० ॥

स तु मामश्रुपूर्णाक्षो नाशक्नोदभिवीक्षितुम् ।
उपप्रैक्षत मां दृष्ट्वा तदा दीनमवस्थितम् ॥ ०४१ ॥

तं चाहमपि शोचन्तं दृष्ट्वैकाकिनमाहवे ।
मुहूर्तं नाशकं वक्तुं किञ्चिद्दुःखपरिप्लुतः ॥ ०४२ ॥

ततोऽस्मै तदहं सर्वमुक्तवान्ग्रहणं तदा ।
द्वैपायनप्रसादाच्च जीवतो मोक्षमाहवे ॥ ०४३ ॥

मुहूर्तमिव च ध्यात्वा प्रतिलभ्य च चेतनाम् ।

भ्रातृंश्च सर्वसैन्यानि पर्यपृच्छत मां ततः ॥ ०४४ ॥

तस्मै तदहमाचक्षं सर्वं प्रत्यक्षदर्शिवान् ।
भ्रातृंश्च निहतान्सर्वान्सैन्यं च विनिपातितम् ॥ ०४५ ॥

त्रयः किल रथाः शिष्टास्तावकानां नराधिप ।
इति प्रस्थानकाले मां कृष्णद्वैपायनोऽब्रवीत् ॥ ०४६ ॥

स दीर्घमिव निःश्वस्य विप्रेक्ष्य च पुनः पुनः ।
अंसे मां पाणिना स्पृष्ट्वा पुत्रस्ते पर्यभाषत ॥ ०४७ ॥

त्वदन्यो नेह सङ्ग्रामे कश्चिज्जीवति सञ्जय ।
द्वितीयं नेह पश्यामि ससहायाश्च पाण्डवाः ॥ ०४८ ॥

ब्रूयाः सञ्जय राजानं प्रज्ञाचक्षुषमीश्वरम् ।
दुर्योधनस्तव सुतः प्रविष्टो ह्रदमित्युत ॥ ०४९ ॥

सुहृद्भिस्तादृशैर्हीनः पुत्रैर्भ्रातृभिरेव च ।
पाण्डवैश्च हृते राज्ये को नु जीवति मादृशः ॥ ०५० ॥

आचक्षेथाः सर्वमिदं मां च मुक्तं महाहवात् ।
अस्मिंस्तोयह्रदे सुप्तं जीवन्तं भृशविक्षतम् ॥ ०५१ ॥

एवमुक्त्वा महाराज प्राविशत्तं ह्रदं नृपः ।
अस्तम्भयत तोयं च मायया मनुजाधिपः ॥ ०५२ ॥

तस्मिन्ह्रदं प्रविष्टे तु त्रीन्रथाञ्श्रान्तवाहनान् ।
अपश्यं सहितानेकस्तं देशं समुपेयुषः ॥ ०५३ ॥

कृपं शारद्वतं वीरं द्रौणिं च रथिनां वरम् ।
भोजं च कृतवर्माणं सहिताञ्शरविक्षतान् ॥ ०५४ ॥

ते सर्वे मामभिप्रेक्ष्य तूर्णमश्वानचोदयन् ।
उपयाय च मामूचुर्दिष्ट्या जीवसि सञ्जय ॥ ०५५ ॥

अपृच्छंश्चैव मां सर्वे पुत्रं तव जनाधिपम् ।
कच्चिद्दुर्योधनो राजा स नो जीवति सञ्जय ॥ ०५६ ॥

आख्यातवानहं तेभ्यस्तदा कुशलिनं नृपम् ।
तच्चैव सर्वमाचक्षं यन्मां दुर्योधनोऽब्रवीत् ॥ ०५७ ॥

ह्रदं चैवाहमाचष्ट यं प्रविष्टो नराधिपः ॥ ०५७ ॥

अश्वत्थामा तु तद्राजन्निशम्य वचनं मम ।
तं ह्रदं विपुलं प्रेक्ष्य करुणं पर्यदेवयत् ॥ ०५८ ॥

अहो धिङ्ग स जानाति जीवतोऽस्मान्नराधिपः ।
पर्याप्ता हि वयं तेन सह योधयितुं परान् ॥ ०५९ ॥

ते तु तत्र चिरं कालं विलप्य च महारथाः ।
प्राद्रवन्रथिनां श्रेष्ठा दृष्ट्वा पाण्डुसुतान्रणे ॥ ०६० ॥

ते तु मां रथमारोप्य कृपस्य सुपरिष्कृतम् ।
सेनानिवेशमाजग्मुर्हतशेषास्त्रयो रथाः ॥ ०६१ ॥

तत्र गुल्माः परित्रस्ताः सूर्ये चास्तमिते सति ।
सर्वे विचुक्रुशुः श्रुत्वा पुत्राणां तव सङ्क्षयम् ॥ ०६२ ॥

ततो वृद्धा महाराज योषितां रक्षणो नराः ।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥ ०६३ ॥

तत्र विक्रोशतीनां च रुदतीनां च सर्वशः ।

प्रादुरासीन्महाञ्शब्दः श्रुत्वा तद्बलसङ्क्षयम् ॥ ०६४ ॥

ततस्ता योषितो राजन्क्रन्दन्त्यो वै मुहुर्मुहुः ।
कुरर्य इव शब्देन नादयन्त्यो महीतलम् ॥ ०६५ ॥

आजघ्नुः करजैश्चापि पाणिभिश्च शिरांस्युत ।
लुलुवुश्च तदा केशान्क्रोशन्त्यस्तत्र तत्र ह ॥ ०६६ ॥

हाहाकारविनादिन्यो विनिघ्नन्त्य उरांसि च ।
क्रोशन्त्यस्तत्र रुरुदुः क्रन्दमाना विशां पते ॥ ०६७ ॥

ततो दुर्योधनामात्याः साश्रुकण्ठा भृशातुराः ।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥ ०६८ ॥

वेत्रजर्झरहस्ताश्च द्वाराध्यक्षा विशां पते ।
शयनीयानि शुभ्राणि स्पर्ध्यास्तरणवन्ति च ॥ ०६९ ॥

समादाय ययुस्तूर्णं नगरं दाररक्षिणः ॥ ०६९ ॥

आस्थायाश्वतरीयुक्तान्स्यन्दनानपरे जनाः ।
स्वान्स्वान्दारानुपादाय प्रययुर्नगरं प्रति ॥ ०७० ॥

अदृष्टपूर्वा या नार्यो भास्करेणापि वेश्मसु ।
ददृशुस्ता महाराज जना यान्तीः पुरं प्रति ॥ ०७१ ॥

ताः स्त्रियो भरतश्रेष्ठ सौकुमार्यसमन्विताः ।
प्रययुर्नगरं तूर्णं हतस्वजनबान्धवाः ॥ ०७२ ॥

आ गोपालाविपालेभ्यो द्रवन्तो नगरं प्रति ।
ययुर्मनुष्याः संभ्रान्ता भीमसेनभयार्दिताः ॥ ०७३ ॥

अपि चैषां भयं तीव्रं पार्थेभ्योऽभूत्सुदारुणम् ।
प्रेक्षमाणास्तदान्योन्यमाधावन्नगरं प्रति ॥ ०७४ ॥

तस्मिंस्तदा वर्तमाने विद्रवे भृशदारुणे ।
युयुत्सुः शोकसंमूढः प्राप्तकालमचिन्तयत् ॥ ०७५ ॥

जितो दुर्योधनः संख्ये पाण्डवैर्भीमविक्रमैः ।
एकादशचमूभर्ता भ्रातरश्चास्य सूदिताः ॥ ०७६ ॥

हताश्च कुरवः सर्वे भीष्मद्रोणपुरःसराः ॥ ०७६ ॥

अहमेको विमुक्तस्तु भाग्ययोगाद्यदृच्छया ।
विद्रुतानि च सर्वाणि शिबिराणि समन्ततः ॥ ०७७ ॥

दुर्योधनस्य सचिवा ये केचिदवशेषिताः ।
राजदारानुपादाय व्यधावन्नगरं प्रति ॥ ०७८ ॥

प्राप्तकालमहं मन्ये प्रवेशं तैः सहाभिभो ।
युधिष्ठिरमनुज्ञाप्य भीमसेनं तथैव च ॥ ०७९ ॥

एतमर्थं महाबाहुरुभयोः स न्यवेदयत् ।
तस्य प्रीतोऽभवद्राजा नित्यं करुणवेदिता ॥ ०८० ॥

परिष्वज्य महाबाहुर्वैश्यापुत्रं व्यसर्जयत् ॥ ०८० ॥

ततः स रथमास्थाय द्रुतमश्वानचोदयत् ।
असंभावितवांश्चापि राजदारान्पुरं प्रति ॥ ०८१ ॥

तैश्चैव सहितः क्षिप्रमस्तं गच्छति भास्करे ।
प्रविष्टो हास्तिनपुरं बाष्पकण्ठोऽश्रुलोचनः ॥ ०८२ ॥

अपश्यत महाप्राज्ञं विदुरं साश्रुलोचनम् ।
राज्ञः समीपान्निष्क्रान्तं शोकोपहतचेतसम्  ॥ ०८३  ॥

तमब्रवीत्सत्यधृतिः प्रणतं त्वग्रतः स्थितम् ।
अस्मिन्कुरुक्षये वृत्ते दिष्ट्या त्वं पुत्र जीवसि  ॥ ०८४  ॥

विना राज्ञः प्रवेशाद्वै किमसि त्वमिहागतः ।
एतन्मे कारणं सर्वं विस्तरेण निवेदय  ॥ ०८५  ॥

युयुत्सुरुवाच  ॥

निहते शकुनौ तात सज्ञातिसुतबान्धवे ।
हतशेषपरीवारो राजा दुर्योधनस्ततः  ॥ ०८६  ॥

स्वकं स हयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात्  ॥ ०८६  ॥

अपक्रान्ते तु नृपतौ स्कन्धावारनिवेशनात् ।
भयव्याकुलितं सर्वं प्राद्रवन्नगरं प्रति  ॥ ०८७  ॥

ततो राज्ञः कलत्राणि भ्रातॄणां चास्य सर्वशः ।
वाहनेषु समारोप्य स्त्र्यध्यक्षाः प्राद्रवन्भयात्  ॥ ०८८  ॥

ततोऽहं समनुज्ञाप्य राजानं सहकेशवम् ।
प्रविष्टो हास्तिनपुरं रक्ष.ण्ल्लोकाद्धि वाच्यताम्  ॥ ०८९  ॥

एतच्छ्रुत्वा तु वचनं वैश्यापुत्रेण भाषितम् ।
प्राप्तकालमिति ज्ञात्वा विदुरः सर्वधर्मवित्  ॥ ०९०  ॥

अपूजयदमेयात्मा युयुत्सुं वाक्यकोविदम्  ॥ ०९०  ॥

प्राप्तकालमिदं सर्वं भवतो भरतक्षये ।

अद्य त्वमिह विश्रान्तः श्वोऽभिगन्ता युधिष्ठिरम्  ॥ ०९१  ॥

एतावदुक्त्वा वचनं विदुरः सर्वधर्मवित् ।
युयुत्सुं समनुज्ञाप्य प्रविवेश नृपक्षयम्  ॥ ०९२  ॥

युयुत्सुरपि तां रात्रिं स्वगृहे न्यवसत्तदा  ॥ ०९२  ॥

---

# तीर्थयात्रापर्व

## अध्याय ०२९

धृतराष्ट्र उवाच  ॥

हतेषु सर्वसैन्येषु पाण्डुपुत्रै रणाजिरे ।
मम सैन्यावशिष्टास्ते किमकुर्वत सञ्जय  ॥ ००१  ॥

कृतवर्मा कृपश्चैव द्रोणपुत्रश्च वीर्यवान् ।
दुर्योधनश्च मन्दात्मा राजा किमकरोत्तदा  ॥ ००२  ॥

सञ्जय उवाच  ॥

संप्राद्रवत्सु दारेषु क्षत्रियाणां महात्मनाम् ।
विद्रुते शिबिरे शून्ये भृशोद्विग्नास्त्रयो रथाः  ॥ ००३  ॥

निशम्य पाण्डुपुत्राणां तदा विजयिनां स्वनम् ।
विद्रुतं शिबिरं दृष्ट्वा सायाह्ने राजगृद्धिनः  ॥ ००४  ॥

स्थानं नारोचयंस्तत्र ततस्ते ह्रदमभ्ययुः ॥ ००४ ॥

युधिष्ठिरोऽपि धर्मात्मा भ्रातृभिः सहितो रणे ।
हृष्टः पर्यपतद्राजन्दुर्योधनवधेप्सया ॥ ००५ ॥

मार्गमाणास्तु सङ्क्रुद्धास्तव पुत्रं जयैषिणः ।
यत्नतोऽन्वेषमाणास्तु नैवापश्यञ्जनाधिपम् ॥ ००६ ॥

स हि तीव्रेण वेगेन गदापाणिरपाक्रमत् ।
तं ह्रदं प्राविशच्चापि विष्टभ्यापः स्वमायया ॥ ००७ ॥

यदा तु पाण्डवाः सर्वे सुपरिश्रान्तवाहनाः ।
ततः स्वशिबिरं प्राप्य व्यतिष्ठन्सहसैनिकाः ॥ ००८ ॥

ततः कृपश्च द्रौणिश्च कृतवर्मा च सात्वतः ।
संनिविष्टेषु पार्थेषु प्रयातास्तं ह्रदं शनैः ॥ ००९ ॥

ते तं ह्रदं समासाद्य यत्र शेते जनाधिपः ।
अभ्यभाषन्त दुर्धर्षं राजानं सुप्तमम्भसि ॥ ०१० ॥

राजन्नुत्तिष्ठ युध्यस्व सहास्माभिर्युधिष्ठिरम् ।
जित्वा वा पृथिवीं भुङ्क्ष्व हतो वा स्वर्गमाप्नुहि ॥ ०११ ॥

तेषामपि बलं सर्वं हतं दुर्योधन त्वया ।
प्रतिरब्धाश्च भूयिष्ठं ये शिष्टास्तत्र सैनिकाः ॥ ०१२ ॥

न ते वेगं विषहितुं शक्तास्तव विशां पते ।
अस्माभिरभिगुप्तस्य तस्मादुत्तिष्ठ भारत ॥ ०१३ ॥

दुर्योधन उवाच ॥

दिष्ट्या पश्यामि वो मुक्तानीदृशात्पुरुषक्षयात् ।
पाण्डुकौरवसंमर्दाज्जीवमानान्नरर्षभान्  ॥ ०१४  ॥

विजेष्यामो वयं सर्वे विश्रान्ता विगतक्लमाः ।
भवन्तश्च परिश्रान्ता वयं च भृशविक्षताः  ॥ ०१५  ॥

उदीर्णं च बलं तेषां तेन युद्धं न रोचये  ॥ ०१५  ॥

न त्वेतदद्भुतं वीरा यद्वो महदिदं मनः ।
अस्मासु च परा भक्तिर्न तु कालः पराक्रमे  ॥ ०१६  ॥

विश्रम्यैकां निशामद्य भवद्भिः सहितो रणे ।
प्रतियोत्स्याम्यहं शत्रूञ्श्वो न मेऽस्त्यत्र संशयः  ॥ ०१७  ॥

सञ्जय उवाच  ॥

एवमुक्तोऽब्रवीद्द्रौणी राजानं युद्धदुर्मदम् ।
उत्तिष्ठ राजन्भद्रं ते विजेष्यामो रणे परान्  ॥ ०१८  ॥

इष्टापूर्तेन दानेन सत्येन च जपेन च ।
शपे राजन्यथा ह्यद्य निहनिष्यामि सोमकान्  ॥ ०१९  ॥

मा स्म यज्ञकृतां प्रीतिं प्राप्नुयां सज्जनोचिताम् ।
यदीमां रजनीं व्युष्टां न निहन्मि परान्रणे  ॥ ०२०  ॥

नाहत्वा सर्वपाञ्चालान्विमोक्ष्ये कवचं विभो ।
इति सत्यं ब्रवीम्येतत्तन्मे शृणु जनाधिप  ॥ ०२१  ॥

तेषु संभाषमाणेषु व्याधास्तं देशमाययुः ।
मांसभारपरिश्रान्ताः पानीयार्थं यदृच्छया  ॥ ०२२  ॥

ते हि नित्यं महाराज भीमसेनस्य लुब्धकाः ।
मांसभारानुपाजह्रुर्भक्त्या परमया विभो ॥ ०२३ ॥

ते तत्र विष्ठितास्तेषां सर्वं तद्वचनं रहः ।
दुर्योधनवचश्चैव शुश्रुवुः सङ्गता मिथः ॥ ०२४ ॥

तेऽपि सर्वे महेष्वासा अयुद्धार्थिनि कौरवे ।
निर्बन्धं परमं चक्रुस्तदा वै युद्धकाङ्क्षिणः ॥ ०२५ ॥

तांस्तथा समुदीक्ष्याथ कौरवाणां महारथान् ।
अयुद्धमनसं चैव राजानं स्थितमम्भसि ॥ ०२६ ॥

तेषां श्रुत्वा च संवादं राज्ञश्च सलिले सतः ।
व्याधाभ्यजानन्राजेन्द्र सलिलस्थं सुयोधनम् ॥ ०२७ ॥

ते पूर्वं पाण्डुपुत्रेण पृष्टा ह्यासन्सुतं तव ।
यदृच्छोपगतास्तत्र राजानं परिमार्गिताः ॥ ०२८ ॥

ततस्ते पाण्डुपुत्रस्य स्मृत्वा तद्भाषितं तदा ।
अन्योन्यमब्रुवन्राजन्मृगव्याधाः शनैरिदम् ॥ ०२९ ॥

दुर्योधनं ख्यापयामो धनं दास्यति पाण्डवः ।
सुव्यक्तमिति नः ख्यातो ह्रदे दुर्योधनो नृपः ॥ ०३० ॥

तस्माद्गच्छामहे सर्वे यत्र राजा युधिष्ठिरः ।
आख्यातुं सलिले सुप्तं दुर्योधनममर्षणम् ॥ ०३१ ॥

धृतराष्ट्रात्मजं तस्मै भीमसेनाय धीमते ।
शयानं सलिले सर्वे कथयामो धनुर्भृते ॥ ०३२ ॥

स नो दास्यति सुप्रीतो धनानि बहुलान्युत ।

किं नो मांसेन शुष्केण परिक्लिष्टेन शोषिणा ॥ ०३३ ॥

एवमुक्त्वा ततो व्याधाः संप्रहृष्टा धनार्थिनः ।
मांसभारानुपादाय प्रययुः शिबिरं प्रति ॥ ०३४ ॥

पाण्डवाश्च महाराज लब्धलक्षाः प्रहारिणः ।
अपश्यमानाः समरे दुर्योधनमवस्थितम् ॥ ०३५ ॥

निकृतेस्तस्य पापस्य ते पारं गमनेप्सवः ।
चारान्संप्रेषयामासुः समन्तात्तद्रणाजिरम् ॥ ०३६ ॥

आगम्य तु ततः सर्वे नष्टं दुर्योधनं नृपम् ।
न्यवेदयन्त सहिता धर्मराजस्य सैनिकाः ॥ ०३७ ॥

तेषां तद्वचनं श्रुत्वा चाराणां भरतर्षभ ।
चिन्तामभ्यगमत्तीव्रां निशश्वास च पार्थिवः ॥ ०३८ ॥

अथ स्थितानां पाण्डूनां दीनानां भरतर्षभ ।
तस्माद्देशादपक्रम्य त्वरिता लुब्धका विभो ॥ ०३९ ॥

आजग्मुः शिबिरं हृष्टा दृष्ट्वा दुर्योधनं नृपम् ।
वार्यमाणाः प्रविष्टाश्च भीमसेनस्य पश्यतः ॥ ०४० ॥

ते तु पाण्डवमासाद्य भीमसेनं महाबलम् ।
तस्मै तत्सर्वमाचख्युर्यद्वृत्तं यच्च वै श्रुतम् ॥ ०४१ ॥

ततो वृकोदरो राजन्दत्त्वा तेषां धनं बहु ।
धर्मराजाय तत्सर्वमाचचक्षे परंतपः ॥ ०४२ ॥

असौ दुर्योधनो राजन्विज्ञातो मम लुब्धकैः ।
संस्तभ्य सलिलं शेते यस्यार्थे परितप्यसे ॥ ०४३ ॥

तद्वचो भीमसेनस्य प्रियं श्रुत्वा विशां पते ।
अजातशत्रुः कौन्तेयो हृष्टोऽभूत्सह सोदरैः ॥ ०४४ ॥

तं च श्रुत्वा महेष्वासं प्रविष्टं सलिलह्रदम् ।
क्षिप्रमेव ततोऽगच्छत्पुरस्कृत्य जनार्दनम् ॥ ०४५ ॥

ततः किलकिलाशब्दः प्रादुरासीद्विशां पते ।
पाण्डवानां प्रहृष्टानां पाञ्चालानां च सर्वशः ॥ ०४६ ॥

सिंहनादांस्ततश्चक्रुः क्ष्वेडांश्च भरतर्षभ ।
त्वरिताः क्षत्रिया राजञ्जग्मुर्द्वैपायनं ह्रदम् ॥ ०४७ ॥

ज्ञातः पापो धार्तराष्ट्रो दृष्टश्चेत्यसकृद्रणे ।
प्राक्रोशन्सोमकास्तत्र हृष्टरूपाः समन्ततः ॥ ०४८ ॥

तेषामाशु प्रयातानां रथानां तत्र वेगिनाम् ।
बभूव तुमुलः शब्दो दिवस्पृक्पृथिवीपते ॥ ०४९ ॥

दुर्योधनं परीप्सन्तस्तत्र तत्र युधिष्ठिरम् ।
अन्वयुस्त्वरितास्ते वै राजानं श्रान्तवाहनाः ॥ ०५० ॥

अर्जुनो भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।
धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी चापराजितः ॥ ०५१ ॥

उत्तमौजा युधामन्युः सात्यकिश्चापराजितः ।
पाञ्चालानां च ये शिष्टा द्रौपदेयाश्च भारत ॥ ०५२ ॥

हयाश्च सर्वे नागाश्च शतशश्च पदातयः ॥ ०५२ ॥

ततः प्राप्तो महाराज धर्मपुत्रो युधिष्ठिरः ।

द्वैपायनह्रदं ख्यातं यत्र दुर्योधनोऽभवत्  ॥ ०५३  ॥

शीतामलजलं हृद्यं द्वितीयमिव सागरम् ।
मायया सलिलं स्तभ्य यत्राभूत्ते सुतः स्थितः  ॥ ०५४  ॥

अत्यद्भुतेन विधिना दैवयोगेन भारत ।
सलिलान्तर्गतः शेते दुर्दर्शः कस्यचित्प्रभो  ॥ ०५५  ॥

मानुषस्य मनुष्येन्द्र गदाहस्तो जनाधिपः  ॥ ०५५  ॥

ततो दुर्योधनो राजा सलितान्तर्गतो वसन् ।
शुश्रुवे तुमुलं शब्दं जलदोपमनिःस्वनम्  ॥ ०५६  ॥

युधिष्ठिरस्तु राजेन्द्र ह्रदं तं सह सोदरैः ।
आजगाम महाराज तव पुत्रवधाय वै  ॥ ०५७  ॥

महता शङ्खनादेन रथनेमिस्वनेन च ।
उद्धुन्वंश्च महारेणुं कम्पयंश्चापि मेदिनीम्  ॥ ०५८  ॥

यौधिष्ठिरस्य सैन्यस्य श्रुत्वा शब्दं महारथाः ।
कृतवर्मा कृपो द्रौणी राजानमिदमब्रुवन्  ॥ ०५९  ॥

इमे ह्यायान्ति संहृष्टाः पाण्डवा जितकाशिनः ।
अपयास्यामहे तावदनुजानातु नो भवान्  ॥ ०६०  ॥

दुर्योधनस्तु तच्छ्रुत्वा तेषां तत्र यशस्विनाम् ।
तथेत्युक्त्वा ह्रदं तं वै माययास्तम्भयत्प्रभो  ॥ ०६१  ॥

ते त्वनुज्ञाप्य राजानं भृशं शोकपरायणाः ।
जग्मुर्दूरं महाराज कृपप्रभृतयो रथाः  ॥ ०६२  ॥

ते गत्वा दूरमध्वानं न्यग्रोधं प्रेक्ष्य मारिष ।
न्यविशन्त भृशं श्रान्ताश्चिन्तयन्तो नृपं प्रति ॥ ०६३ ॥

विष्टभ्य सलिलं सुप्तो धार्तराष्ट्रो महाबलः ।
पाण्डवाश्चापि संप्राप्तास्तं देशं युद्धमीप्सवः ॥ ०६४ ॥

कथं नु युद्धं भविता कथं राजा भविष्यति ।
कथं नु पाण्डवा राजन्प्रतिपत्स्यन्ति कौरवम् ॥ ०६५ ॥

इत्येवं चिन्तयन्तस्ते रथेभ्योऽश्वान्विमुच्य ह ।
तत्रासां चक्रिरे राजन्कृपप्रभृतयो रथाः ॥ ०६६ ॥

---

# अध्याय ०३०

सञ्जय उवाच ॥

ततस्तेष्वपयातेषु रथेषु त्रिषु पाण्डवाः ।
तं ह्रदं प्रत्यपद्यन्त यत्र दुर्योधनोऽभवत् ॥ ००१ ॥

आसाद्य च कुरुश्रेष्ठ तदा द्वैपायनह्रदम् ।
स्तम्भितं धार्तराष्ट्रेण दृष्ट्वा तं सलिलाशयम् ॥ ००२ ॥

वासुदेवमिदं वाक्यमब्रवीत्कुरुनन्दनः ॥ ००२ ॥

पश्येमां धार्तराष्ट्रेण मायामप्सु प्रयोजिताम् ।
विष्टभ्य सलिलं शेते नास्य मानुषतो भयम् ॥ ००३ ॥

दैवीं मायामिमां कृत्वा सलिलान्तर्गतो ह्ययम् ।

निकृत्या निकृतिप्रज्ञो न मे जीवन्विमोक्ष्यते ॥ ००४ ॥

यद्यस्य समरे साह्यं कुरुते वज्रभृत्स्वयम् ।
तथाप्येनं हतं युद्धे लोको द्रक्ष्यति माधव ॥ ००५ ॥

श्रीवासुदेव उवाच ॥

मायाविन इमां मायां मायया जहि भारत ।
मायावी मायया वध्यः सत्यमेतद्युधिष्ठिर ॥ ००६ ॥

क्रियाभ्युपायैर्बहुलैर्मायामप्सु प्रयोज्य ह ।
जहि त्वं भरतश्रेष्ठ पापात्मानं सुयोधनम् ॥ ००७ ॥

क्रियाभ्युपायैरिन्द्रेण निहता दैत्यदानवाः ।
क्रियाभ्युपायैर्बहुभिर्बलिर्बद्धो महात्मना ॥ ००८ ॥

क्रियाभ्युपायैः पूर्वं हि हिरण्याक्षो महासुरः ।
हिरण्यकशिपुश्चैव क्रिययैव निषूदितौ ॥ ००९ ॥

वृत्रश्च निहतो राजन्क्रिययैव न संशयः ॥ ००९ ॥

तथा पौलस्त्यतनयो रावणो नाम राक्षसः ।
रामेण निहतो राजन्सानुबन्धः सहानुगः ॥ ०१० ॥

क्रियया योगमास्थाय तथा त्वमपि विक्रम ॥ ०१० ॥

क्रियाभ्युपायैर्निहतो मया राजन्पुरातने ।
तारकश्च महादैत्यो विप्रचित्तिश्च वीर्यवान् ॥ ०११ ॥

वातापिरिल्वलश्चैव त्रिशिराश्च तथा विभो ।
सुन्दोपसुन्दावसुरौ क्रिययैव निषूदितौ ॥ ०१२ ॥

क्रियाभ्युपायैरिन्द्रेण त्रिदिवं भुज्यते विभो ।
क्रिया बलवती राजन्नान्यत्किञ्चिद्युधिष्ठिर ॥ ०१३ ॥

दैत्याश्च दानवाश्चैव राक्षसाः पार्थिवास्तथा ।
क्रियाभ्युपायैर्निहताः क्रियां तस्मात्समाचर ॥ ०१४ ॥

सञ्जय उवाच ॥

इत्युक्तो वासुदेवेन पाण्डवः संशितव्रतः ।
जलस्थं तं महाराज तव पुत्रं महाबलम् ॥ ०१५ ॥

अभ्यभाषत कौन्तेयः प्रहसन्निव भारत ॥ ०१५ ॥

सुयोधन किमर्थोऽयमारम्भोऽप्सु कृतस्त्वया ।
सर्वं क्षत्रं घातयित्वा स्वकुलं च विशां पते ॥ ०१६ ॥

जलाशयं प्रविष्टोऽद्य वाञ्छञ्जीवितमात्मनः ।
उत्तिष्ठ राजन्युध्यस्व सहास्माभिः सुयोधन ॥ ०१७ ॥

स च दर्पो नरश्रेष्ठ स च मानः क्व ते गतः ।
यस्त्वं संस्तभ्य सलिलं भीतो राजन्व्यवस्थितः ॥ ०१८ ॥

सर्वे त्वां शूर इत्येव जना जल्पन्ति संसदि ।
व्यर्थं तद्भवतो मन्ये शौर्यं सलिलशायिनः ॥ ०१९ ॥

उत्तिष्ठ राजन्युध्यस्व क्षत्रियोऽसि कुलोद्भवः ।
कौरवेयो विशेषेण कुले जन्म च संस्मर ॥ ०२० ॥

स कथं कौरवे वंशे प्रशंसञ्जन्म चात्मनः ।
युद्धाद्भीतस्ततस्तोयं प्रविश्य प्रतितिष्ठसि ॥ ०२१ ॥

अयुद्धमव्यवस्थानं नैष धर्मः सनातनः ।
अनार्यजुष्टमस्वर्ग्यं रणे राजन्पलायनम्  ॥ ०२२  ॥

कथं पारमगत्वा हि युद्धे त्वं वै जिजीविषुः ।
इमान्निपतितान्दृष्ट्वा पुत्रान्भ्रातॄन्पितॄंस्तथा  ॥ ०२३  ॥

संबन्धिनो वयस्यांश्च मातुलान्बान्धवांस्तथा ।
घातयित्वा कथं तात ह्रदे तिष्ठसि सांप्रतम्  ॥ ०२४  ॥

शूरमानी न शूरस्त्वं मिथ्या वदसि भारत ।
शूरोऽहमिति दुर्बुद्धे सर्वलोकस्य शृण्वतः  ॥ ०२५  ॥

न हि शूराः पलायन्ते शत्रून्दृष्ट्वा कथञ्चन ।
ब्रूहि वा त्वं यया धृत्या शूर त्यजसि सङ्गरम्  ॥ ०२६  ॥

स त्वमुत्तिष्ठ युध्यस्व विनीय भयमात्मनः ।
घातयित्वा सर्वसैन्यं भ्रातॄंश्चैव सुयोधन  ॥ ०२७  ॥

नेदानीं जीविते बुद्धिः कार्या धर्मचिकीर्षया ।
क्षत्रधर्ममपाश्रित्य त्वद्विधेन सुयोधन  ॥ ०२८  ॥

यत्तत्कर्णमुपाश्रित्य शकुनिं चापि सौबलम् ।
अमर्त्य इव संमोहात्त्वमात्मानं न बुद्धवान्  ॥ ०२९  ॥

तत्पापं सुमहत्कृत्वा प्रतियुध्यस्व भारत ।
कथं हि त्वद्विधो मोहाद्रोचयेत पलायनम्  ॥ ०३०  ॥

क्व ते तत्पौरुषं यातं क्व च मानः सुयोधन ।
क्व च विक्रान्तता याता क्व च विस्फूर्जितं महत्  ॥ ०३१  ॥

क्व ते कृतास्त्रता याता किं च शेषे जलाशये ।
स त्वमुत्तिष्ठ युध्यस्व क्षत्रधर्मेण भारत ॥ ०३२ ॥

अस्मान्वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथ वा निहतोऽस्माभिर्भूमौ स्वप्स्यसि भारत ॥ ०३३ ॥

एष ते प्रथमो धर्मः सृष्टो धात्रा महात्मना ।
तं कुरुष्व यथातथ्यं राजा भव महारथ ॥ ०३४ ॥

दुर्योधन उवाच ॥

नैतच्चित्रं महाराज यद्भीः प्राणिनमाविशेत् ।
न च प्राणभयाद्भीतो व्यपयातोऽस्मि भारत ॥ ०३५ ॥

अरथश्चानिषङ्गी च निहतः पार्ष्णिसारथिः ।
एकश्चाप्यगणः संख्ये प्रत्याश्वासमरोचयम् ॥ ०३६ ॥

न प्राणहेतोर्न भयान्न विषादाद्विशां पते ।
इदमम्भः प्रविष्टोऽस्मि श्रमात्त्विदमनुष्ठितम् ॥ ०३७ ॥

त्वं चाश्वसिहि कौन्तेय ये चाप्यनुगतास्तव ।
अहमुत्थाय वः सर्वान्प्रतियोत्स्यामि संयुगे ॥ ०३८ ॥

युधिष्ठिर उवाच ॥

आश्वस्ता एव सर्वे स्म चिरं त्वां मृगयामहे ।
तदिदानीं समुत्तिष्ठ युध्यस्वेह सुयोधन ॥ ०३९ ॥

हत्वा वा समरे पार्थान्स्फीतं राज्यमवाप्नुहि ।
निहतो वा रणेऽस्माभिर्वीरलोकमवाप्स्यसि ॥ ०४० ॥

दुर्योधन उवाच ॥

यदर्थं राज्यमिच्छामि कुरूणां कुरुनन्दन ।
त इमे निहताः सर्वे भ्रातरो मे जनेश्वर ॥ ०४१ ॥

क्षीणरत्नां च पृथिवीं हतक्षत्रियपुङ्गवाम् ।
नाभ्युत्सहाम्यहं भोक्तुं विधवामिव योषितम् ॥ ०४२ ॥

अद्यापि त्वहमाशंसे त्वां विजेतुं युधिष्ठिर ।
भङ्क्त्वा पाञ्चालपाण्डूनामुत्साहं भरतर्षभ ॥ ०४३ ॥

न त्विदानीमहं मन्ये कार्यं युद्धेन कर्हिचित् ।
द्रोणे कर्णे च संशान्ते निहते च पितामहे ॥ ०४४ ॥

अस्त्विदानीमियं राजन्केवला पृथिवी तव ।
असहायो हि को राजा राज्यमिच्छेत्प्रशासितुम् ॥ ०४५ ॥

सुहृदस्तादृशान्हित्वा पुत्रान्भ्रातॄन्पितॄनपि ।
भवद्भिश्च हृते राज्ये को नु जीवेत मादृशः ॥ ०४६ ॥

अहं वनं गमिष्यामि ह्यजिनैः प्रतिवासितः ।
रतिर्हि नास्ति मे राज्ये हतपक्षस्य भारत ॥ ०४७ ॥

हतबान्धवभूयिष्ठा हताश्वा हतकुञ्जरा ।
एषा ते पृथिवी राजन्भुङ्क्ष्वैनां विगतज्वरः ॥ ०४८ ॥

वनमेव गमिष्यामि वसानो मृगचर्मणी ।
न हि मे निर्जितस्यास्ति जीवितेऽद्य स्पृहा विभो ॥ ०४९ ॥

गच्छ त्वं भुङ्क्ष्व राजेन्द्र पृथिवीं निहतेश्वराम् ।
हतयोधां नष्टरत्नां क्षीणवप्रां यथासुखम् ॥ ०५० ॥

युधिष्ठिर उवाच ॥

आर्तप्रलापान्मा तात सलिलस्थः प्रभाषथाः ।
नैतन्मनसि मे राजन्वाशितं शकुनेरिव ॥ ०५१ ॥

यदि चापि समर्थः स्यास्त्वं दानाय सुयोधन ।
नाहमिच्छेयमवनिं त्वया दत्तां प्रशासितुम् ॥ ०५२ ॥

अधर्मेण न गृह्णीयां त्वया दत्तां महीमिमाम् ।
न हि धर्मः स्मृतो राजन्क्षत्रियस्य प्रतिग्रहः ॥ ०५३ ॥

त्वया दत्तां न चेच्छेयं पृथिवीमखिलामहम् ।
त्वां तु युद्धे विनिर्जित्य भोक्तास्मि वसुधामिमाम् ॥ ०५४ ॥

अनीश्वरश्च पृथिवीं कथं त्वं दातुमिच्छसि ।
त्वयेयं पृथिवी राजन्किं न दत्ता तदैव हि ॥ ०५५ ॥

धर्मतो याचमानानां शमार्थं च कुलस्य नः ।
वार्ष्णेयं प्रथमं राजन्प्रत्याख्याय महाबलम् ॥ ०५६ ॥

किमिदानीं ददासि त्वं को हि ते चित्तविभ्रमः ।
अभियुक्तस्तु को राजा दातुमिच्छेद्धि मेदिनीम् ॥ ०५७ ॥

न त्वमद्य महीं दातुमीशः कौरवनन्दन ।
आच्छेत्तुं वा बलाद्राजन्स कथं दातुमिच्छसि ॥ ०५८ ॥

मां तु निर्जित्य सङ्ग्रामे पालयेमां वसुंधराम् ॥ ०५८ ॥

सूच्यग्रेणापि यद्भूमेरपि ध्रीयेत भारत ।
तन्मात्रमपि नो मह्यं न ददाति पुरा भवान् ॥ ०५९ ॥

स कथं पृथिवीमेतां प्रददासि विशां पते ।
सूच्यग्रं नात्यजः पूर्वं स कथं त्यजसि क्षितिम्  ॥ ०६०  ॥

एवमैश्वर्यमासाद्य प्रशास्य पृथिवीमिमाम् ।
को हि मूढो व्यवस्येत शत्रोर्दातुं वसुंधराम्  ॥ ०६१  ॥

त्वं तु केवलमौर्ख्येण विमूढो नावबुध्यसे ।
पृथिवीं दातुकामोऽपि जीवितेनाद्य मोक्ष्यसे  ॥ ०६२  ॥

अस्मान्वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथ वा निहतोऽस्माभिर्व्रज लोकाननुत्तमान्  ॥ ०६३  ॥

आवयोर्जीवतो राजन्मयि च त्वयि च ध्रुवम् ।
संशयः सर्वभूतानां विजये नो भविष्यति  ॥ ०६४  ॥

जीवितं तव दुष्प्रज्ञ मयि संप्रति वर्तते ।
जीवयेयं त्वहं कामं न तु त्वं जीवितुं क्षमः  ॥ ०६५  ॥

दहने हि कृतो यत्नस्त्वयास्मासु विशेषतः ।
आशीविषैर्विषैश्चापि जले चापि प्रवेशनैः  ॥ ०६६  ॥

त्वया विनिकृता राजन्राज्यस्य हरणेन च  ॥ ०६६  ॥

एतस्मात्कारणात्पाप जीवितं ते न विद्यते ।
उत्तिष्ठोत्तिष्ठ युध्यस्व तत्ते श्रेयो भविष्यति  ॥ ०६७  ॥

सञ्जय उवाच  ॥

एवं तु विविधा वाचो जययुक्ताः पुनः पुनः ।
कीर्तयन्ति स्म ते वीरास्तत्र तत्र जनाधिप  ॥ ०६८  ॥

# अध्याय ०३१

धृतराष्ट्र उवाच ॥

एवं संतर्ज्यमानस्तु मम पुत्रो महीपतिः ।
प्रकृत्या मन्युमान्वीरः कथमासीत्परंतपः ॥ ००१ ॥

न हि संतर्जना तेन श्रुतपूर्वा कदाचन ।
राजभावेन मान्यश्च सर्वलोकस्य सोऽभवत् ॥ ००२ ॥

इयं च पृथिवी सर्वा सम्लेच्छाटविका भृशम् ।
प्रसादाद्ध्रियते यस्य प्रत्यक्षं तव सञ्जय ॥ ००३ ॥

स तथा तर्ज्यमानस्तु पाण्डुपुत्रैर्विशेषतः ।
विहीनश्च स्वकैर्भृत्यैर्निर्जने चावृतो भृशम् ॥ ००४ ॥

श्रुत्वा स कटुका वाचो जययुक्ताः पुनः पुनः ।
किमब्रवीत्पाण्डवेयांस्तन्ममाचक्ष्व सञ्जय ॥ ००५ ॥

सञ्जय उवाच ॥

तर्ज्यमानस्तदा राजन्नुदकस्थस्तवात्मजः ।
युधिष्ठिरेण राजेन्द्र भ्रातृभिः सहितेन ह ॥ ००६ ॥

श्रुत्वा स कटुका वाचो विषमस्थो जनाधिपः ।
दीर्घमुष्णं च निःश्वस्य सलिलस्थः पुनः पुनः ॥ ००७ ॥

सलिलान्तर्गतो राजा धुन्वन्हस्तौ पुनः पुनः ।
मनश्चकार युद्धाय राजानं चाभ्यभाषत ॥ ००८ ॥

यूयं ससुहृदः पार्थाः सर्वे सरथवाहनाः ।
अहमेकः परिद्यूनो विरथो हतवाहनः ॥ ००९ ॥

आत्तशस्त्रै रथगतैर्बहुभिः परिवारितः ।
कथमेकः पदातिः सन्नशस्त्रो योद्धुमुत्सहे ॥ ०१० ॥

एकैकेन तु मां यूयं योधयध्वं युधिष्ठिर ।
न ह्येको बहुभिर्वीरैर्न्याय्यं योधयितुं युधि ॥ ०११ ॥

विशेषतो विकवचः श्रान्तश्चापः समाश्रितः ।
भृशं विक्षतगात्रश्च श्रान्तवाहनसैनिकः ॥ ०१२ ॥

न मे त्वत्तो भयं राजन्न च पार्थाद्वृकोदरात् ।
फल्गुनाद्वासुदेवाद्वा पाञ्चालेभ्योऽथ वा पुनः ॥ ०१३ ॥

यमाभ्यां युयुधानाद्वा ये चान्ये तव सैनिकाः ।
एकः सर्वानहं क्रुद्धो न तान्योद्धुमिहोत्सहे ॥ ०१४ ॥

धर्ममूला सतां कीर्तिर्मनुष्याणां जनाधिप ।
धर्मं चैवेह कीर्तिं च पालयन्प्रब्रवीम्यहम् ॥ ०१५ ॥

अहमुत्थाय वः सर्वान्प्रतियोत्स्यामि संयुगे ।
अन्वंशाभ्यागतान्सर्वानृतून्संवत्सरो यथा ॥ ०१६ ॥

अद्य वः सरथान्साश्वानशस्त्रो विरथोऽपि सन् ।
नक्षत्राणीव सर्वाणि सविता रात्रिसङ्क्षये ॥ ०१७ ॥

तेजसा नाशयिष्यामि स्थिरीभवत पाण्डवाः ॥ ०१७ ॥

अद्यानृण्यं गमिष्यामि क्षत्रियाणां यशस्विनाम् ।
बाह्लीकद्रोणभीष्माणां कर्णस्य च महात्मनः ॥ ०१८ ॥

जयद्रथस्य शूरस्य भगदत्तस्य चोभयोः ।
मद्रराजस्य शल्यस्य भूरिश्रवस एव च ॥ ०१९ ॥

पुत्राणां भरतश्रेष्ठ शकुनेः सौबलस्य च ।
मित्राणां सुहृदां चैव बान्धवानां तथैव च ॥ ०२० ॥

आनृण्यमद्य गच्छामि हत्वा त्वां भ्रातृभिः सह ।
एतावदुक्त्वा वचनं विरराम जनाधिपः ॥ ०२१ ॥

युधिष्ठिर उवाच ॥

दिष्ट्या त्वमपि जानीषे क्षत्रधर्मं सुयोधन ।
दिष्ट्या ते वर्तते बुद्धिर्युद्धायैव महाभुज ॥ ०२२ ॥

दिष्ट्या शूरोऽसि कौरव्य दिष्ट्या जानासि सङ्गरम् ।
यस्त्वमेको हि नः सर्वान्संयुगे योद्धुमिच्छसि ॥ ०२३ ॥

एक एकेन सङ्गम्य यत्ते संमतमायुधम् ।
तत्त्वमादाय युध्यस्व प्रेक्षकास्ते वयं स्थिताः ॥ ०२४ ॥

अयमिष्टं च ते कामं वीर भूयो ददाम्यहम् ।
हत्वैकं भवतो राज्यं हतो वा स्वर्गमाप्नुहि ॥ ०२५ ॥

दुर्योधन उवाच ॥

एकश्चेद्योद्धुमाक्रन्दे वरोऽद्य मम दीयते ।

आयुधानामियं चापि वृता त्वत्संमते गदा ॥ ०२६ ॥

भ्रातॄणां भवतामेकः शक्यं मां योऽभिमन्यते ।
पदातिर्गदया संख्ये स युध्यतु मया सह ॥ ०२७ ॥

वृत्तानि रथयुद्धानि विचित्राणि पदे पदे ।
इदमेकं गदायुद्धं भवत्वद्याद्भुतं महत् ॥ ०२८ ॥

अन्नानामपि पर्यायं कर्तुमिच्छन्ति मानवाः ।
युद्धानामपि पर्यायो भवत्वनुमते तव ॥ ०२९ ॥

गदया त्वां महाबाहो विजेष्यामि सहानुजम् ।
पाञ्चालान्सृञ्जयांश्चैव ये चान्ये तव सैनिकाः ॥ ०३० ॥

युधिष्ठिर उवाच ॥

उत्तिष्ठोत्तिष्ठ गान्धारे मां योधय सुयोधन ।
एक एकेन सङ्गम्य संयुगे गदया बली ॥ ०३१ ॥

पुरुषो भव गान्धारे युध्यस्व सुसमाहितः ।
अद्य ते जीवितं नास्ति यद्यपि त्वं मनोजवः ॥ ०३२ ॥

सञ्जय उवाच ॥

एतत्स नरशार्दूलो नामृष्यत तवात्मजः ।
सलिलान्तर्गतः श्वभ्रे महानाग इव श्वसन् ॥ ०३३ ॥

तथासौ वाक्प्रतोदेन तुद्यमानः पुनः पुनः ।
वाचं न ममृषे धीमानुत्तमाश्वः कशामिव ॥ ०३४ ॥

सङ्क्षोभ्य सलिलं वेगाद्गदामादाय वीर्यवान् ।

अद्रिसारमयीं गुर्वीं काञ्चनाङ्गदभूषणाम्  ॥ ०३५  ॥

अन्तर्जलात्समुत्तस्थौ नागेन्द्र इव निःश्वसन्  ॥ ०३५  ॥

स भित्त्वा स्तम्भितं तोयं स्कन्धे कृत्वायसीं गदाम् ।
उदतिष्ठत पुत्रस्ते प्रतपन्रश्मिमानिव  ॥ ०३६  ॥

ततः शैक्यायसीं गुर्वीं जातरूपपरिष्कृताम् ।
गदां परामृशद्धीमान्धार्तराष्ट्रो महाबलः  ॥ ०३७  ॥

गदाहस्तं तु तं दृष्ट्वा सशृङ्गमिव पर्वतम् ।
प्रजानामिव सङ्क्रुद्धं शूलपाणिमवस्थितम्  ॥ ०३८  ॥

सगदो भारतो भाति प्रतपन्भास्करो यथा  ॥ ०३८  ॥

तमुत्तीर्णं महाबाहुं गदाहस्तमरिंदमम् ।
मेनिरे सर्वभूतानि दण्डहस्तमिवान्तकम्  ॥ ०३९  ॥

वज्रहस्तं यथा शक्रं शूलहस्तं यथा हरम् ।
ददृशुः सर्वपाञ्चालाः पुत्रं तव जनाधिप  ॥ ०४०  ॥

तमुत्तीर्णं तु संप्रेक्ष्य समहृष्यन्त सर्वशः ।
पाञ्चालाः पाण्डवेयाश्च तेऽन्योन्यस्य तलान्ददुः  ॥ ०४१  ॥

अवहासं तु तं मत्वा पुत्रो दुर्योधनस्तव ।
उद्वृत्य नयने क्रुद्धो दिधक्षुरिव पाण्डवान्  ॥ ०४२  ॥

त्रिशिखां भ्रुकुटीं कृत्वा संदष्टदशनच्छदः ।
प्रत्युवाच ततस्तान्वै पाण्डवान्सहकेशवान्  ॥ ०४३  ॥

अवहासस्य वोऽस्याद्य प्रतिवक्तास्मि पाण्डवाः ।

गमिष्यथ हताः सद्यः सपाञ्चाला यमक्षयम्  ॥ ०४४  ॥

उत्थितस्तु जलात्तस्मात्पुत्रो दुर्योधनस्तव ।
अतिष्ठत गदापाणी रुधिरेण समुक्षितः  ॥ ०४५  ॥

तस्य शोणितदिग्धस्य सलिलेन समुक्षितम् ।
शरीरं स्म तदा भाति स्रवन्निव महीधरः  ॥ ०४६  ॥

तमुद्यतगदं वीरं मेनिरे तत्र पाण्डवाः ।
वैवस्वतमिव क्रुद्धं किङ्करोद्यतपाणिनम्  ॥ ०४७  ॥

स मेघनिनदो हर्षान्नदन्निव च गोवृषः ।
आजुहाव ततः पार्थान्गदया युधि वीर्यवान्  ॥ ०४८  ॥

दुर्योधन उवाच  ॥

एकैकेन च मां यूयमासीदत युधिष्ठिर ।
न ह्येको बहुभिर्न्याय्यो वीर योधयितुं युधि  ॥ ०४९  ॥

न्यस्तवर्मा विशेषेण श्रान्तश्चाप्सु परिप्लुतः ।
भृशं विक्षतगात्रश्च हतवाहनसैनिकः  ॥ ०५०  ॥

युधिष्ठिर उवाच  ॥

नाभूदियं तव प्रज्ञा कथमेवं सुयोधन ।
यदाभिमन्युं बहवो जघ्नुर्युधि महारथाः  ॥ ०५१  ॥

आमुञ्च कवचं वीर मूर्धजान्यमयस्व च ।
यच्चान्यदपि ते नास्ति तदप्यादत्स्व भारत  ॥ ०५२  ॥

इममेकं च ते कामं वीर भूयो ददाम्यहम्  ॥ ०५२  ॥

पञ्चानां पाण्डवेयानां येन योद्धुमिहेच्छसि ।
तं हत्वा वै भवान्राजा हतो वा स्वर्गमाप्नुहि ॥ ०५३ ॥

ऋते च जीविताद्वीर युद्धे किं कुर्म ते प्रियम् ॥ ०५३ ॥

सञ्जय उवाच ॥

ततस्तव सुतो राजन्वर्म जग्राह काञ्चनम् ।
विचित्रं च शिरस्त्राणं जाम्बूनदपरिष्कृतम् ॥ ०५४ ॥

सोऽवबद्धशिरस्त्राणः शुभकाञ्चनवर्मभृत् ।
रराज राजन्पुत्रस्ते काञ्चनः शैलराडिव ॥ ०५५ ॥

संनद्धः स गदी राजन्सज्जः सङ्ग्राममूर्धनि ।
अब्रवीत्पाण्डवान्सर्वान्पुत्रो दुर्योधनस्तव ॥ ०५६ ॥

भ्रातॄणां भवतामेको युध्यतां गदया मया ।
सहदेवेन वा योत्स्ये भीमेन नकुलेन वा ॥ ०५७ ॥

अथ वा फल्गुनेनाद्य त्वया वा भरतर्षभ ।
योत्स्येऽहं सङ्गरं प्राप्य विजेष्ये च रणाजिरे ॥ ०५८ ॥

अहमद्य गमिष्यामि वैरस्यान्तं सुदुर्गमम् ।
गदया पुरुषव्याघ्र हेमपट्टविनद्धया ॥ ०५९ ॥

गदायुद्धे न मे कश्चित्सदृशोऽस्तीति चिन्तय ।
गदया वो हनिष्यामि सर्वानेव समागतान् ॥ ०६० ॥

गृह्णातु स गदां यो वै युध्यतेऽद्य मया सह ॥ ०६० ॥

# अध्याय ०३२

सञ्जय उवाच ॥

एवं दुर्योधने राजन्गर्जमाने मुहुर्मुहुः ।
युधिष्ठिरस्य सङ्क्रुद्धो वासुदेवोऽब्रवीदिदम् ॥ ००१ ॥

यदि नाम ह्ययं युद्धे वरयेत्त्वां युधिष्ठिर ।
अर्जुनं नकुलं वापि सहदेवमथापि वा ॥ ००२ ॥

किमिदं साहसं राजंस्त्वया व्याहृतमीदृशम् ।
एकमेव निहत्याजौ भव राजा कुरुष्विति ॥ ००३ ॥

एतेन हि कृता योग्या वर्षाणीह त्रयोदश ।
आयसे पुरुषे राजन्भीमसेनजिघांसया ॥ ००४ ॥

कथं नाम भवेत्कार्यमस्माभिर्भरतर्षभ ।
साहसं कृतवांस्त्वं तु ह्यनुक्रोशान्नृपोत्तम ॥ ००५ ॥

नान्यमस्यानुपश्यामि प्रतियोद्धारमाहवे ।
ऋते वृकोदरात्पार्थात्स च नातिकृतश्रमः ॥ ००६ ॥

तदिदं द्यूतमारब्धं पुनरेव यथा पुरा ।
विषमं शकुनेश्चैव तव चैव विशां पते ॥ ००७ ॥

बली भीमः समर्थश्च कृती राजा सुयोधनः ।
बलवान्वा कृती वेति कृती राजन्विशिष्यते ॥ ००८ ॥

सोऽयं राजंस्त्वया शत्रुः समे पथि निवेशितः ।
न्यस्तश्चात्मा सुविषमे कृच्छ्रमापादिता वयम्  ॥ ००९  ॥

को नु सर्वान्विनिर्जित्य शत्रूनेकेन वैरिणा ।
पणित्वा चैकपाणेन रोचयेदेवमाहवम्  ॥ ०१०  ॥

न हि पश्यामि तं लोके गदाहस्तं नरोत्तमम् ।
युध्येद्दुर्योधनं संख्ये कृतित्वाद्धि विशेषयेत्  ॥ ०११  ॥

फल्गुनं वा भवन्तं वा माद्रीपुत्रावथापि वा ।
न समर्थानहं मन्ये गदाहस्तस्य संयुगे  ॥ ०१२  ॥

स कथं वदसे शत्रुं युध्यस्व गदयेति ह ।
एकं च नो निहत्याजौ भव राजेति भारत  ॥ ०१३  ॥

वृकोदरं समासाद्य संशयो विजये हि नः ।
न्यायतो युध्यमानानां कृती ह्येष महाबलः  ॥ ०१४  ॥

भीम उवाच  ॥

मधुसूदन मा कार्षीर्विषादं यदुनन्दन ।
अद्य पारं गमिष्यामि वैरस्य भृशदुर्गमम्  ॥ ०१५  ॥

अहं सुयोधनं संख्ये हनिष्यामि न संशयः ।
विजयो वै ध्रुवं कृष्ण धर्मराजस्य दृश्यते  ॥ ०१६  ॥

अध्यर्धेन गुणेनेयं गदा गुरुतरी मम ।
न तथा धार्तराष्ट्रस्य मा कार्षीर्माधव व्यथाम्  ॥ ०१७  ॥

सामरानपि लोकांस्त्रीन्नानाशस्त्रधरान्युधि ।
योधयेयं रणे हृष्टः किमुताद्य सुयोधनम्  ॥ ०१८  ॥

सञ्जय उवाच ॥

तथा संभाषमाणं तु वासुदेवो वृकोदरम् ।
हृष्टः संपूजयामास वचनं चेदमब्रवीत् ॥ ०१९ ॥

त्वामाश्रित्य महाबाहो धर्मराजो युधिष्ठिरः ।
निहतारिः स्वकां दीप्तां श्रियं प्राप्तो न संशयः ॥ ०२० ॥

त्वया विनिहताः सर्वे धृतराष्ट्रसुता रणे ।
राजानो राजपुत्राश्च नागाश्च विनिपातिताः ॥ ०२१ ॥

कलिङ्गा मागधाः प्राच्या गान्धाराः कुरवस्तथा ।
त्वामासाद्य महायुद्धे निहताः पाण्डुनन्दन ॥ ०२२ ॥

हत्वा दुर्योधनं चापि प्रयच्छोर्वीं ससागराम् ।
धर्मराजाय कौन्तेय यथा विष्णुः शचीपतेः ॥ ०२३ ॥

त्वां च प्राप्य रणे पापो धार्तराष्ट्रो विनङ्क्ष्यति ।
त्वमस्य सक्थिनी भङ्क्त्वा प्रतिज्ञां पारयिष्यसि ॥ ०२४ ॥

यत्नेन तु सदा पार्थ योद्धव्यो धृतराष्ट्रजः ।
कृती च बलवांश्चैव युद्धशौण्डश्च नित्यदा ॥ ०२५ ॥

ततस्तु सात्यकी राजन्पूजयामास पाण्डवम् ।
विविधाभिश्च तां वाग्भिः पूजयामास माधवः ॥ ०२६ ॥

पाञ्चालाः पाण्डवेयाश्च धर्मराजपुरोगमाः ।
तद्वचो भीमसेनस्य सर्व एवाभ्यपूजयन् ॥ ०२७ ॥

ततो भीमबलो भीमो युधिष्ठिरमथाब्रवीत् ।

सृञ्जयैः सह तिष्ठन्तं तपन्तमिव भास्करम् ॥ ०२८ ॥

अहमेतेन सङ्गम्य संयुगे योद्धुमुत्सहे ।
न हि शक्तो रणे जेतुं मामेष पुरुषाधमः ॥ ०२९ ॥

अद्य क्रोधं विमोक्ष्यामि निहितं हृदये भृशम् ।
सुयोधने धार्तराष्ट्रे खाण्डवेऽग्निमिवार्जुनः ॥ ०३० ॥

शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयम् ।
निहत्य गदया पापमद्य राजन्सुखी भव ॥ ०३१ ॥

अद्य कीर्तिमयीं मालां प्रतिमोक्ष्ये तवानघ ।
प्राणाञ्श्रियं च राज्यं च मोक्ष्यतेऽद्य सुयोधनः ॥ ०३२ ॥

राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं मया हतम् ।
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ ०३३ ॥

इत्युक्त्वा भरतश्रेष्ठो गदामुद्यम्य वीर्यवान् ।
उदतिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ ०३४ ॥

तमेकाकिनमासाद्य धार्तराष्ट्रं महाबलम् ।
निर्यूथमिव मातङ्गं समहृष्यन्त पाण्डवाः ॥ ०३५ ॥

तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
भीमसेनस्तदा राजन्दुर्योधनमथाब्रवीत् ॥ ०३६ ॥

राज्ञापि धृतराष्ट्रेण त्वया चास्मासु यत्कृतम् ।
स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते ॥ ०३७ ॥

द्रौपदी च परिक्लिष्टा सभामध्ये रजस्वला ।
द्यूते यद्विजितो राजा शकुनेर्बुद्धिनिश्चयात् ॥ ०३८ ॥

यानि चान्यानि दुष्टात्मन्पापानि कृतवानसि ।
अनागःसु च पार्थेषु तस्य पश्य महत्फलम् ॥ ०३९ ॥

त्वत्कृते निहतः शेते शरतल्पे महायशाः ।
गाङ्गेयो भरतश्रेष्ठः सर्वेषां नः पितामहः ॥ ०४० ॥

हतो द्रोणश्च कर्णश्च हतः शल्यः प्रतापवान् ।
वैरस्य चादिकर्तासौ शकुनिर्निहतो युधि ॥ ०४१ ॥

भ्रातरस्ते हताः शूराः पुत्राश्च सहसैनिकाः ।
राजानश्च हताः शूराः समरेष्वनिवर्तिनः ॥ ०४२ ॥

एते चान्ये च निहता बहवः क्षत्रियर्षभाः ।
प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः ॥ ०४३ ॥

अवशिष्टस्त्वमेवैकः कुलघ्नोऽधमपूरुषः ।
त्वामप्यद्य हनिष्यामि गदया नात्र संशयः ॥ ०४४ ॥

अद्य तेऽहं रणे दर्पं सर्वं नाशयिता नृप ।
राज्याशां विपुलां राजन्पाण्डवेषु च दुष्कृतम् ॥ ०४५ ॥

दुर्योधन उवाच ॥

किं कत्थितेन बहुधा युध्यस्वाद्य मया सह ।
अद्य तेऽहं विनेष्यामि युद्धश्रद्धां वृकोदर ॥ ०४६ ॥

किं न पश्यसि मां पाप गदायुद्धे व्यवस्थितम् ।
हिमवच्छिखराकारां प्रगृह्य महतीं गदाम् ॥ ०४७ ॥

गदिनं कोऽद्य मां पाप जेतुमुत्सहते रिपुः ।

न्यायतो युध्यमानस्य देवेष्वपि पुरंदरः ॥ ०४८ ॥

मा वृथा गर्ज कौन्तेय शारदाभ्रमिवाजलम् ।
दर्शयस्व बलं युद्धे यावत्तत्तेऽद्य विद्यते ॥ ०४९ ॥

तस्य तद्वचनं श्रुत्वा पाञ्चालाः सहसृञ्जयाः ।
सर्वे संपूजयामासुस्तद्वचो विजिगीषवः ॥ ०५० ॥

तं मत्तमिव मातङ्गं तलशब्देन मानवाः ।
भूयः संहर्षयामासू राजन्दुर्योधनं नृपम् ॥ ०५१ ॥

बृंहन्ति कुञ्जरास्तत्र हया हेषन्ति चासकृत् ।
शस्त्राणि संप्रदीप्यन्ते पाण्डवानां जयैषिणाम् ॥ ०५२ ॥

---

# अध्याय ०३३

सञ्जय उवाच ॥

तस्मिन्युद्धे महाराज संप्रवृत्ते सुदारुणे ।
उपविष्टेषु सर्वेषु पाण्डवेषु महात्मसु ॥ ००१ ॥

ततस्तालध्वजो रामस्तयोर्युद्ध उपस्थिते ।
श्रुत्वा तच्छिष्ययो राजन्नाजगाम हलायुधः ॥ ००२ ॥

तं दृष्ट्वा परमप्रीताः पूजयित्वा नराधिपाः ।
शिष्ययोः कौशलं युद्धे पश्य रामेति चाब्रुवन् ॥ ००३ ॥

अब्रवीच्च तदा रामो दृष्ट्वा कृष्णं च पाण्डवम् ।

दुर्योधनं च कौरव्यं गदापाणिमवस्थितम् ॥ ००४ ॥

चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य वै ।
पुष्येण संप्रयातोऽस्मि श्रवणे पुनरागतः ॥ ००५ ॥

शिष्ययोर्वै गदायुद्धं द्रष्टुकामोऽस्मि माधव ॥ ००५ ॥

ततो युधिष्ठिरो राजा परिष्वज्य हलायुधम् ।
स्वागतं कुशलं चास्मै पर्यपृच्छद्यथातथम् ॥ ००६ ॥

कृष्णौ चापि महेष्वासावभिवाद्य हलायुधम् ।
सस्वजाते परिप्रीतौ प्रियमाणौ यशस्विनौ ॥ ००७ ॥

माद्रीपुत्रौ तथा शूरौ द्रौपद्याः पञ्च चात्मजाः ।
अभिवाद्य स्थिता राजन्रौहिणेयं महाबलम् ॥ ००८ ॥

भीमसेनोऽथ बलवान्पुत्रस्तव जनाधिप ।
तथैव चोद्यतगदौ पूजयामासतुर्बलम् ॥ ००९ ॥

स्वागतेन च ते तत्र प्रतिपूज्य पुनः पुनः ।
पश्य युद्धं महाबाहो इति ते राममब्रुवन् ॥ ०१० ॥

एवमूचुर्महात्मानं रौहिणेयं नराधिपाः ॥ ०१० ॥

परिष्वज्य तदा रामः पाण्डवान्सृञ्जयानपि ।
अपृच्छत्कुशलं सर्वान्पाण्डवांश्चामितौजसः ॥ ०११ ॥

तथैव ते समासाद्य पप्रच्छुस्तमनामयम् ॥ ०११ ॥

प्रत्यभ्यर्च्य हली सर्वान्क्षत्रियांश्च महामनाः ।
कृत्वा कुशलसंयुक्तां संविदं च यथावयः ॥ ०१२ ॥

जनार्दनं सात्यकिं च प्रेम्णा स परिषस्वजे ।
मूर्ध्नि चैतावुपाघ्राय कुशलं पर्यपृच्छत ॥ ०१३ ॥

तौ चैनं विधिवद्राजन्पूजयामासतुर्गुरुम् ।
ब्रह्माणमिव देवेशमिन्द्रोपेन्द्रौ मुदा युतौ ॥ ०१४ ॥

ततोऽब्रवीद्धर्मसुतो रौहिणेयमरिंदमम् ।
इदं भ्रात्रोर्महायुद्धं पश्य रामेति भारत ॥ ०१५ ॥

तेषां मध्ये महाबाहुः श्रीमान्केशवपूर्वजः ।
न्यविशत्परमप्रीतः पूज्यमानो महारथैः ॥ ०१६ ॥

स बभौ राजमध्यस्थो नीलवासाः सितप्रभः ।
दिवीव नक्षत्रगणैः परिकीर्णो निशाकरः ॥ ०१७ ॥

ततस्तयोः संनिपातस्तुमुलो रोमहर्षणः ।
आसीदन्तकरो राजन्वैरस्य तव पुत्रयोः ॥ ०१८ ॥

---

# अध्याय ०३४

जनमेजय उवाच ॥

पूर्वमेव यदा रामस्तस्मिन्युद्ध उपस्थिते ।
आमन्त्र्य केशवं यातो वृष्णिभिः सहितः प्रभुः ॥ ००१ ॥

साहाय्यं धार्तराष्ट्रस्य न च कर्तास्मि केशव ।
न चैव पाण्डुपुत्राणां गमिष्यामि यथागतम् ॥ ००२ ॥

एवमुक्त्वा तदा रामो यातः शत्रुनिबर्हणः ।
तस्य चागमनं भूयो ब्रह्मञ्शंसितुमर्हसि ॥ ००३ ॥

आख्याहि मे विस्तरतः कथं राम उपस्थितः ।
कथं च दृष्टवान्युद्धं कुशलो ह्यसि सत्तम ॥ ००४ ॥

वैशंपायन उवाच ॥

उपप्लव्ये निविष्टेषु पाण्डवेषु महात्मसु ।
प्रेषितो धृतराष्ट्रस्य समीपं मधुसूदनः ॥ ००५ ॥

शमं प्रति महाबाहो हितार्थं सर्वदेहिनाम् ॥ ००५ ॥

स गत्वा हास्तिनपुरं धृतराष्ट्रं समेत्य च ।
उक्तवान्वचनं तथ्यं हितं चैव विशेषतः ॥ ००६ ॥

न च तत्कृतवान्राजा यथाख्यातं हि ते पुरा ॥ ००६ ॥

अनवाप्य शमं तत्र कृष्णः पुरुषसत्तमः ।
आगच्छत महाबाहुरुपप्लव्यं जनाधिप ॥ ००७ ॥

ततः प्रत्यागतः कृष्णो धार्तराष्ट्रविसर्जितः ।
अक्रियायां नरव्याघ्र पाण्डवानिदमब्रवीत् ॥ ००८ ॥

न कुर्वन्ति वचो मह्यं कुरवः कालचोदिताः ।
निर्गच्छध्वं पाण्डवेयाः पुष्येण सहिता मया ॥ ००९ ॥

ततो विभज्यमानेषु बलेषु बलिनां वरः ।
प्रोवाच भ्रातरं कृष्णं रौहिणेयो महामनाः ॥ ०१० ॥

तेषामपि महाबाहो साहाय्यं मधुसूदन ।
क्रियतामिति तत्कृष्णो नास्य चक्रे वचस्तदा ॥ ०११ ॥

ततो मन्युपरीतात्मा जगाम यदुनन्दनः ।
तीर्थयात्रां हलधरः सरस्वत्यां महायशाः ॥ ०१२ ॥

मैत्रे नक्षत्रयोगे स्म सहितः सर्वयादवैः ॥ ०१२ ॥

आश्रयामास भोजस्तु दुर्योधनमरिंदमः ।
युयुधानेन सहितो वासुदेवस्तु पाण्डवान् ॥ ०१३ ॥

रौहिणेये गते शूरे पुष्येण मधुसूदनः ।
पाण्डवेयान्पुरस्कृत्य ययावभिमुखः कुरून् ॥ ०१४ ॥

गच्छन्नेव पथिस्थस्तु रामः प्रेष्यानुवाच ह ।
संभारांस्तीर्थयात्रायां सर्वोपकरणानि च ॥ ०१५ ॥

आनयध्वं द्वारकाया अग्नीन्वै याजकांस्तथा ॥ ०१५ ॥

सुवर्णं रजतं चैव धेनूर्वासांसि वाजिनः ।
कुञ्जरांश्च रथांश्चैव खरोष्ट्रं वाहनानि च ॥ ०१६ ॥

क्षिप्रमानीयतां सर्वं तीर्थहेतोः परिच्छदम् ॥ ०१६ ॥

प्रतिस्रोतः सरस्वत्या गच्छध्वं शीघ्रगामिनः ।
ऋत्विजश्चानयध्वं वै शतशश्च द्विजर्षभान् ॥ ०१७ ॥

एवं संदिश्य तु प्रेष्यान्बलदेवो महाबलः ।
तीर्थयात्रां ययौ राजन्कुरूणां वैशसे तदा ॥ ०१८ ॥

सरस्वतीं प्रतिस्रोतः समुद्रादभिजग्मिवान् ॥ ०१८ ॥

ऋत्विग्भिश्च सुहृद्भिश्च तथान्यैर्द्विजसत्तमैः ।
रथैर्गजैस्तथाश्वैश्च प्रेष्यैश्च भरतर्षभ ॥ ०१९ ॥

गोखरोष्ट्रप्रयुक्तैश्च यानैश्च बहुभिर्वृतः ॥ ०१९ ॥

श्रान्तानां क्लान्तवपुषां शिशूनां विपुलायुषाम् ।
तानि यानानि देशेषु प्रतीक्ष्यन्ते स्म भारत ॥ ०२० ॥

बुभुक्षितानामर्थाय क्लृप्तमन्नं समन्ततः ॥ ०२० ॥

यो यो यत्र द्विजो भोक्तुं कामं कामयते तदा ।
तस्य तस्य तु तत्रैवमुपजह्रुस्तदा नृप ॥ ०२१ ॥

तत्र स्थिता नरा राजन्रौहिणेयस्य शासनात् ।
भक्ष्यपेयस्य कुर्वन्ति राशींस्तत्र समन्ततः ॥ ०२२ ॥

वासांसि च महार्हाणि पर्यङ्कास्तरणानि च ।
पूजार्थं तत्र क्लृप्तानि विप्राणां सुखमिच्छताम् ॥ ०२३ ॥

यत्र यः स्वपते विप्रः क्षत्रियो वापि भारत ।
तत्र तत्र तु तस्यैव सर्वं क्लृप्तमदृश्यत ॥ ०२४ ॥

यथासुखं जनः सर्वस्तिष्ठते याति वा तदा ।
यातुकामस्य यानानि पानानि तृषितस्य च ॥ ०२५ ॥

बुभुक्षितस्य चान्नानि स्वादूनि भरतर्षभ ।
उपजह्रुर्नरास्तत्र वस्त्राण्याभरणानि च ॥ ०२६ ॥

स पन्थाः प्रबभौ राजन्सर्वस्यैव सुखावहः ।
स्वर्गोपमस्तदा वीर नराणां तत्र गच्छताम् ॥ ०२७ ॥

नित्यप्रमुदितोपेतः स्वादुभक्षः शुभान्वितः ।
विपण्यापणपण्यानां नानाजनशतैर्वृतः ॥ ०२८ ॥

नानाद्रुमलतोपेतो नानारत्नविभूषितः ॥ ०२८ ॥

ततो महात्मा नियमे स्थितात्मा ; पुण्येषु तीर्थेषु वसूनि राजन् ।
ददौ द्विजेभ्यः क्रतुदक्षिणाश्च ; यदुप्रवीरो हलभृत्प्रतीतः ॥ ०२९ ॥

दोग्ध्रीश्च धेनूश्च सहस्रशो वै ; सुवाससः काञ्चनबद्धशृङ्गीः ।
हयांश्च नानाविधदेशजाता ;न्यानानि दासीश्च तथा द्विजेभ्यः ॥ ०३० ॥

रत्नानि मुक्तामणिविद्रुमं च ; शृङ्गीसुवर्णं रजतं च शुभ्रम् ।
अयस्मयं ताम्रमयं च भाण्डं ; ददौ द्विजातिप्रवरेषु रामः ॥ ०३१ ॥

एवं स वित्तं प्रददौ महात्मा ; सरस्वतीतीर्थवरेषु भूरि ।
ययौ क्रमेणाप्रतिमप्रभाव ;स्ततः कुरुक्षेत्रमुदारवृत्तः ॥ ०३२ ॥

जनमेजय उवाच ॥

सारस्वतानां तीर्थानां गुणोत्पत्तिं वदस्व मे ।
फलं च द्विपदां श्रेष्ठ कर्मनिर्वृत्तिमेव च ॥ ०३३ ॥

यथाक्रमं च भगवंस्तीर्थानामनुपूर्वशः ।
ब्रह्मन्ब्रह्मविदां श्रेष्ठ परं कौतूहलं हि मे ॥ ०३४ ॥

वैशंपायन उवाच ॥

तीर्थानां विस्तरं राजन्गुणोत्पत्तिं च सर्वशः ।
मयोच्यमानां शृणु वै पुण्यां राजेन्द्र कृत्स्नशः ॥ ०३५ ॥

पूर्वं महाराज यदुप्रवीर ; ऋत्विक्सुहृद्विप्रगणैश्च सार्धम् ।
पुण्यं प्रभासं समुपाजगाम ; यत्रोडुराड्यक्ष्मणा क्लिश्यमानः ॥ ०३६ ॥

विमुक्तशापः पुनराप्य तेजः ; सर्वं जगद्भासयते नरेन्द्र ।
एवं तु तीर्थप्रवरं पृथिव्यां ; प्रभासनात्तस्य ततः प्रभासः ॥ ०३७ ॥

जनमेजय उवाच ॥

किमर्थं भगवान्सोमो यक्ष्मणा समगृह्यत ।
कथं च तीर्थप्रवरे तस्मिंश्चन्द्रो न्यमज्जत ॥ ०३८ ॥

कथमाप्लुत्य तस्मिंस्तु पुनराप्यायितः शशी ।
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ॥ ०३९ ॥

वैशंपायन उवाच ॥

दक्षस्य तनया यास्ताः प्रादुरासन्विशां पते ।
स सप्तविंशतिं कन्या दक्षः सोमाय वै ददौ ॥ ०४० ॥

नक्षत्रयोगनिरताः संख्यानार्थं च भारत ।
पत्न्यो वै तस्य राजेन्द्र सोमस्य शुभलक्षणाः ॥ ०४१ ॥

तास्तु सर्वा विशालाक्ष्यो रूपेणाप्रतिमा भुवि ।
अत्यरिच्यत तासां तु रोहिणी रूपसंपदा ॥ ०४२ ॥

ततस्तस्यां स भगवान्प्रीतिं चक्रे निशाकरः ।
सास्य हृद्या बभूवाथ तस्मात्तां बुभुजे सदा ॥ ०४३ ॥

पुरा हि सोमो राजेन्द्र रोहिण्यामवसच्चिरम् ।
ततोऽस्य कुपितान्यासन्नक्षत्राणि महात्मनः ॥ ०४४ ॥

ता गत्वा पितरं प्राहुः प्रजापतिमतन्द्रिताः ।
सोमो वसति नास्मासु रोहिणीं भजते सदा ॥ ०४५ ॥

ता वयं सहिताः सर्वास्त्वत्सकाशे प्रजेश्वर ।
वत्स्यामो नियताहारास्तपश्चरणतत्पराः ॥ ०४६ ॥

श्रुत्वा तासां तु वचनं दक्षः सोममथाब्रवीत् ।
समं वर्तस्व भार्यासु मा त्वाधर्मो महान्स्पृशेत् ॥ ०४७ ॥

ताश्च सर्वाब्रवीद्दक्षो गच्छध्वं सोममन्तिकात् ।
समं वत्स्यति सर्वासु चन्द्रमा मम शासनात् ॥ ०४८ ॥

विसृष्टास्तास्तदा जग्मुः शीतांशुभवनं तदा ।
तथापि सोमो भगवान्पुनरेव महीपते ॥ ०४९ ॥

रोहिणीं निवसत्येव प्रीयमाणो मुहुर्मुहुः ॥ ०४९ ॥

ततस्ताः सहिताः सर्वा भूयः पितरमब्रुवन् ।
तव शुश्रूषणे युक्ता वत्स्यामो हि तवाश्रमे ॥ ०५० ॥

सोमो वसति नास्मासु नाकरोद्वचनं तव ॥ ०५० ॥

तासां तद्वचनं श्रुत्वा दक्षः सोममथाब्रवीत् ।
समं वर्तस्व भार्यासु मा त्वां शप्स्ये विरोचन ॥ ०५१ ॥

अनादृत्य तु तद्वाक्यं दक्षस्य भगवाञ्शशी ।
रोहिण्या सार्धमवसत्ततस्ताः कुपिताः पुनः ॥ ०५२ ॥

गत्वा च पितरं प्राहुः प्रणम्य शिरसा तदा ।
सोमो वसति नास्मासु तस्मान्नः शरणं भव ॥ ०५३ ॥

रोहिण्यामेव भगवन्सदा वसति चन्द्रमाः ।
तस्मान्नस्त्राहि सर्वा वै यथा नः सोम आविशेत् ॥ ०५४ ॥

तच्छ्रुत्वा भगवान्क्रुद्धो यक्ष्माणं पृथिवीपते ।
ससर्ज रोषात्सोमाय स चोडुपतिमाविशत् ॥ ०५५ ॥

स यक्ष्मणाभिभूतात्माक्षीयताहरहः शशी ।
यत्नं चाप्यकरोद्राजन्मोक्षार्थं तस्य यक्ष्मणः ॥ ०५६ ॥

इष्ट्वेष्टिभिर्महाराज विविधाभिर्निशाकरः ।
न चामुच्यत शापाद्वै क्षयं चैवाभ्यगच्छत ॥ ०५७ ॥

क्षीयमाणे ततः सोमे ओषध्यो न प्रजज्ञिरे ।
निरास्वादरसाः सर्वा हतवीर्याश्च सर्वशः ॥ ०५८ ॥

ओषधीनां क्षये जाते प्राणिनामपि सङ्क्षयः ।
कृशाश्चासन्प्रजाः सर्वाः क्षीयमाणे निशाकरे ॥ ०५९ ॥

ततो देवाः समागम्य सोममूचुर्महीपते ।
किमिदं भवतो रूपमीदृशं न प्रकाशते ॥ ०६० ॥

कारणं ब्रूहि नः सर्वं येनेदं ते महद्भयम् ।
श्रुत्वा तु वचनं त्वत्तो विधास्यामस्ततो वयम् ॥ ०६१ ॥

एवमुक्तः प्रत्युवाच सर्वांस्ताञ्शशलक्षणः ।
शापं च कारणं चैव यक्ष्माणं च तथात्मनः ॥ ०६२ ॥

देवास्तस्य वचः श्रुत्वा गत्वा दक्षमथाब्रुवन् ।
प्रसीद भगवन्सोमे शापश्चैष निवर्त्यताम् ॥ ०६३ ॥

असौ हि चन्द्रमाः क्षीणः किञ्चिच्छेषो हि लक्ष्यते ।

क्षयाच्चैवास्य देवेश प्रजाश्चापि गताः क्षयम् ॥ ०६४ ॥

वीरुदोषधयश्चैव बीजानि विविधानि च ।
तथा वयं लोकगुरो प्रसादं कर्तुमर्हसि ॥ ०६५ ॥

एवमुक्तस्तदा चिन्त्य प्राह वाक्यं प्रजापतिः ।
नैतच्छक्यं मम वचो व्यावर्तयितुमन्यथा ॥ ०६६ ॥

हेतुना तु महाभागा निवर्तिष्यति केनचित् ॥ ०६६ ॥

समं वर्ततु सर्वासु शशी भार्यासु नित्यशः ।
सरस्वत्या वरे तीर्थे उन्मज्जञ्शशलक्षणः ॥ ०६७ ॥

पुनर्वर्धिष्यते देवास्तद्वै सत्यं वचो मम ॥ ०६७ ॥

मासार्धं च क्षयं सोमो नित्यमेव गमिष्यति ।
मासार्धं च सदा वृद्धिं सत्यमेतद्वचो मम ॥ ०६८ ॥

सरस्वतीं ततः सोमो जगाम ऋषिशासनात् ।
प्रभासं परमं तीर्थं सरस्वत्या जगाम ह ॥ ०६९ ॥

अमावास्यां महातेजास्तत्रोन्मज्जन्महाद्युतिः ।
लोकान्प्रभासयामास शीतांशुत्वमवाप च ॥ ०७० ॥

देवाश्च सर्वे राजेन्द्र प्रभासं प्राप्य पुष्कलम् ।
सोमेन सहिता भूत्वा दक्षस्य प्रमुखेऽभवन् ॥ ०७१ ॥

ततः प्रजापतिः सर्वा विससर्जाथ देवताः ।
सोमं च भगवान्प्रीतो भूयो वचनमब्रवीत् ॥ ०७२ ॥

मावमंस्थाः स्त्रियः पुत्र मा च विप्रान्कदाचन ।

गच्छ युक्तः सदा भूत्वा कुरु वै शासनं मम ॥ ०७३ ॥

स विसृष्टो महाराज जगामाथ स्वमालयम् ।
प्रजाश्च मुदिता भूत्वा भोजने च यथा पुरा ॥ ०७४ ॥

एतत्ते सर्वमाख्यातं यथा शप्तो निशाकरः ।
प्रभासं च यथा तीर्थं तीर्थानां प्रवरं ह्यभूत् ॥ ०७५ ॥

अमावास्यां महाराज नित्यशः शशलक्षणः ।
स्नात्वा ह्याप्यायते श्रीमान्प्रभासे तीर्थ उत्तमे ॥ ०७६ ॥

अतश्चैनं प्रजानन्ति प्रभासमिति भूमिप ।
प्रभां हि परमां लेभे तस्मिन्नुन्मज्ज्य चन्द्रमाः ॥ ०७७ ॥

ततस्तु चमसोद्भेदमच्युतस्त्वगमद्बली ।
चमसोद्भेद इत्येवं यं जनाः कथयन्त्युत ॥ ०७८ ॥

तत्र दत्त्वा च दानानि विशिष्टानि हलायुधः ।
उषित्वा रजनीमेकां स्नात्वा च विधिवत्तदा ॥ ०७९ ॥

उदपानमथागच्छत्त्वरावान्केशवाग्रजः ।
आद्यं स्वस्त्ययनं चैव तत्रावाप्य महत्फलम् ॥ ०८० ॥

स्निग्धत्वादोषधीनां च भूमेश्च जनमेजय ।
जानन्ति सिद्धा राजेन्द्र नष्टामपि सरस्वतीम् ॥ ०८१ ॥

# त्रितोपाख्यानम्

## अध्याय ०३५

वैशंपायन उवाच ॥

तस्मान्नदीगतं चापि उदपानं यशस्विनः ।
त्रितस्य च महाराज जगामाथ हलायुधः ॥ ००१ ॥

तत्र दत्त्वा बहु द्रव्यं पूजयित्वा तथा द्विजान् ।
उपस्पृश्य च तत्रैव प्रहृष्टो मुसलायुधः ॥ ००२ ॥

तत्र धर्मपरो ह्यासीत्त्रितः स सुमहातपाः ।
कूपे च वसता तेन सोमः पीतो महात्मना ॥ ००३ ॥

तत्र चैनं समुत्सृज्य भ्रातरौ जग्मतुर्गृहान् ।
ततस्तौ वै शशापाथ त्रितो ब्राह्मणसत्तमः ॥ ००४ ॥

जनमेजय उवाच ॥

उदपानं कथं ब्रह्मन्कथं च सुमहातपाः ।
पतितः किं च संत्यक्तो भ्रातृभ्यां द्विजसत्तमः ॥ ००५ ॥

कूपे कथं च हित्वैनं भ्रातरौ जग्मतुर्गृहान् ।
एतदाचक्ष्व मे ब्रह्मन्यदि श्राव्यं हि मन्यसे ॥ ००६ ॥

वैशंपायन उवाच ॥

आसन्पूर्वयुगे राजन्मुनयो भ्रातरस्त्रयः ।
एकतश्च द्वितश्चैव त्रितश्चादित्यसंनिभाः ॥ ००७ ॥

सर्वे प्रजापतिसमाः प्रजावन्तस्तथैव च ।
ब्रह्मलोकजितः सर्वे तपसा ब्रह्मवादिनः ॥ ००८ ॥

तेषां तु तपसा प्रीतो नियमेन दमेन च ।
अभवद्गौतमो नित्यं पिता धर्मरतः सदा ॥ ००९ ॥

स तु दीर्घेण कालेन तेषां प्रीतिमवाप्य च ।
जगाम भगवान्स्थानमनुरूपमिवात्मनः ॥ ०१० ॥

राजानस्तस्य ये पूर्वे याज्या ह्यासन्महात्मनः ।
ते सर्वे स्वर्गते तस्मिंस्तस्य पुत्रानपूजयन् ॥ ०११ ॥

तेषां तु कर्मणा राजंस्तथैवाध्ययनेन च ।
त्रितः स श्रेष्ठतां प्राप यथैवास्य पिता तथा ॥ ०१२ ॥

तं स्म सर्वे महाभागा मुनयः पुण्यलक्षणाः ।
अपूजयन्महाभागं तथा विद्वत्तयैव तु ॥ ०१३ ॥

कदाचिद्धि ततो राजन्भ्रातरावेकतद्वितौ ।
यज्ञार्थं चक्रतुश्चित्तं धनार्थं च विशेषतः ॥ ०१४ ॥

तयोश्चिन्ता समभवत्त्रितं गृह्य परंतप ।
याज्यान्सर्वानुपादाय प्रतिगृह्य पशूंस्ततः ॥ ०१५ ॥

सोमं पास्यामहे हृष्टाः प्राप्य यज्ञं महाफलम् ।
चक्रुश्चैव महाराज भ्रातरस्त्रय एव ह ॥ ०१६ ॥

तथा तु ते परिक्रम्य याज्यान्सर्वान्पशून्प्रति ।
याजयित्वा ततो याज्या.ण्लब्ध्वा च सुबहून्पशून् ॥ ०१७ ॥

याज्येन कर्मणा तेन प्रतिगृह्य विधानतः ।

प्राचीं दिशं महात्मान आजग्मुस्ते महर्षयः ॥ ०१८ ॥

त्रितस्तेषां महाराज पुरस्ताद्याति हृष्टवत् ।
एकतश्च द्वितश्चैव पृष्ठतः कालयन्पशून् ॥ ०१९ ॥

तयोश्चिन्ता समभवद्दृष्ट्वा पशुगणं महत् ।
कथं न स्युरिमा गाव आवाभ्यां वै विना त्रितम् ॥ ०२० ॥

तावन्योन्यं समाभाष्य एकतश्च द्वितश्च ह ।
यदूचतुर्मिथः पापौ तन्निबोध जनेश्वर ॥ ०२१ ॥

त्रितो यज्ञेषु कुशलस्त्रितो वेदेषु निष्ठितः ।
अन्यास्त्रितो बहुतरा गावः समुपलप्स्यते ॥ ०२२ ॥

तदावां सहितौ भूत्वा गाः प्रकाल्य व्रजावहे ।
त्रितोऽपि गच्छतां काममावाभ्यां वै विनाकृतः ॥ ०२३ ॥

तेषामागच्छतां रात्रौ पथिस्थाने वृकोऽभवत् ।
तथा कूपोऽविदूरेऽभूत्सरस्वत्यास्तटे महान् ॥ ०२४ ॥

अथ त्रितो वृकं दृष्ट्वा पथि तिष्ठन्तमग्रतः ।
तद्भयादपसर्पन्वै तस्मिन्कूपे पपात ह ॥ ०२५ ॥

अगाधे सुमहाघोरे सर्वभूतभयङ्करे ॥ ०२५ ॥

त्रितस्ततो महाभागः कूपस्थो मुनिसत्तमः ।
आर्तनादं ततश्चक्रे तौ तु शुश्रुवतुर्मुनी ॥ ०२६ ॥

तं ज्ञात्वा पतितं कूपे भ्रातरावेकतद्वितौ ।
वृकत्रासाच्च लोभाच्च समुत्सृज्य प्रजग्मतुः ॥ ०२७ ॥

भ्रातृभ्यां पशुलुब्धाभ्यामुत्सृष्टः स महातपाः ।
उदपाने महाराज निर्जले पांसुसंवृते ॥ ०२८ ॥

त्रित आत्मानमालक्ष्य कूपे वीरुत्तृणावृते ।
निमग्नं भरतश्रेष्ठ पापकृन्नरके यथा ॥ ०२९ ॥

बुद्ध्या ह्यगणयत्प्राज्ञो मृत्योर्भीतो ह्यसोमपः ।
सोमः कथं नु पातव्य इहस्थेन मया भवेत् ॥ ०३० ॥

स एवमनुसञ्चिन्त्य तस्मिन्कूपे महातपाः ।
ददर्श वीरुधं तत्र लम्बमानां यदृच्छया ॥ ०३१ ॥

पांसुग्रस्ते ततः कूपे विचिन्त्य सलिलं मुनिः ।
अग्नीन्सङ्कल्पयामास होत्रे चात्मानमेव च ॥ ०३२ ॥

ततस्तां वीरुधं सोमं सङ्कल्प्य सुमहातपाः ।
ऋचो यजूंषि सामानि मनसा चिन्तयन्मुनिः ॥ ०३३ ॥

ग्रावाणः शर्कराः कृत्वा प्रचक्रेऽभिषवं नृप ॥ ०३३ ॥

आज्यं च सलिलं चक्रे भागांश्च त्रिदिवौकसाम् ।
सोमस्याभिषवं कृत्वा चकार तुमुलं ध्वनिम् ॥ ०३४ ॥

स चाविशद्दिवं राजन्स्वरः शैक्षस्त्रितस्य वै ।
समवाप च तं यज्ञं यथोक्तं ब्रह्मवादिभिः ॥ ०३५ ॥

वर्तमाने तथा यज्ञे त्रितस्य सुमहात्मनः ।
आविग्नं त्रिदिवं सर्वं कारणं च न बुध्यते ॥ ०३६ ॥

ततः सुतुमुलं शब्दं शुश्रावाथ बृहस्पतिः ।
श्रुत्वा चैवाब्रवीद्देवान्सर्वान्देवपुरोहितः ॥ ०३७ ॥

त्रितस्य वर्तते यज्ञस्तत्र गच्छामहे सुराः ।
स हि क्रुद्धः सृजेदन्यान्देवानपि महातपाः ॥ ०३८ ॥

तच्छ्रुत्वा वचनं तस्य सहिताः सर्वदेवताः ।
प्रययुस्तत्र यत्रासौ त्रितयज्ञः प्रवर्तते ॥ ०३९ ॥

ते तत्र गत्वा विबुधास्तं कूपं यत्र स त्रितः ।
ददृशुस्तं महात्मानं दीक्षितं यज्ञकर्मसु ॥ ०४० ॥

दृष्ट्वा चैनं महात्मानं श्रिया परमया युतम् ।
ऊचुश्चाथ महाभागं प्राप्ता भागार्थिनो वयम् ॥ ०४१ ॥

अथाब्रवीदृषिर्देवान्पश्यध्वं मां दिवौकसः ।
अस्मिन्प्रतिभये कूपे निमग्नं नष्टचेतसम् ॥ ०४२ ॥

ततस्त्रितो महाराज भागांस्तेषां यथाविधि ।
मन्त्रयुक्तान्समददात्ते च प्रीतास्तदाभवन् ॥ ०४३ ॥

ततो यथाविधि प्राप्तान्भागान्प्राप्य दिवौकसः ।
प्रीतात्मानो ददुस्तस्मै वरान्यान्मनसेच्छति ॥ ०४४ ॥

स तु वव्रे वरं देवांस्त्रातुमर्हथ मामितः ।
यश्चेहोपस्पृशेत्कूपे स सोमपगतिं लभेत् ॥ ०४५ ॥

तत्र चोर्मिमती राजन्नुत्पपात सरस्वती ।
तयोत्क्षिप्तस्त्रितस्तस्थौ पूजयंस्त्रिदिवौकसः ॥ ०४६ ॥

तथेति चोक्त्वा विबुधा जग्मू राजन्यथागतम् ।
त्रितश्चाप्यगमत्प्रीतः स्वमेव निलयं तदा ॥ ०४७ ॥

क्रुद्धः स तु समासाद्य तावृषी भ्रातरौ तदा ।
उवाच परुषं वाक्यं शशाप च महातपाः ॥ ०४८ ॥

पशुलुब्धौ युवां यस्मान्मामुत्सृज्य प्रधावितौ ।
तस्माद्रूपेण तेषां वै दंष्ट्रिणामभितश्चरौ ॥ ०४९ ॥

भवितारौ मया शप्तौ पापेनानेन कर्मणा ।
प्रसवश्चैव युवयोर्गोलाङ्गूलर्क्षवानराः ॥ ०५० ॥

इत्युक्ते तु तदा तेन क्षणादेव विशां पते ।
तथाभूतावदृश्येतां वचनात्सत्यवादिनः ॥ ०५१ ॥

तत्राप्यमितविक्रान्तः स्पृष्ट्वा तोयं हलायुधः ।
दत्त्वा च विविधान्दायान्पूजयित्वा च वै द्विजान् ॥ ०५२ ॥

उदपानं च तं दृष्ट्वा प्रशस्य च पुनः पुनः ।
नदीगतमदीनात्मा प्राप्तो विनशनं तदा ॥ ०५३ ॥

---

# अध्याय ०३६

वैशंपायन उवाच ॥

ततो विनशनं राजन्नाजगाम हलायुधः ।
शूद्राभीरान्प्रति द्वेषाद्यत्र नष्टा सरस्वती ॥ ००१ ॥

यस्मात्सा भरतश्रेष्ठ द्वेषान्नष्टा सरस्वती ।
तस्मात्तदृषयो नित्यं प्राहुर्विनशनेति ह ॥ ००२ ॥

तच्चाप्युपस्पृश्य बलः सरस्वत्यां महाबलः ।
सुभूमिकं ततोऽगच्छत्सरस्वत्यास्तटे वरे ॥ ००३ ॥

तत्र चाप्सरसः शुभ्रा नित्यकालमतन्द्रिताः ।
क्रीडाभिर्विमलाभिश्च क्रीडन्ति विमलाननाः ॥ ००४ ॥

तत्र देवाः सगन्धर्वा मासि मासि जनेश्वर ।
अभिगच्छन्ति तत्तीर्थं पुण्यं ब्राह्मणसेवितम् ॥ ००५ ॥

तत्रादृश्यन्त गन्धर्वास्तथैवाप्सरसां गणाः ।
समेत्य सहिता राजन्यथाप्राप्तं यथासुखम् ॥ ००६ ॥

तत्र मोदन्ति देवाश्च पितरश्च सवीरुधः ।
पुण्यैः पुष्पैः सदा दिव्यैः कीर्यमाणाः पुनः पुनः ॥ ००७ ॥

आक्रीडभूमिः सा राजंस्तासामप्सरसां शुभा ।
सुभूमिकेति विख्याता सरस्वत्यास्तटे वरे ॥ ००८ ॥

तत्र स्नात्वा च दत्त्वा च वसु विप्रेषु माधवः ।
श्रुत्वा गीतं च तद्दिव्यं वादित्राणां च निःस्वनम् ॥ ००९ ॥

छायाश्च विपुला दृष्ट्वा देवगन्धर्वरक्षसाम् ।
गन्धर्वाणां ततस्तीर्थमागच्छद्रोहिणीसुतः ॥ ०१० ॥

विश्वावसुमुखास्तत्र गन्धर्वास्तपसान्विताः ।
नृत्तवादित्रगीतं च कुर्वन्ति सुमनोरमम् ॥ ०११ ॥

तत्र दत्त्वा हलधरो विप्रेभ्यो विविधं वसु ।
अजाविकं गोखरोष्ट्रं सुवर्णं रजतं तथा ॥ ०१२ ॥

भोजयित्वा द्विजान्कामैः संतर्प्य च महाधनैः ।

प्रययौ सहितो विप्रैः स्तूयमानश्च माधवः ॥ ०१३ ॥

तस्माद्गन्धर्वतीर्थाच्च महाबाहुररिंदमः ।
गर्गस्रोतो महातीर्थमाजगामैककुण्डली ॥ ०१४ ॥

यत्र गर्गेण वृद्धेन तपसा भावितात्मना ।
कालज्ञानगतिश्चैव ज्योतिषां च व्यतिक्रमः ॥ ०१५ ॥

उत्पाता दारुणाश्चैव शुभाश्च जनमेजय ।
सरस्वत्याः शुभे तीर्थे विहिता वै महात्मना ॥ ०१६ ॥

तस्य नाम्ना च तत्तीर्थं गर्गस्रोत इति स्मृतम् ॥ ०१६ ॥

तत्र गर्गं महाभागमृषयः सुव्रता नृप ।
उपासां चक्रिरे नित्यं कालज्ञानं प्रति प्रभो ॥ ०१७ ॥

तत्र गत्वा महाराज बलः श्वेतानुलेपनः ।
विधिवद्धि धनं दत्त्वा मुनीनां भावितात्मनाम् ॥ ०१८ ॥

उच्चावचांस्तथा भक्ष्यान्द्विजेभ्यो विप्रदाय सः ।
नीलवासास्ततोऽगच्छच्छङ्खतीर्थं महायशाः ॥ ०१९ ॥

तत्रापश्यन्महाशङ्खं महामेरुमिवोच्छ्रितम् ।
श्वेतपर्वतसङ्काशमृषिसंघैर्निषेवितम् ॥ ०२० ॥

सरस्वत्यास्तटे जातं नगं तालध्वजो बली ॥ ०२० ॥

यक्षा विद्याधराश्चैव राक्षसाश्चामितौजसः ।
पिशाचाश्चामितबला यत्र सिद्धाः सहस्रशः ॥ ०२१ ॥

ते सर्वे ह्यशनं त्यक्त्वा फलं तस्य वनस्पतेः ।

व्रतैश्च नियमैश्चैव काले काले स्म भुञ्जते ॥ ०२२ ॥

प्राप्तैश्च नियमैस्तैस्तैर्विचरन्तः पृथक्पृथक् ।
अदृश्यमाना मनुजैर्व्यचरन्पुरुषर्षभ ॥ ०२३ ॥

एवं ख्यातो नरपते लोकेऽस्मिन्स वनस्पतिः ।
तत्र तीर्थं सरस्वत्याः पावनं लोकविश्रुतम् ॥ ०२४ ॥

तस्मिंश्च यदुशार्दूलो दत्त्वा तीर्थे यशस्विनाम् ।
ताम्रायसानि भाण्डानि वस्त्राणि विविधानि च ॥ ०२५ ॥

पूजयित्वा द्विजांश्चैव पूजितश्च तपोधनैः ।
पुण्यं द्वैतवनं राजन्नाजगाम हलायुधः ॥ ०२६ ॥

तत्र गत्वा मुनीन्दृष्ट्वा नानावेषधरान्बलः ।
आप्लुत्य सलिले चापि पूजयामास वै द्विजान् ॥ ०२७ ॥

तथैव दत्त्वा विप्रेभ्यः परिभोगान्सुपुष्कलान् ।
ततः प्रायाद्बलो राजन्दक्षिणेन सरस्वतीम् ॥ ०२८ ॥

गत्वा चैव महाबाहुर्नातिदूरं महायशाः ।
धर्मात्मा नागधन्वानं तीर्थमागमदच्युतः ॥ ०२९ ॥

यत्र पन्नगराजस्य वासुकेः संनिवेशनम् ।
महाद्युतेर्महाराज बहुभिः पन्नगैर्वृतम् ॥ ०३० ॥

यत्रासन्नृषयः सिद्धाः सहस्राणि चतुर्दश ॥ ०३० ॥

यत्र देवाः समागम्य वासुकिं पन्नगोत्तमम् ।
सर्वपन्नगराजानमभ्यषिञ्चन्यथाविधि ॥ ०३१ ॥

पन्नगेभ्यो भयं तत्र विद्यते न स्म कौरव ॥ ०३१ ॥

तत्रापि विधिवद्दत्त्वा विप्रेभ्यो रत्नसञ्चयान् ।
प्रायात्प्राचीं दिशं राजन्दीप्यमानः स्वतेजसा ॥ ०३२ ॥

आप्लुत्य बहुशो हृष्टस्तेषु तीर्थेषु लाङ्गली ।
दत्त्वा वसु द्विजातिभ्यो जगामाति तपस्विनः ॥ ०३३ ॥

तत्रस्थानृषिसंघांस्तानभिवाद्य हलायुधः ।
ततो रामोऽगमत्तीर्थमृषिभिः सेवितं महत् ॥ ०३४ ॥

यत्र भूयो निववृते प्राङ्मुखा वै सरस्वती ।
ऋषीणां नैमिषेयाणामवेक्षार्थं महात्मनाम् ॥ ०३५ ॥

निवृत्तां तां सरिच्छ्रेष्ठां तत्र दृष्ट्वा तु लाङ्गली ।
बभूव विस्मितो राजन्बलः श्वेतानुलेपनः ॥ ०३६ ॥

जनमेजय उवाच ॥

कस्मात्सरस्वती ब्रह्मन्निवृत्ता प्राङ्मुखी ततः ।
व्याख्यातुमेतदिच्छामि सर्वमध्वर्युसत्तम ॥ ०३७ ॥

कस्मिंश्च कारणे तत्र विस्मितो यदुनन्दनः ।
विनिवृत्ता सरिच्छ्रेष्ठा कथमेतद्द्विजोत्तम ॥ ०३८ ॥

वैशंपायन उवाच ॥

पूर्वं कृतयुगे राजन्नैमिषेयास्तपस्विनः ।
वर्तमाने सुबहुले सत्रे द्वादशवार्षिके ॥ ०३९ ॥

ऋषयो बहवो राजंस्तत्र संप्रतिपेदिरे ॥ ०३९ ॥

उषित्वा च महाभागास्तस्मिन्सत्रे यथाविधि ।
निवृत्ते नैमिषेये वै सत्रे द्वादशवार्षिके ॥ ०४० ॥

आजग्मुर्ऋषयस्तत्र बहवस्तीर्थकारणात् ॥ ०४० ॥

ऋषीणां बहुलत्वात्तु सरस्वत्या विशां पते ।
तीर्थानि नगरायन्ते कूले वै दक्षिणे तदा ॥ ०४१ ॥

समन्तपञ्चकं यावत्तावत्ते द्विजसत्तमाः ।
तीर्थलोभान्नरव्याघ्र नद्यास्तीरं समाश्रिताः ॥ ०४२ ॥

जुह्वतां तत्र तेषां तु मुनीनां भावितात्मनाम् ।
स्वाध्यायेनापि महता बभूवुः पूरिता दिशः ॥ ०४३ ॥

अग्निहोत्रैस्ततस्तेषां हूयमानैर्महात्मनाम् ।
अशोभत सरिच्छ्रेष्ठा दीप्यमानैः समन्ततः ॥ ०४४ ॥

वालखिल्या महाराज अश्मकुट्टाश्च तापसाः ।
दन्तोलूखलिनश्चान्ये संप्रक्षालास्तथापरे ॥ ०४५ ॥

वायुभक्षा जलाहाराः पर्णभक्षाश्च तापसाः ।
नानानियमयुक्ताश्च तथा स्थण्डिलशायिनः ॥ ०४६ ॥

आसन्वै मुनयस्तत्र सरस्वत्याः समीपतः ।
शोभयन्तः सरिच्छ्रेष्ठां गङ्गामिव दिवौकसः ॥ ०४७ ॥

ततः पश्चात्समापेतुर्ऋषयः सत्रयाजिनः ।
तेऽवकाशं न ददृशुः कुरुक्षेत्रे महाव्रताः ॥ ०४८ ॥

ततो यज्ञोपवीतैस्ते तत्तीर्थं निर्मिमाय वै ।

जुहुवुश्चाग्निहोत्राणि चक्रुश्च विविधाः क्रियाः ॥ ०४९ ॥

ततस्तमृषिसंघातं निराशं चिन्तयान्वितम् ।
दर्शयामास राजेन्द्र तेषामर्थे सरस्वती ॥ ०५० ॥

ततः कुञ्जान्बहून्कृत्वा संनिवृत्ता सरिद्वरा ।
ऋषीणां पुण्यतपसां कारुण्याज्जनमेजय ॥ ०५१ ॥

ततो निवृत्य राजेन्द्र तेषामर्थे सरस्वती ।
भूयः प्रतीच्यभिमुखी सुस्राव सरितां वरा ॥ ०५२ ॥

अमोघा गमनं कृत्वा तेषां भूयो व्रजाम्यहम् ।
इत्यद्भुतं महच्चक्रे ततो राजन्महानदी ॥ ०५३ ॥

एवं स कुञ्जो राजेन्द्र नैमिषेय इति स्मृतः ।
कुरुक्षेत्रे कुरुश्रेष्ठ कुरुष्व महतीः क्रियाः ॥ ०५४ ॥

तत्र कुञ्जान्बहून्दृष्ट्वा संनिवृत्तां च तां नदीम् ।
बभूव विस्मयस्तत्र रामस्याथ महात्मनः ॥ ०५५ ॥

उपस्पृश्य तु तत्रापि विधिवद्यदुनन्दनः ।
दत्त्वा दायान्द्विजातिभ्यो भाण्डानि विविधानि च ॥ ०५६ ॥

भक्ष्यं पेयं च विविधं ब्राह्मणान्प्रत्यपादयत् ॥ ०५६ ॥

ततः प्रायाद्बलो राजन्पूज्यमानो द्विजातिभिः ।
सरस्वतीतीर्थवरं नानाद्विजगणायुतम् ॥ ०५७ ॥

बदरेङ्गुदकाश्मर्यप्लक्षाश्वत्थविभीतकैः ।
पनसैश्च पलाशैश्च करीरैः पीलुभिस्तथा ॥ ०५८ ॥

सरस्वतीतीररुहैर्बन्धनैः स्यन्दनैस्तथा ।
परूषकवनैश्चैव बिल्वैराम्रातकैस्तथा ॥ ०५९ ॥

अतिमुक्तकषण्डैश्च पारिजातैश्च शोभितम् ।
कदलीवनभूयिष्ठमिष्टं कान्तं मनोरमम् ॥ ०६० ॥

वाय्वम्बुफलपर्णादैर्दन्तोलूखलिकैरपि ।
तथाश्मकुट्टैर्वानेयैर्मुनिभिर्बहुभिर्वृतम् ॥ ०६१ ॥

स्वाध्यायघोषसंघुष्टं मृगयूथशताकुलम् ।
अहिंस्रैर्धर्मपरमैर्नृभिरत्यन्तसेवितम् ॥ ०६२ ॥

सप्तसारस्वतं तीर्थमाजगाम हलायुधः ।
यत्र मङ्कणकः सिद्धस्तपस्तेपे महामुनिः ॥ ०६३ ॥

---

# अध्याय ०३७

जनमेजय उवाच ॥

सप्तसारस्वतं कस्मात्कश्च मङ्कणको मुनिः ।
कथं सिद्धश्च भगवान्कश्चास्य नियमोऽभवत् ॥ ००१ ॥

कस्य वंशे समुत्पन्नः किं चाधीतं द्विजोत्तम ।
एतदिच्छाम्यहं श्रोतुं विधिवद्द्विजसत्तम ॥ ००२ ॥

वैशंपायन उवाच ॥

राजन्सप्त सरस्वत्यो याभिर्व्याप्तमिदं जगत् ।

आहूता बलवद्भिर्हि तत्र तत्र सरस्वती ॥ ००३ ॥

सुप्रभा काञ्चनाक्षी च विशाला मानसह्रदा ।
सरस्वती ओघवती सुवेणुर्विमलोदका ॥ ००४ ॥

पितामहस्य महतो वर्तमाने महीतले ।
वितते यज्ञवाटे वै समेतेषु द्विजातिषु ॥ ००५ ॥

पुण्याहघोषैर्विमलैर्वेदानां निनदैस्तथा ।
देवेषु चैव व्यग्रेषु तस्मिन्यज्ञविधौ तदा ॥ ००६ ॥

तत्र चैव महाराज दीक्षिते प्रपितामहे ।
यजतस्तत्र सत्रेण सर्वकामसमृद्धिना ॥ ००७ ॥

मनसा चिन्तिता ह्यर्था धर्मार्थकुशलैस्तदा ।
उपतिष्ठन्ति राजेन्द्र द्विजातींस्तत्र तत्र ह ॥ ००८ ॥

जगुश्च तत्र गन्धर्वा ननृतुश्चाप्सरोगणाः ।
वादित्राणि च दिव्यानि वादयामासुरञ्जसा ॥ ००९ ॥

तस्य यज्ञस्य संपत्त्या तुतुषुर्देवता अपि ।
विस्मयं परमं जग्मुः किमु मानुषयोनयः ॥ ०१० ॥

वर्तमाने तथा यज्ञे पुष्करस्थे पितामहे ।
अब्रुवन्नृषयो राजन्नायं यज्ञो महाफलः ॥ ०११ ॥

न दृश्यते सरिच्छ्रेष्ठा यस्मादिह सरस्वती ॥ ०११ ॥

तच्छ्रुत्वा भगवान्प्रीतः सस्माराथ सरस्वतीम् ।
पितामहेन यजता आहूता पुष्करेषु वै ॥ ०१२ ॥

सुप्रभा नाम राजेन्द्र नाम्ना तत्र सरस्वती ॥ ०१२ ॥

तां दृष्ट्वा मुनयस्तुष्टा वेगयुक्तां सरस्वतीम् ।
पितामहं मानयन्तीं क्रतुं ते बहु मेनिरे ॥ ०१३ ॥

एवमेषा सरिच्छ्रेष्ठा पुष्करेषु सरस्वती ।
पितामहार्थं संभूता तुष्ट्यर्थं च मनीषिणाम् ॥ ०१४ ॥

नैमिषे मुनयो राजन्समागम्य समासते ।
तत्र चित्राः कथा ह्यासन्वेदं प्रति जनेश्वर ॥ ०१५ ॥

तत्र ते मुनयो ह्यासन्नानास्वाध्यायवेदिनः ।
ते समागम्य मुनयः सस्मरुर्वै सरस्वतीम् ॥ ०१६ ॥

सा तु ध्याता महाराज ऋषिभिः सत्रयाजिभिः ।
समागतानां राजेन्द्र सहायार्थं महात्मनाम् ॥ ०१७ ॥

आजगाम महाभागा तत्र पुण्या सरस्वती ॥ ०१७ ॥

नैमिषे काञ्चनाक्षी तु मुनीनां सत्रयाजिनाम् ।
आगता सरितां श्रेष्ठा तत्र भारत पूजिता ॥ ०१८ ॥

गयस्य यजमानस्य गयेष्वेव महाक्रतुम् ।
आहूता सरितां श्रेष्ठा गययज्ञे सरस्वती ॥ ०१९ ॥

विशालां तु गयेष्वाहुर्ऋषयः संशितव्रताः ।
सरित्सा हिमवत्पार्श्वात्प्रसूता शीघ्रगामिनी ॥ ०२० ॥

औद्दालकेस्तथा यज्ञे यजतस्तत्र भारत ।
समेते सर्वतः स्फीते मुनीनां मण्डले तदा ॥ ०२१ ॥

उत्तरे कोसलाभागे पुण्ये राजन्महात्मनः ।
औद्दालकेन यजता पूर्वं ध्याता सरस्वती ॥ ०२२ ॥

आजगाम सरिच्छ्रेष्ठा तं देशमृषिकारणात् ।
पूज्यमाना मुनिगणैर्वल्कलाजिनसंवृतैः ॥ ०२३ ॥

मनोह्रदेति विख्याता सा हि तैर्मनसा हृता ॥ ०२३ ॥

सुवेणुरृषभद्वीपे पुण्ये राजर्षिसेविते ।
कुरोश्च यजमानस्य कुरुक्षेत्रे महात्मनः ॥ ०२४ ॥

आजगाम महाभागा सरिच्छ्रेष्ठा सरस्वती ॥ ०२४ ॥

ओघवत्यपि राजेन्द्र वसिष्ठेन महात्मना ।
समाहूता कुरुक्षेत्रे दिव्यतोया सरस्वती ॥ ०२५ ॥

दक्षेण यजता चापि गङ्गाद्वारे सरस्वती ।
विमलोदा भगवती ब्रह्मणा यजता पुनः ॥ ०२६ ॥

समाहूता ययौ तत्र पुण्ये हैमवते गिरौ ॥ ०२६ ॥

एकीभूतास्ततस्तास्तु तस्मिंस्तीर्थे समागताः ।
सप्तसारस्वतं तीर्थं ततस्तत्प्रथितं भुवि ॥ ०२७ ॥

इति सप्त सरस्वत्यो नामतः परिकीर्तिताः ।
सप्तसारस्वतं चैव तीर्थं पुण्यं तथा स्मृतम् ॥ ०२८ ॥

शृणु मङ्कणकस्यापि कौमारब्रह्मचारिणः ।
आपगामवगाढस्य राजन्प्रक्रीडितं महत् ॥ ०२९ ॥

दृष्ट्वा यदृच्छया तत्र स्त्रियमम्भसि भारत ।

स्नायन्तीं रुचिरापाङ्गीं दिग्वाससमनिन्दिताम्  ॥ ०३०  ॥

सरस्वत्यां महाराज चस्कन्दे वीर्यमम्भसि  ॥ ०३०  ॥

तद्रेतः स तु जग्राह कलशे वै महातपाः ।
सप्तधा प्रविभागं तु कलशस्थं जगाम ह  ॥ ०३१  ॥

तत्रर्षयः सप्त जाता जज्ञिरे मरुतां गणाः  ॥ ०३१  ॥

वायुवेगो वायुबलो वायुहा वायुमण्डलः ।
वायुज्वालो वायुरेता वायुचक्रश्च वीर्यवान्  ॥ ०३२  ॥

एवमेते समुत्पन्ना मरुतां जनयिष्णवः  ॥ ०३२  ॥

इदमन्यच्च राजेन्द्र शृण्वाश्चर्यतरं भुवि ।
महर्षेश्चरितं यादृक्त्रिषु लोकेषु विश्रुतम्  ॥ ०३३  ॥

पुरा मङ्कणकः सिद्धः कुशाग्रेणेति नः श्रुतम् ।
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत्  ॥ ०३४  ॥

स वि शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान्  ॥ ०३४  ॥

ततस्तस्मिन्प्रनृत्ते वै स्थावरं जङ्गमं च यत् ।
प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम्  ॥ ०३५  ॥

ब्रह्मादिभिः सुरै राजन्नृषिभिश्च तपोधनैः ।
विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप  ॥ ०३६  ॥

नायं नृत्येद्यथा देव तथा त्वं कर्तुमर्हसि  ॥ ०३६  ॥

ततो देवो मुनिं दृष्ट्वा हर्षाविष्टमतीव ह ।

सुराणां हितकामार्थं महादेवोऽभ्यभाषत ॥ ०३७ ॥

भो भो ब्राह्मण धर्मज्ञ किमर्थं नरिनर्त्सि वै ।
हर्षस्थानं किमर्थं वै तवेदं मुनिसत्तम ॥ ०३८ ॥

तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम ॥ ०३८ ॥

ऋषिरुवाच ॥

किं न पश्यसि मे ब्रह्मन्कराच्छाकरसं स्रुतम् ।
यं दृष्ट्वा वै प्रनृत्तोऽहं हर्षेण महता विभो ॥ ०३९ ॥

तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् ।
अहं न विस्मयं विप्र गच्छामीति प्रपश्य माम् ॥ ०४० ॥

एवमुक्त्वा मुनिश्रेष्ठं महादेवेन धीमता ।
अङ्गुल्यग्रेण राजेन्द्र स्वाङ्गुष्ठस्ताडितोऽभवत् ॥ ०४१ ॥

ततो भस्म क्षताद्राजन्निर्गतं हिमसंनिभम् ।
तद्दृष्ट्वा व्रीडितो राजन्स मुनिः पादयोर्गतः ॥ ०४२ ॥

ऋषिरुवाच ॥

नान्यं देवादहं मन्ये रुद्रात्परतरं महत् ।
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक् ॥ ०४३ ॥

त्वया सृष्टमिदं विश्वं वदन्तीह मनीषिणः ।
त्वामेव सर्वं विशति पुनरेव युगक्षये ॥ ०४४ ॥

देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ।
त्वयि सर्वे स्म दृश्यन्ते सुरा ब्रह्मादयोऽनघ ॥ ०४५ ॥

सर्वस्त्वमसि देवानां कर्ता कारयिता च ह ।
त्वत्प्रसादात्सुराः सर्वे मोदन्तीहाकुतोभयाः ॥ ०४६ ॥

एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽब्रवीत् ।
भगवंस्त्वत्प्रसादाद्धि तपो मे न क्षरेदिति ॥ ०४७ ॥

ततो देवः प्रीतमनास्तमृषिं पुनरब्रवीत् ।
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा ॥ ०४८ ॥

आश्रमे चेह वत्स्यामि त्वया सार्धमहं सदा ॥ ०४८ ॥

सप्तसारस्वते चास्मिन्यो मामर्चिष्यते नरः ।
न तस्य दुर्लभं किञ्चिद्भवितेह परत्र च ॥ ०४९ ॥

सारस्वतं च लोकं ते गमिष्यन्ति न संशयः ॥ ०४९ ॥

एतन्मङ्कणकस्यापि चरितं भूरितेजसः ।
स हि पुत्रः सजन्यायामुत्पन्नो मातरिश्वना ॥ ०५० ॥

---

# अध्याय ०३८

वैशंपायन उवाच ॥

उषित्वा तत्र रामस्तु संपूज्याश्रमवासिनः ।
तथा मङ्कणके प्रीतिं शुभां चक्रे हलायुधः ॥ ००१ ॥

दत्त्वा दानं द्विजातिभ्यो रजनीं तामुपोष्य च ।

पूजितो मुनिसंघैश्च प्रातरुत्थाय लाङ्गली ॥ ००२ ॥

अनुज्ञाप्य मुनीन्सर्वान्स्पृष्ट्वा तोयं च भारत ।
प्रययौ त्वरितो रामस्तीर्थहेतोर्महाबलः ॥ ००३ ॥

तत औशनसं तीर्थमाजगाम हलायुधः ।
कपालमोचनं नाम यत्र मुक्तो महामुनिः ॥ ००४ ॥

महता शिरसा राजन्ग्रस्तजङ्घो महोदरः ।
राक्षसस्य महाराज रामक्षिप्तस्य वै पुरा ॥ ००५ ॥

तत्र पूर्वं तपस्तप्तं काव्येन सुमहात्मना ।
यत्रास्य नीतिरखिला प्रादुर्भूता महात्मनः ॥ ००६ ॥

तत्रस्थश्चिन्तयामास दैत्यदानवविग्रहम् ॥ ००६ ॥

तत्प्राप्य च बलो राजंस्तीर्थप्रवरमुत्तमम् ।
विधिवद्धि ददौ वित्तं ब्राह्मणानां महात्मनाम् ॥ ००७ ॥

जनमेजय उवाच ॥

कपालमोचनं ब्रह्मन्कथं यत्र महामुनिः ।
मुक्तः कथं चास्य शिरो लग्नं केन च हेतुना ॥ ००८ ॥

वैशंपायन उवाच ॥

पुरा वै दण्डकारण्ये राघवेण महात्मना ।
वसता राजशार्दूल राक्षसास्तत्र हिंसिताः ॥ ००९ ॥

जनस्थाने शिरश्छिन्नं राक्षसस्य दुरात्मनः ।
क्षुरेण शितधारेण तत्पपात महावने ॥ ०१० ॥

महोदरस्य तल्लग्नं जङ्घायां वै यदृच्छया ।
वने विचरतो राजन्नस्थि भित्त्वास्फुरत्तदा ॥ ०११ ॥

स तेन लग्नेन तदा द्विजातिर्न शशाक ह ।
अभिगन्तुं महाप्राज्ञस्तीर्थान्यायतनानि च ॥ ०१२ ॥

स पूतिना विस्रवता वेदनार्तो महामुनिः ।
जगाम सर्वतीर्थानि पृथिव्यामिति नः श्रुतम् ॥ ०१३ ॥

स गत्वा सरितः सर्वाः समुद्रांश्च महातपाः ।
कथयामास तत्सर्वमृषीणां भावितात्मनाम् ॥ ०१४ ॥

आप्लुतः सर्वतीर्थेषु न च मोक्षमवाप्तवान् ।
स तु शुश्राव विप्रेन्द्रो मुनीनां वचनं महत् ॥ ०१५ ॥

सरस्वत्यास्तीर्थवरं ख्यातमौशनसं तदा ।
सर्वपापप्रशमनं सिद्धक्षेत्रमनुत्तमम् ॥ ०१६ ॥

स तु गत्वा ततस्तत्र तीर्थमौशनसं द्विजः ।
तत औशनसे तीर्थे तस्योपस्पृशतस्तदा ॥ ०१७ ॥

तच्छिरश्चरणं मुक्त्वा पपातान्तर्जले तदा ॥ ०१७ ॥

ततः स विरुजो राजन्पूतात्मा वीतकल्मषः ।
आजगामाश्रमं प्रीतः कृतकृत्यो महोदरः ॥ ०१८ ॥

सोऽथ गत्वाश्रमं पुण्यं विप्रमुक्तो महातपाः ।
कथयामास तत्सर्वमृषीणां भावितात्मनाम् ॥ ०१९ ॥

ते श्रुत्वा वचनं तस्य ततस्तीर्थस्य मानद ।

कपालमोचनमिति नाम चक्रुः समागताः ॥ ०२० ॥

तत्र दत्त्वा बहून्दायान्विप्रान्संपूज्य माधवः ।
जगाम वृष्णिप्रवरो रुषङ्गोराश्रमं तदा ॥ ०२१ ॥

यत्र तप्तं तपो घोरमार्ष्टिषेणेन भारत ।
ब्राह्मण्यं लब्धवांस्तत्र विश्वामित्रो महामुनिः ॥ ०२२ ॥

ततो हलधरः श्रीमान्ब्राह्मणैः परिवारितः ।
जगाम यत्र राजेन्द्र रुषङ्गुस्तनुमत्यजत् ॥ ०२३ ॥

रुषङ्गुर्ब्राह्मणो वृद्धस्तपोनित्यश्च भारत ।
देहन्यासे कृतमना विचिन्त्य बहुधा बहु ॥ ०२४ ॥

ततः सर्वानुपादाय तनयान्वै महातपाः ।
रुषङ्गुरब्रवीत्तत्र नयध्वं मा पृथूदकम् ॥ ०२५ ॥

विज्ञायातीतवयसं रुषङ्गुं ते तपोधनाः ।
तं वै तीर्थमुपानिन्युः सरस्वत्यास्तपोधनम् ॥ ०२६ ॥

स तैः पुत्रैस्तदा धीमानानीतो वै सरस्वतीम् ।
पुण्यां तीर्थशतोपेतां विप्रसंघैर्निषेविताम् ॥ ०२७ ॥

स तत्र विधिना राजन्नाप्लुतः सुमहातपाः ।
ज्ञात्वा तीर्थगुणांश्चैव प्राहेदमृषिसत्तमः ॥ ०२८ ॥

सुप्रीतः पुरुषव्याघ्र सर्वान्पुत्रानुपासतः ॥ ०२८ ॥

सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम् ।
पृथूदके जप्यपरो नैनं श्वोमरणं तपेत् ॥ ०२९ ॥

तत्राप्लुत्य स धर्मात्मा उपस्पृश्य हलायुधः ।
दत्त्वा चैव बहून्दायान्विप्राणां विप्रवत्सलः ॥ ०३० ॥

ससर्ज यत्र भगवा.ण्लोका.ण्लोकपितामहः ।
यत्रार्ष्टिषेणः कौरव्य ब्राह्मण्यं संशितव्रतः ॥ ०३१ ॥

तपसा महता राजन्प्राप्तवानृषिसत्तमः ॥ ०३१ ॥

सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः ।
ब्राह्मण्यं लब्धवान्यत्र विश्वामित्रो महामुनिः ॥ ०३२ ॥

महातपस्वी भगवानुग्रतेजा महातपाः ॥ ०३२ ॥

तत्राजगाम बलवान्बलभद्रः प्रतापवान् ।

---

# अध्याय ०३९

जनमेजय उवाच ॥

कथमार्ष्टिषेणो भगवान्विपुलं तप्तवांस्तपः ।
सिन्धुद्वीपः कथं चापि ब्राह्मण्यं लब्धवांस्तदा ॥ ००१ ॥

देवापिश्च कथं ब्रह्मन्विश्वामित्रश्च सत्तम ।
तन्ममाचक्ष्व भगवन्परं कौतूहलं हि मे ॥ ००२ ॥

वैशंपायन उवाच ॥

पुरा कृतयुगे राजन्नार्ष्टिषेणो द्विजोत्तमः ।
वसन्गुरुकुले नित्यं नित्यमध्ययने रतः ॥ ००३ ॥

तस्य राजन्गुरुकुले वसतो नित्यमेव ह ।
समाप्तिं नागमद्विद्या नापि वेदा विशां पते ॥ ००४ ॥

स निर्विण्णस्ततो राजंस्तपस्तेपे महातपाः ।
ततो वै तपसा तेन प्राप्य वेदाननुत्तमान् ॥ ००५ ॥

स विद्वान्वेदयुक्तश्च सिद्धश्चाप्यृषिसत्तमः ।
तत्र तीर्थे वरान्प्रादात्त्रीनेव सुमहातपाः ॥ ००६ ॥

अस्मिंस्तीर्थे महानद्या अद्यप्रभृति मानवः ।
आप्लुतो वाजिमेधस्य फलं प्राप्नोति पुष्कलम् ॥ ००७ ॥

अद्यप्रभृति नैवात्र भयं व्यालाद्भविष्यति ।
अपि चाल्पेन यत्नेन फलं प्राप्स्यति पुष्कलम् ॥ ००८ ॥

एवमुक्त्वा महातेजा जगाम त्रिदिवं मुनिः ।
एवं सिद्धः स भगवानार्ष्टिषेणः प्रतापवान् ॥ ००९ ॥

तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान् ।
देवापिश्च महाराज ब्राह्मण्यं प्रापतुर्महत् ॥ ०१० ॥

तथा च कौशिकस्तात तपोनित्यो जितेन्द्रियः ।
तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान् ॥ ०११ ॥

गाधिर्नाम महानासीत्क्षत्रियः प्रथितो भुवि ।
तस्य पुत्रोऽभवद्राजन्विश्वामित्रः प्रतापवान् ॥ ०१२ ॥

स राजा कौशिकस्तात महायोग्यभवत्किल ।
स पुत्रमभिषिच्याथ विश्वामित्रं महातपाः ॥ ०१३ ॥

देहन्यासे मनश्चक्रे तमूचुः प्रणताः प्रजाः ।
न गन्तव्यं महाप्राज्ञ त्राहि चास्मान्महाभयात्  ॥ ०१४  ॥

एवमुक्तः प्रत्युवाच ततो गाधिः प्रजास्तदा ।
विश्वस्य जगतो गोप्ता भविष्यति सुतो मम  ॥ ०१५  ॥

इत्युक्त्वा तु ततो गाधिर्विश्वामित्रं निवेश्य च ।
जगाम त्रिदिवं राजन्विश्वामित्रोऽभवन्नृपः  ॥ ०१६  ॥

न च शक्नोति पृथिवीं यत्नवानपि रक्षितुम्  ॥ ०१६  ॥

ततः शुश्राव राजा स राक्षसेभ्यो महाभयम् ।
निर्ययौ नगराच्चापि चतुरङ्गबलान्वितः  ॥ ०१७  ॥

स गत्वा दूरमध्वानं वसिष्ठाश्रममभ्ययात् ।
तस्य ते सैनिका राजंश्चक्रुस्तत्रानयान्बहून्  ॥ ०१८  ॥

ततस्तु भगवान्विप्रो वसिष्ठोऽऽश्रममभ्ययात् ।
ददृशे च ततः सर्वं भज्यमानं महावनम्  ॥ ०१९  ॥

तस्य क्रुद्धो महाराज वसिष्ठो मुनिसत्तमः ।
सृजस्व शबरान्घोरानिति स्वां गामुवाच ह  ॥ ०२०  ॥

तथोक्ता सासृजद्धेनुः पुरुषान्घोरदर्शनान् ।
ते च तद्बलमासाद्य बभञ्जुः सर्वतोदिशम्  ॥ ०२१  ॥

तद्दृष्ट्वा विद्रुतं सैन्यं विश्वामित्रस्तु गाधिजः ।
तपः परं मन्यमानस्तपस्येव मनो दधे  ॥ ०२२  ॥

सोऽस्मिंस्तीर्थवरे राजन्सरस्वत्याः समाहितः ।
नियमैश्चोपवासैश्च कर्शयन्देहमात्मनः  ॥ ०२३  ॥

जलाहारो वायुभक्षः पर्णाहारश्च सोऽभवत् ।
तथा स्थण्डिलशायी च ये चान्ये नियमाः पृथक् ॥ ०२४ ॥

असकृत्तस्य देवास्तु व्रतविघ्नं प्रचक्रिरे ।
न चास्य नियमाद्बुद्धिरपयाति महात्मनः ॥ ०२५ ॥

ततः परेण यत्नेन तप्त्वा बहुविधं तपः ।
तेजसा भास्कराकारो गाधिजः समपद्यत ॥ ०२६ ॥

तपसा तु तथा युक्तं विश्वामित्रं पितामहः ।
अमन्यत महातेजा वरदो वरमस्य तत् ॥ ०२७ ॥

स तु वव्रे वरं राजन्स्यामहं ब्राह्मणस्त्विति ।
तथेति चाब्रवीद्ब्रह्मा सर्वलोकपितामहः ॥ ०२८ ॥

स लब्ध्वा तपसोग्रेण ब्राह्मणत्वं महायशाः ।
विचचार महीं कृत्स्नां कृतकामः सुरोपमः ॥ ०२९ ॥

तस्मिंस्तीर्थवरे रामः प्रदाय विविधं वसु ।
पयस्विनीस्तथा धेनूर्यानानि शयनानि च ॥ ०३० ॥

तथा वस्त्राण्यलङ्कारं भक्ष्यं पेयं च शोभनम् ।
अददान्मुदितो राजन्पूजयित्वा द्विजोत्तमान् ॥ ०३१ ॥

ययौ राजंस्ततो रामो बकस्याश्रममन्तिकात् ।
यत्र तेपे तपस्तीव्रं दाल्भ्यो बक इति श्रुतिः ॥ ०३२ ॥

# अध्याय ०४०

वैशंपायन उवाच ॥

ब्रह्मयोनिभिराकीर्णं जगाम यदुनन्दनः ।
यत्र दाल्भ्यो बको राजन्पश्वर्थं सुमहातपाः ॥ ००१ ॥

जुहाव धृतराष्ट्रस्य राष्ट्रं वैचित्रवीर्यिणः ॥ ००१ ॥

तपसा घोररूपेण कर्शयन्देहमात्मनः ।
क्रोधेन महताविष्टो धर्मात्मा वै प्रतापवान् ॥ ००२ ॥

पुरा हि नैमिषेयाणां सत्रे द्वादशवार्षिके ।
वृत्ते विश्वजितोऽन्ते वै पाञ्चालानृषयोऽगमन् ॥ ००३ ॥

तत्रेश्वरमयाचन्त दक्षिणार्थं मनीषिणः ।
बलान्वितान्वत्सतरान्निर्व्याधीनेकविंशतिम् ॥ ००४ ॥

तानब्रवीद्बको वृद्धो विभजध्वं पशूनिति ।
पशूनेतानहं त्यक्त्वा भिक्षिष्ये राजसत्तमम् ॥ ००५ ॥

एवमुक्त्वा ततो राजन्नृषीन्सर्वान्प्रतापवान् ।
जगाम धृतराष्ट्रस्य भवनं ब्राह्मणोत्तमः ॥ ००६ ॥

स समीपगतो भूत्वा धृतराष्ट्रं जनेश्वरम् ।
अयाचत पशून्दाल्भ्यः स चैनं रुषितोऽब्रवीत् ॥ ००७ ॥

यदृच्छया मृता दृष्ट्वा गास्तदा नृपसत्तम ।
एतान्पशून्नय क्षिप्रं ब्रह्मबन्धो यदीच्छसि ॥ ००८ ॥

ऋषिस्त्वथ वचः श्रुत्वा चिन्तयामास धर्मवित् ।

अहो बत नृशंसं वै वाक्यमुक्तोऽस्मि संसदि ॥ ००९ ॥

चिन्तयित्वा मुहूर्तं च रोषाविष्टो द्विजोत्तमः ।
मतिं चक्रे विनाशाय धृतराष्ट्रस्य भूपतेः ॥ ०१० ॥

स उत्कृत्य मृतानां वै मांसानि द्विजसत्तमः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेः पुरा ॥ ०११ ॥

अवकीर्णे सरस्वत्यास्तीर्थे प्रज्वाल्य पावकम् ।
बको दाल्भ्यो महाराज नियमं परमास्थितः ॥ ०१२ ॥

स तैरेव जुहावास्य राष्ट्रं मांसैर्महातपाः ॥ ०१२ ॥

तस्मिंस्तु विधिवत्सत्रे संप्रवृत्ते सुदारुणे ।
अक्षीयत ततो राष्ट्रं धृतराष्ट्रस्य पार्थिव ॥ ०१३ ॥

छिद्यमानं यथानन्तं वनं परशुना विभो ।
बभूवापहतं तच्चाप्यवकीर्णमचेतनम् ॥ ०१४ ॥

दृष्ट्वा तदवकीर्णं तु राष्ट्रं स मनुजाधिपः ।
बभूव दुर्मना राजंश्चिन्तयामास च प्रभुः ॥ ०१५ ॥

मोक्षार्थमकरोद्यत्नं ब्राह्मणैः सहितः पुरा ।
अथासौ पार्थिवः खिन्नस्ते च विप्रास्तदा नृप ॥ ०१६ ॥

यदा चापि न शक्नोति राष्ट्रं मोचयितुं नृप ।
अथ वैप्राश्निकांस्तत्र पप्रच्छ जनमेजय ॥ ०१७ ॥

ततो वैप्राश्निकाः प्राहुः पशुविप्रकृतस्त्वया ।
मांसैरभिजुहोतीति तव राष्ट्रं मुनिर्बकः ॥ ०१८ ॥

तेन ते हूयमानस्य राष्ट्रस्यास्य क्षयो महान् ।
तस्यैतत्तपसः कर्म येन ते ह्यनयो महान्  ॥ ०१९  ॥

अपां कुञ्जे सरस्वत्यास्तं प्रसादय पार्थिव  ॥ ०१९  ॥

सरस्वतीं ततो गत्वा स राजा बकमब्रवीत् ।
निपत्य शिरसा भूमौ प्राञ्जलिर्भरतर्षभ  ॥ ०२०  ॥

प्रसादये त्वा भगवन्नपराधं क्षमस्व मे ।
मम दीनस्य लुब्धस्य मौर्ख्येण हतचेतसः  ॥ ०२१  ॥

त्वं गतिस्त्वं च मे नाथः प्रसादं कर्तुमर्हसि  ॥ ०२१  ॥

तं तथा विलपन्तं तु शोकोपहतचेतसम् ।
दृष्ट्वा तस्य कृपा जज्ञे राष्ट्रं तच्च व्यमोचयत्  ॥ ०२२  ॥

ऋषिः प्रसन्नस्तस्याभूत्संरम्भं च विहाय सः ।
मोक्षार्थं तस्य राष्ट्रस्य जुहाव पुनराहुतिम्  ॥ ०२३  ॥

मोक्षयित्वा ततो राष्ट्रं प्रतिगृह्य पशून्बहून् ।
हृष्टात्मा नैमिषारण्यं जगाम पुनरेव हि  ॥ ०२४  ॥

धृतराष्ट्रोऽपि धर्मात्मा स्वस्थचेता महामनाः ।
स्वमेव नगरं राजा प्रतिपेदे महर्द्धिमत्  ॥ ०२५  ॥

तत्र तीर्थे महाराज बृहस्पतिरुदारधीः ।
असुराणामभावाय भावाय च दिवौकसाम्  ॥ ०२६  ॥

मांसैरपि जुहावेष्टिमक्षीयन्त ततोऽसुराः ।
दैवतैरपि संभग्ना जितकाशिभिराहवे  ॥ ०२७  ॥

तत्रापि विधिवद्दत्त्वा ब्राह्मणेभ्यो महायशाः ।
वाजिनः कुञ्जरांश्चैव रथांश्चाश्वतरीयुतान् ॥ ०२८ ॥

रत्नानि च महार्हाणि धनं धान्यं च पुष्कलम् ।
ययौ तीर्थं महाबाहुर्यायातं पृथिवीपते ॥ ०२९ ॥

यत्र यज्ञे ययातेस्तु महाराज सरस्वती ।
सर्पिः पयश्च सुस्राव नाहुषस्य महात्मनः ॥ ०३० ॥

तत्रेष्ट्वा पुरुषव्याघ्रो ययातिः पृथिवीपतिः ।
आक्रामदूर्ध्वं मुदितो लेभे लोकांश्च पुष्कलान् ॥ ०३१ ॥

ययातेर्यजमानस्य यत्र राजन्सरस्वती ।
प्रसृता प्रददौ कामान्ब्राह्मणानां महात्मनाम् ॥ ०३२ ॥

यत्र यत्र हि यो विप्रो यान्यान्कामानभीप्सति ।
तत्र तत्र सरिच्छ्रेष्ठा ससर्ज सुबहून्रसान् ॥ ०३३ ॥

तत्र देवाः सगन्धर्वाः प्रीता यज्ञस्य संपदा ।
विस्मिता मानुषाश्चासन्दृष्ट्वा तां यज्ञसंपदम् ॥ ०३४ ॥

ततस्तालकेतुर्महाधर्मसेतु ;र्महात्मा कृतात्मा महादाननित्यः ।
वसिष्ठापवाहं महाभीमवेगं ; धृतात्मा जितात्मा समभ्याजगाम ॥ ०३५ ॥

---

# अध्याय ०४१

जनमेजय उवाच ॥

वसिष्ठस्यापवाहो वै भीमवेगः कथं नु सः ।
किमर्थं च सरिच्छ्रेष्ठा तमृषिं प्रत्यवाहयत् ॥ ००१ ॥

केन चास्याभवद्वैरं कारणं किं च तत्प्रभो ।
शंस पृष्टो महाप्राज्ञ न हि तृप्यामि कथ्यताम् ॥ ००२ ॥

वैशंपायन उवाच ॥

विश्वामित्रस्य चैवर्षेर्वसिष्ठस्य च भारत ।
भृशं वैरमभूद्राजंस्तपःस्पर्धाकृतं महत् ॥ ००३ ॥

आश्रमो वै वसिष्ठस्य स्थाणुतीर्थेऽभवन्महान् ।
पूर्वतः पश्चिमश्चासीद्विश्वामित्रस्य धीमतः ॥ ००४ ॥

यत्र स्थाणुर्महाराज तप्तवान्सुमहत्तपः ।
यत्रास्य कर्म तद्घोरं प्रवदन्ति मनीषिणः ॥ ००५ ॥

यत्रेष्ट्वा भगवान्स्थाणुः पूजयित्वा सरस्वतीम् ।
स्थापयामास तत्तीर्थं स्थाणुतीर्थमिति प्रभो ॥ ००६ ॥

तत्र सर्वे सुराः स्कन्दमभ्यषिञ्चन्नराधिप ।
सेनापत्येन महता सुरारिविनिबर्हणम् ॥ ००७ ॥

तस्मिन्सरस्वतीतीर्थे विश्वामित्रो महामुनिः ।
वसिष्ठं चालयामास तपसोग्रेण तच्छृणु ॥ ००८ ॥

विश्वामित्रवसिष्ठौ तावहन्यहनि भारत ।
स्पर्धां तपःकृतां तीव्रां चक्रतुस्तौ तपोधनौ ॥ ००९ ॥

तत्राप्यधिकसंतापो विश्वामित्रो महामुनिः ।
दृष्ट्वा तेजो वसिष्ठस्य चिन्तामभिजगाम ह ॥ ०१० ॥

तस्य बुद्धिरियं ह्यासीद्धर्मनित्यस्य भारत ॥ ०१० ॥

इयं सरस्वती तूर्णं मत्समीपं तपोधनम् ।
आनयिष्यति वेगेन वसिष्ठं जपतां वरम् ॥ ०११ ॥

इहागतं द्विजश्रेष्ठं हनिष्यामि न संशयः ॥ ०११ ॥

एवं निश्चित्य भगवान्विश्वामित्रो महामुनिः ।
सस्मार सरितां श्रेष्ठां क्रोधसंरक्तलोचनः ॥ ०१२ ॥

सा ध्याता मुनिना तेन व्याकुलत्वं जगाम ह ।
जज्ञे चैनं महावीर्यं महाकोपं च भामिनी ॥ ०१३ ॥

तत एनं वेपमाना विवर्णा प्राञ्जलिस्तदा ।
उपतस्थे मुनिवरं विश्वामित्रं सरस्वती ॥ ०१४ ॥

हतवीरा यथा नारी साभवद्दुःखिता भृशम् ।
ब्रूहि किं करवाणीति प्रोवाच मुनिसत्तमम् ॥ ०१५ ॥

तामुवाच मुनिः क्रुद्धो वसिष्ठं शीघ्रमानय ।
यावदेनं निहन्म्यद्य तच्छ्रुत्वा व्यथिता नदी ॥ ०१६ ॥

साञ्जलिं तु ततः कृत्वा पुण्डरीकनिभेक्षणा ।
विव्यथे सुविरूढेव लता वायुसमीरिता ॥ ०१७ ॥

तथागतां तु तां दृष्ट्वा वेपमानां कृताञ्जलिम् ।
विश्वामित्रोऽब्रवीत्क्रुद्धो वसिष्ठं शीघ्रमानय ॥ ०१८ ॥

ततो भीता सरिच्छ्रेष्ठा चिन्तयामास भारत ।
उभयोः शापयोर्भीता कथमेतद्भविष्यति ॥ ०१९ ॥

साभिगम्य वसिष्ठं तु इममर्थमचोदयत् ।
यदुक्ता सरितां श्रेष्ठा विश्वामित्रेण धीमता ॥ ०२० ॥

उभयोः शापयोर्भीता वेपमाना पुनः पुनः ।
चिन्तयित्वा महाशापमृषिवित्रासिता भृशम् ॥ ०२१ ॥

तां कृशां च विवर्णां च दृष्ट्वा चिन्तासमन्विताम् ।
उवाच राजन्धर्मात्मा वसिष्ठो द्विपदां वरः ॥ ०२२ ॥

त्राह्यात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनी ।
विश्वामित्रः शपेद्धि त्वां मा कृथास्त्वं विचारणाम् ॥ ०२३ ॥

तस्य तद्वचनं श्रुत्वा कृपाशीलस्य सा सरित् ।
चिन्तयामास कौरव्य किं कृतं सुकृतं भवेत् ॥ ०२४ ॥

तस्याश्चिन्ता समुत्पन्ना वसिष्ठो मय्यतीव हि ।
कृतवान्हि दयां नित्यं तस्य कार्यं हितं मया ॥ ०२५ ॥

अथ कूले स्वके राजञ्जपन्तमृषिसत्तमम् ।
जुह्वानं कौशिकं प्रेक्ष्य सरस्वत्यभ्यचिन्तयत् ॥ ०२६ ॥

इदमन्तरमित्येव ततः सा सरितां वरा ।
कूलापहारमकरोत्स्वेन वेगेन सा सरित् ॥ ०२७ ॥

तेन कूलापहारेण मैत्रावरुणिरौह्यत ।
उह्यमानश्च तुष्टाव तदा राजन्सरस्वतीम् ॥ ०२८ ॥

पितामहस्य सरसः प्रवृत्तासि सरस्वति ।
व्याप्तं चेदं जगत्सर्वं तवैवाम्भोभिरुत्तमैः ॥ ०२९ ॥

त्वमेवाकाशगा देवि मेघेषूत्सृजसे पयः ।
सर्वाश्चापस्त्वमेवेति त्वत्तो वयमधीमहे ॥ ०३० ॥

पुष्टिर्द्युतिस्तथा कीर्तिः सिद्धिर्वृद्धिरुमा तथा ।
त्वमेव वाणी स्वाहा त्वं त्वय्यायत्तमिदं जगत् ॥ ०३१ ॥

त्वमेव सर्वभूतेषु वससीह चतुर्विधा ॥ ०३१ ॥

एवं सरस्वती राजन्स्तूयमाना महर्षिणा ।
वेगेनोवाह तं विप्रं विश्वामित्राश्रमं प्रति ॥ ०३२ ॥

न्यवेदयत चाभीक्ष्णं विश्वामित्राय तं मुनिम् ॥ ०३२ ॥

तमानीतं सरस्वत्या दृष्ट्वा कोपसमन्वितः ।
अथान्वेषत्प्रहरणं वसिष्ठान्तकरं तदा ॥ ०३३ ॥

तं तु क्रुद्धमभिप्रेक्ष्य ब्रह्महत्याभयान्नदी ।
अपोवाह वसिष्ठं तु प्राचीं दिशमतन्द्रिता ॥ ०३४ ॥

उभयोः कुर्वती वाक्यं वञ्चयित्वा तु गाधिजम् ॥ ०३४ ॥

ततोऽपवाहितं दृष्ट्वा वसिष्ठमृषिसत्तमम् ।
अब्रवीदथ सङ्क्रुद्धो विश्वामित्रो ह्यमर्षणः ॥ ०३५ ॥

यस्मान्मा त्वं सरिच्छ्रेष्ठे वञ्चयित्वा पुनर्गता ।
शोणितं वह कल्याणि रक्षोग्रामणिसंमतम् ॥ ०३६ ॥

ततः सरस्वती शप्ता विश्वामित्रेण धीमता ।
अवहच्छोणितोन्मिश्रं तोयं संवत्सरं तदा ॥ ०३७ ॥

अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तथा ।

सरस्वतीं तथा दृष्ट्वा बभूवुर्भृशदुःखिताः ॥ ०३८ ॥

एवं वसिष्ठापवाहो लोके ख्यातो जनाधिप ।
आगच्छच्च पुनर्मार्गं स्वमेव सरितां वरा ॥ ०३९ ॥

---

# अध्याय ०४२

वैशंपायन उवाच ॥

सा शप्ता तेन क्रुद्धेन विश्वामित्रेण धीमता ।
तस्मिंस्तीर्थवरे शुभ्रे शोणितं समुपावहत् ॥ ००१ ॥

अथाजग्मुस्ततो राजन्राक्षसास्तत्र भारत ।
तत्र ते शोणितं सर्वे पिबन्तः सुखमासते ॥ ००२ ॥

तृप्ताश्च सुभृशं तेन सुखिता विगतज्वराः ।
नृत्यन्तश्च हसन्तश्च यथा स्वर्गजितस्तथा ॥ ००३ ॥

कस्यचित्त्वथ कालस्य ऋषयः सतपोधनाः ।
तीर्थयात्रां समाजग्मुः सरस्वत्यां महीपते ॥ ००४ ॥

तेषु सर्वेषु तीर्थेषु आप्लुत्य मुनिपुङ्गवाः ।
प्राप्य प्रीतिं परां चापि तपोलुब्धा विशारदाः ॥ ००५ ॥

प्रययुर्हि ततो राजन्येन तीर्थं हि तत्तथा ॥ ००५ ॥

अथागम्य महाभागास्तत्तीर्थं दारुणं तदा ।

दृष्ट्वा तोयं सरस्वत्याः शोणितेन परिप्लुतम्  ॥ ००६  ॥

पीयमानं च रक्षोभिर्बहुभिर्नृपसत्तम  ॥ ००६  ॥

तान्दृष्ट्वा राक्षसान्राजन्मुनयः संशितव्रताः ।
परित्राणे सरस्वत्याः परं यत्नं प्रचक्रिरे  ॥ ००७  ॥

ते तु सर्वे महाभागाः समागम्य महाव्रताः ।
आहूय सरितां श्रेष्ठामिदं वचनमब्रुवन्  ॥ ००८  ॥

कारणं ब्रूहि कल्याणि किमर्थं ते ह्रदो ह्ययम् ।
एवमाकुलतां यातः श्रुत्वा पास्यामहे वयम्  ॥ ००९  ॥

ततः सा सर्वमाचष्ट यथावृत्तं प्रवेपती ।
दुःखितामथ तां दृष्ट्वा त ऊचुर्वै तपोधनाः  ॥ ०१०  ॥

कारणं श्रुतमस्माभिः शापश्चैव श्रुतोऽनघे ।
करिष्यन्ति तु यत्प्राप्तं सर्व एव तपोधनाः  ॥ ०११  ॥

एवमुक्त्वा सरिच्छ्रेष्ठामूचुस्तेऽथ परस्परम् ।
विमोचयामहे सर्वे शापादेतां सरस्वतीम्  ॥ ०१२  ॥

तेषां तु वचनादेव प्रकृतिस्था सरस्वती ।
प्रसन्नसलिला जज्ञे यथा पूर्वं तथैव हि  ॥ ०१३  ॥

विमुक्ता च सरिच्छ्रेष्ठा विबभौ सा यथा पुरा  ॥ ०१३  ॥

दृष्ट्वा तोयं सरस्वत्या मुनिभिस्तैस्तथा कृतम् ।
कृताञ्जलीस्ततो राजन्राक्षसाः क्षुधयार्दिताः  ॥ ०१४  ॥

ऊचुस्तान्वै मुनीन्सर्वान्कृपायुक्तान्पुनः पुनः  ॥ ०१४  ॥

वयं हि क्षुधिताश्चैव धर्माद्धीनाश्च शाश्वतात् ।
न च नः कामकारोऽयं यद्वयं पापकारिणः ॥ ०१५ ॥

युष्माकं चाप्रसादेन दुष्कृतेन च कर्मणा ।
पक्षोऽयं वर्धतेऽस्माकं यतः स्म ब्रह्मराक्षसाः ॥ ०१६ ॥

एवं हि वैश्यशूद्राणां क्षत्रियाणां तथैव च ।
ये ब्राह्मणान्प्रद्विषन्ति ते भवन्तीह राक्षसाः ॥ ०१७ ॥

आचार्यमृत्विजं चैव गुरुं वृद्धजनं तथा ।
प्राणिनो येऽवमन्यन्ते ते भवन्तीह राक्षसाः ॥ ०१८ ॥

योषितां चैव पापानां योनिदोषेण वर्धते ॥ ०१८ ॥

तत्कुरुध्वमिहास्माकं कारुण्यं द्विजसत्तमाः ।
शक्ता भवन्तः सर्वेषां लोकानामपि तारणे ॥ ०१९ ॥

तेषां ते मुनयः श्रुत्वा तुष्टुवुस्तां महानदीम् ।
मोक्षार्थं रक्षसां तेषामूचुः प्रयतमानसाः ॥ ०२० ॥

क्षुतकीटावपन्नं च यच्चोच्छिष्टाशितं भवेत् ।
केशावपन्नमाधूतमारुग्णमपि यद्भवेत् ॥ ०२१ ॥

श्वभिः संस्पृष्टमन्नं च भागोऽसौ रक्षसामिह ॥ ०२१ ॥

तस्माज्ज्ञात्वा सदा विद्वानेतान्यन्नानि वर्जयेत् ।
राक्षसान्नमसौ भुङ्क्ते यो भुङ्क्ते ह्यन्नमीदृशम् ॥ ०२२ ॥

शोधयित्वा ततस्तीर्थमृषयस्ते तपोधनाः ।
मोक्षार्थं राक्षसानां च नदीं तां प्रत्यचोदयन् ॥ ०२३ ॥

महर्षीणां मतं ज्ञात्वा ततः सा सरितां वरा ।
अरुणामानयामास स्वां तनुं पुरुषर्षभ ॥ ०२४ ॥

तस्यां ते राक्षसाः स्नात्वा तनूस्त्यक्त्वा दिवं गताः ।
अरुणायां महाराज ब्रह्महत्यापहा हि सा ॥ ०२५ ॥

एतमर्थमभिज्ञाय देवराजः शतक्रतुः ।
तस्मिंस्तीर्थवरे स्नात्वा विमुक्तः पाप्मना किल ॥ ०२६ ॥

जनमेजय उवाच ॥

किमर्थं भगवाञ्शक्रो ब्रह्महत्यामवाप्तवान् ।
कथमस्मिंश्च तीर्थे वै आप्लुत्याकल्मषोऽभवत् ॥ ०२७ ॥

वैशंपायन उवाच ॥

शृणुष्वैतदुपाख्यानं यथावृत्तं जनेश्वर ।
यथा बिभेद समयं नमुचेर्वासवः पुरा ॥ ०२८ ॥

नमुचिर्वासवाद्भीतः सूर्यरश्मिं समाविशत् ।
तेनेन्द्रः सख्यमकरोत्समयं चेदमब्रवीत् ॥ ०२९ ॥

नार्द्रेण त्वा न शुष्केण न रात्रौ नापि वाहनि ।
वधिष्याम्यसुरश्रेष्ठ सखे सत्येन ते शपे ॥ ०३० ॥

एवं स कृत्वा समयं सृष्ट्वा नीहारमीश्वरः ।
चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः ॥ ०३१ ॥

तच्छिरो नमुचेश्छिन्नं पृष्ठतः शक्रमन्वयात् ।
हे मित्रहन्पाप इति ब्रुवाणं शक्रमन्तिकात् ॥ ०३२ ॥

एवं स शिरसा तेन चोद्यमानः पुनः पुनः ।
पितामहाय संतप्त एवमर्थं न्यवेदयत् ॥ ०३३ ॥

तमब्रवील्लोकगुरुररुणायां यथाविधि ।
इष्ट्वोपस्पृश देवेन्द्र ब्रह्महत्यापहा हि सा ॥ ०३४ ॥

इत्युक्तः स सरस्वत्याः कुञ्जे वै जनमेजय ।
इष्ट्वा यथावद्बलभिदरुणायामुपास्पृशत् ॥ ०३५ ॥

स मुक्तः पाप्मना तेन ब्रह्महत्याकृतेन ह ।
जगाम संहृष्टमनास्त्रिदिवं त्रिदशेश्वरः ॥ ०३६ ॥

शिरस्तच्चापि नमुचेस्तत्रैवाप्लुत्य भारत ।
लोकान्कामदुघान्प्राप्तमक्षयान्राजसत्तम ॥ ०३७ ॥

तत्राप्युपस्पृश्य बलो महात्मा ; दत्त्वा च दानानि पृथग्विधानि ।
अवाप्य धर्मं परमार्यकर्मा ; जगाम सोमस्य महत्स तीर्थम् ॥ ०३८ ॥

यत्रायजद्राजसूयेन सोमः ; साक्षात्पुरा विधिवत्पार्थिवेन्द्र ।
अत्रिर्धीमान्विप्रमुख्यो बभूव ; होता यस्मिन्क्रतुमुख्ये महात्मा ॥ ०३९ ॥

यस्यान्तेऽभूत्सुमहान्दानवानां ; दैतेयानां राक्षसानां च देवैः ।
स सङ्ग्रामस्तारकाख्यः सुतीव्रो ; यत्र स्कन्दस्तारकाख्यं जघान ॥ ०४० ॥

सेनापत्यं लब्धवान्देवतानां ; महासेनो यत्र दैत्यान्तकर्ता ।
साक्षाच्चात्र न्यवसत्कार्त्तिकेयः ; सदा कुमारो यत्र स प्लक्षराजः ॥ ०४१ ॥

# स्कन्दाभिषेकः

## अध्याय ०४३

जनमेजय उवाच ॥

सरस्वत्याः प्रभावोऽयमुक्तस्ते द्विजसत्तम ।
कुमारस्याभिषेकं तु ब्रह्मन्व्याख्यातुमर्हसि ॥ ००१ ॥

यस्मिन्काले च देशे च यथा च वदतां वर ।
यैश्चाभिषिक्तो भगवान्विधिना येन च प्रभुः ॥ ००२ ॥

स्कन्दो यथा च दैत्यानामकरोत्कदनं महत् ।
तथा मे सर्वमाचक्ष्व परं कौतूहलं हि मे ॥ ००३ ॥

वैशंपायन उवाच ॥

कुरुवंशस्य सदृशमिदं कौतूहलं तव ।
हर्षमुत्पादयत्येतद्वचो मे जनमेजय ॥ ००४ ॥

हन्त ते कथयिष्यामि शृण्वानस्य जनाधिप ।
अभिषेकं कुमारस्य प्रभावं च महात्मनः ॥ ००५ ॥

तेजो माहेश्वरं स्कन्नमग्नौ प्रपतितं पुरा ।
तत्सर्वभक्षो भगवान्नाशकद्दग्धुमक्षयम् ॥ ००६ ॥

तेनासीदति तेजस्वी दीप्तिमान्हव्यवाहनः ।
न चैव धारयामास गर्भं तेजोमयं तदा ॥ ००७ ॥

स गङ्गामभिसङ्गम्य नियोगाद्ब्रह्मणः प्रभुः ।
गर्भमाहितवान्दिव्यं भास्करोपमतेजसम् ॥ ००८ ॥

अथ गङ्गापि तं गर्भमसहन्ती विधारणे ।
उत्ससर्ज गिरौ रम्ये हिमवत्यमरार्चिते ॥ ००९ ॥

स तत्र ववृधे लोकानावृत्य ज्वलनात्मजः ।
ददृशुर्ज्वलनाकारं तं गर्भमथ कृत्तिकाः ॥ ०१० ॥

शरस्तम्बे महात्मानमनलात्मजमीश्वरम् ।
ममायमिति ताः सर्वाः पुत्रार्थिन्योऽभिचक्रमुः ॥ ०११ ॥

तासां विदित्वा भावं तं मातॄणां भगवान्प्रभुः ।
प्रस्नुतानां पयः षड्भिर्वदनैरपिबत्तदा ॥ ०१२ ॥

तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः ।
परं विस्मयमापन्ना देव्यो दिव्यवपुर्धराः ॥ ०१३ ॥

यत्रोत्सृष्टः स भगवान्गङ्गया गिरिमूर्धनि ।
स शैलः काञ्चनः सर्वः संबभौ कुरुसत्तम ॥ ०१४ ॥

वर्धता चैव गर्भेण पृथिवी तेन रञ्जिता ।
अतश्च सर्वे संवृत्ता गिरयः काञ्चनाकराः ॥ ०१५ ॥

कुमारश्च महावीर्यः कार्त्तिकेय इति स्मृतः ।
गाङ्गेयः पूर्वमभवन्महायोगबलान्वितः ॥ ०१६ ॥

स देवस्तपसा चैव वीर्येण च समन्वितः ।
ववृधेऽतीव राजेन्द्र चन्द्रवत्प्रियदर्शनः ॥ ०१७ ॥

स तस्मिन्काञ्चने दिव्ये शरस्तम्बे श्रिया वृतः ।
स्तूयमानस्तदा शेते गन्धर्वैर्मुनिभिस्तथा ॥ ०१८ ॥

तथैनमन्वनृत्यन्त देवकन्याः सहस्रशः ।
दिव्यवादित्रनृत्तज्ञाः स्तुवन्त्यश्चारुदर्शनाः ॥ ०१९ ॥

अन्वास्ते च नदी देवं गङ्गा वै सरितां वरा ।
दधार पृथिवी चैनं बिभ्रती रूपमुत्तमम् ॥ ०२० ॥

जातकर्मादिकास्तस्य क्रियाश्चक्रे बृहस्पतिः ।
वेदश्चैनं चतुर्मूर्तिरुपतस्थे कृताञ्जलिः ॥ ०२१ ॥

धनुर्वेदश्चतुष्पादः शस्त्रग्रामः ससङ्ग्रहः ।
तत्रैनं समुपातिष्ठत्साक्षाद्वाणी च केवला ॥ ०२२ ॥

स ददर्श महावीर्यं देवदेवमुमापतिम् ।
शैलपुत्र्या सहासीनं भूतसंघशतैर्वृतम् ॥ ०२३ ॥

निकाया भूतसंघानां परमाद्भुतदर्शनाः ।
विकृता विकृताकारा विकृताभरणध्वजाः ॥ ०२४ ॥

व्याघ्रसिंहर्क्षवदना बिडालमकराननाः ।
वृषदंशमुखाश्चान्ये गजोष्ट्रवदनास्तथा ॥ ०२५ ॥

उलूकवदनाः केचिद्गृध्रगोमायुदर्शनाः ।
क्रौञ्चपारावतनिभैर्वदनै राङ्कवैरपि ॥ ०२६ ॥

श्वाविच्छल्यकगोधानां खरैडकगवां तथा ।
सदृशानि वपूंष्यन्ये तत्र तत्र व्यधारयन् ॥ ०२७ ॥

केचिच्छैलाम्बुदप्रख्याश्चक्रालातगदायुधाः ।
केचिदञ्जनपुञ्जाभाः केचिच्छ्वेताचलप्रभाः ॥ ०२८ ॥

सप्तमातृगणाश्चैव समाजग्मुर्विशां पते ।

साध्या विश्वेऽथ मरुतो वसवः पितरस्तथा ॥ ०२९ ॥

रुद्रादित्यास्तथा सिद्धा भुजगा दानवाः खगाः ।
ब्रह्मा स्वयंभूर्भगवान्सपुत्रः सह विष्णुना ॥ ०३० ॥

शक्रस्तथाभ्ययाद्द्रष्टुं कुमारवरमच्युतम् ।
नारदप्रमुखाश्चापि देवगन्धर्वसत्तमाः ॥ ०३१ ॥

देवर्षयश्च सिद्धाश्च बृहस्पतिपुरोगमाः ।
ऋभवो नाम वरदा देवानामपि देवताः ॥ ०३२ ॥

तेऽपि तत्र समाजग्मुर्यामा धामाश्च सर्वशः ॥ ०३२ ॥

स तु बालोऽपि भगवान्महायोगबलान्वितः ।
अभ्याजगाम देवेशं शूलहस्तं पिनाकिनम् ॥ ०३३ ॥

तमाव्रजन्तमालक्ष्य शिवस्यासीन्मनोगतम् ।
युगपच्छैलपुत्र्याश्च गङ्गायाः पावकस्य च ॥ ०३४ ॥

किं नु पूर्वमयं बालो गौरवादभ्युपैष्यति ।
अपि मामिति सर्वेषां तेषामासीन्मनोगतम् ॥ ०३५ ॥

तेषामेतमभिप्रायं चतुर्णामुपलक्ष्य सः ।
युगपद्योगमास्थाय ससर्ज विविधास्तनूः ॥ ०३६ ॥

ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान्प्रभुः ।
स्कन्दः शाखो विशाखश्च नैगमेषश्च पृष्ठतः ॥ ०३७ ॥

एवं स कृत्वा ह्यात्मानं चतुर्धा भगवान्प्रभुः ।
यतो रुद्रस्ततः स्कन्दो जगामाद्भुतदर्शनः ॥ ०३८ ॥

विशाखस्तु ययौ येन देवी गिरिवरात्मजा ।
शाखो ययौ च भगवान्वायुमूर्तिर्विभावसुम् ॥ ०३९ ॥

नैगमेषोऽगमद्गङ्गां कुमारः पावकप्रभः ॥ ०३९ ॥

सर्वे भास्वरदेहास्ते चत्वारः समरूपिणः ।
तान्समभ्ययुरव्यग्रास्तदद्भुतमिवाभवत् ॥ ०४० ॥

हाहाकारो महानासीद्देवदानवरक्षसाम् ।
तद्दृष्ट्वा महदाश्चर्यमद्भुतं रोमहर्षणम् ॥ ०४१ ॥

ततो रुद्रश्च देवी च पावकश्च पितामहम् ।
गङ्गया सहिताः सर्वे प्रणिपेतुर्जगत्पतिम् ॥ ०४२ ॥

प्रणिपत्य ततस्ते तु विधिवद्राजपुङ्गव ।
इदमूचुर्वचो राजन्कार्त्तिकेयप्रियेप्सया ॥ ०४३ ॥

अस्य बालस्य भगवन्नाधिपत्यं यथेप्सितम् ।
अस्मत्प्रियार्थं देवेश सदृशं दातुमर्हसि ॥ ०४४ ॥

ततः स भगवान्धीमान्सर्वलोकपितामहः ।
मनसा चिन्तयामास किमयं लभतामिति ॥ ०४५ ॥

ऐश्वर्याणि हि सर्वाणि देवगन्धर्वरक्षसाम् ।
भूतयक्षविहङ्गानां पन्नगानां च सर्वशः ॥ ०४६ ॥

पूर्वमेवादिदेशासौ निकायेषु महात्मनाम् ।
समर्थं च तमैश्वर्ये महामतिरमन्यत ॥ ०४७ ॥

ततो मुहूर्तं स ध्यात्वा देवानां श्रेयसि स्थितः ।
सेनापत्यं ददौ तस्मै सर्वभूतेषु भारत ॥ ०४८ ॥

सर्वदेवनिकायानां ये राजानः परिश्रुताः ।
तान्सर्वान्व्यादिदेशास्मै सर्वभूतपितामहः ॥ ०४९ ॥

ततः कुमारमादाय देवा ब्रह्मपुरोगमाः ।
अभिषेकार्थमाजग्मुः शैलेन्द्रं सहितास्ततः ॥ ०५० ॥

पुण्यां हैमवतीं देवीं सरिच्छ्रेष्ठां सरस्वतीम् ।
समन्तपञ्चके या वै त्रिषु लोकेषु विश्रुता ॥ ०५१ ॥

तत्र तीरे सरस्वत्याः पुण्ये सर्वगुणान्विते ।
निषेदुर्देवगन्धर्वाः सर्वे संपूर्णमानसाः ॥ ०५२ ॥

---

# अध्याय ०४४

वैशंपायन उवाच ॥

ततोऽभिषेकसंभारान्सर्वान्संभृत्य शास्त्रतः ।
बृहस्पतिः समिद्धेऽग्नौ जुहावाज्यं यथाविधि ॥ ००१ ॥

ततो हिमवता दत्ते मणिप्रवरशोभिते ।
दिव्यरत्नाचिते दिव्ये निषण्णः परमासने ॥ ००२ ॥

सर्वमङ्गलसंभारैर्विधिमन्त्रपुरस्कृतम् ।
आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥ ००३ ॥

इन्द्राविष्णू महावीर्यौ सूर्याचन्द्रमसौ तथा ।

धाता चैव विधाता च तथा चैवानिलानलौ ॥ ००४ ॥

पूष्णा भगेनार्यम्णा च अंशेन च विवस्वता ।
रुद्रश्च सहितो धीमान्मित्रेण वरुणेन च ॥ ००५ ॥

रुद्रैर्वसुभिरादित्यैरश्विभ्यां च वृतः प्रभुः ।
विश्वेदेवैर्मरुद्भिश्च साध्यैश्च पितृभिः सह ॥ ००६ ॥

गन्धर्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः ।
देवर्षिभिरसंख्येयैस्तथा ब्रह्मर्षिभिर्वरैः ॥ ००७ ॥

वैखानसैर्वालखिल्यैर्वाय्वाहारैर्मरीचिपैः ।
भृगुभिश्चाङ्गिरोभिश्च यतिभिश्च महात्मभिः ॥ ००८ ॥

सर्वैर्विद्याधरैः पुण्यैर्योगसिद्धैस्तथा वृतः ॥ ००८ ॥

पितामहः पुलस्त्यश्च पुलहश्च महातपाः ।
अङ्गिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च ॥ ००९ ॥

क्रतुर्हरः प्रचेताश्च मनुर्दक्षस्तथैव च ।
ऋतवश्च ग्रहाश्चैव ज्योतींषि च विशां पते ॥ ०१० ॥

मूर्तिमत्यश्च सरितो वेदाश्चैव सनातनाः ।
समुद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च ॥ ०११ ॥

पृथिवी द्यौर्दिशश्चैव पादपाश्च जनाधिप ॥ ०११ ॥

अदितिर्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती ।
उमा शची सिनीवाली तथा चानुमतिः कुहूः ॥ ०१२ ॥

राका च धिषणा चैव पत्न्यश्चान्या दिवौकसाम् ॥ ०१२ ॥

हिमवांश्चैव विन्ध्यश्च मेरुश्चानेकशृङ्गवान् ।
ऐरावतः सानुचरः कलाः काष्ठास्तथैव च ॥ ०१३ ॥

मासार्धमासा ऋतवस्तथा रात्र्यहनी नृप ॥ ०१३ ॥

उच्चैःश्रवा हयश्रेष्ठो नागराजश्च वामनः ।
अरुणो गरुडश्चैव वृक्षाश्चौषधिभिः सह ॥ ०१४ ॥

धर्मश्च भगवान्देवः समाजग्मुर्हि सङ्गताः ।
कालो यमश्च मृत्युश्च यमस्यानुचराश्च ये ॥ ०१५ ॥

बहुलत्वाच्च नोक्ता ये विविधा देवतागणाः ।
ते कुमाराभिषेकार्थं समाजग्मुस्ततस्ततः ॥ ०१६ ॥

जगृहुस्ते तदा राजन्सर्व एव दिवौकसः ।
आभिषेचनिकं भाण्डं मङ्गलानि च सर्वशः ॥ ०१७ ॥

दिव्यसंभारसंयुक्तैः कलशैः काञ्चनैर्नृप ।
सरस्वतीभिः पुण्याभिर्दिव्यतोयाभिरेव तु ॥ ०१८ ॥

अभ्यषिञ्चन्कुमारं वै संप्रहृष्टा दिवौकसः ।
सेनापतिं महात्मानमसुराणां भयावहम् ॥ ०१९ ॥

पुरा यथा महाराज वरुणं वै जलेश्वरम् ।
तथाभ्यषिञ्चद्भगवान्ब्रह्मा लोकपितामहः ॥ ०२० ॥

कश्यपश्च महातेजा ये चान्ये नानुकीर्तिताः ॥ ०२० ॥

तस्मै ब्रह्मा ददौ प्रीतो बलिनो वातरंहसः ।
कामवीर्यधरान्सिद्धान्महापारिषदान्प्रभुः ॥ ०२१ ॥

नन्दिषेणं लोहिताक्षं घण्टाकर्णं च संमतम् ।
चतुर्थमस्यानुचरं ख्यातं कुमुदमालिनम्  ॥ ०२२  ॥

ततः स्थाणुं महावेगं महापारिषदं क्रतुम् ।
मायाशतधरं कामं कामवीर्यबलान्वितम्  ॥ ०२३  ॥

ददौ स्कन्दाय राजेन्द्र सुरारिविनिबर्हणम्  ॥ ०२३  ॥

स हि देवासुरे युद्धे दैत्यानां भीमकर्मणाम् ।
जघान दोर्भ्यां सङ्क्रुद्धः प्रयुतानि चतुर्दश  ॥ ०२४  ॥

तथा देवा ददुस्तस्मै सेनां नैर्ऋतसङ्कुलाम् ।
देवशत्रुक्षयकरीमजय्यां विश्वरूपिणीम्  ॥ ०२५  ॥

जयशब्दं ततश्चक्रुर्देवाः सर्वे सवासवाः ।
गन्धर्वयक्षरक्षांसि मुनयः पितरस्तथा  ॥ ०२६  ॥

यमः प्रादादनुचरौ यमकालोपमावुभौ ।
उन्माथं च प्रमाथं च महावीर्यौ महाद्युती  ॥ ०२७  ॥

सुभ्राजो भास्करश्चैव यौ तौ सूर्यानुयायिनौ ।
तौ सूर्यः कार्त्तिकेयाय ददौ प्रीतः प्रतापवान्  ॥ ०२८  ॥

कैलासशृङ्गसङ्काशौ श्वेतमाल्यानुलेपनौ ।
सोमोऽप्यनुचरौ प्रादान्मणिं सुमणिमेव च  ॥ ०२९  ॥

ज्वालाजिह्वं तथा ज्योतिरात्मजाय हुताशनः ।
ददावनुचरौ शूरौ परसैन्यप्रमाथिनौ  ॥ ०३०  ॥

परिघं च वटं चैव भीमं च सुमहाबलम् ।

दहतिं दहनं चैव प्रचण्डौ वीर्यसंमतौ ॥ ०३१ ॥

अंशोऽप्यनुचरान्पञ्च ददौ स्कन्दाय धीमते ॥ ०३१ ॥

उत्क्रोशं पङ्कजं चैव वज्रदण्डधरावुभौ ।
ददावनलपुत्राय वासवः परवीरहा ॥ ०३२ ॥

तौ हि शत्रून्महेन्द्रस्य जघ्नतुः समरे बहून् ॥ ०३२ ॥

चक्रं विक्रमकं चैव सङ्क्रमं च महाबलम् ।
स्कन्दाय त्रीननुचरान्ददौ विष्णुर्महायशाः ॥ ०३३ ॥

वर्धनं नन्दनं चैव सर्वविद्याविशारदौ ।
स्कन्दाय ददतुः प्रीतावश्विनौ भरतर्षभ ॥ ०३४ ॥

कुन्दनं कुसुमं चैव कुमुदं च महायशाः ।
डम्बराडम्बरौ चैव ददौ धाता महात्मने ॥ ०३५ ॥

वक्रानुवक्रौ बलिनौ मेषवक्रौ बलोत्कटौ ।
ददौ त्वष्टा महामायौ स्कन्दायानुचरौ वरौ ॥ ०३६ ॥

सुव्रतं सत्यसंधं च ददौ मित्रो महात्मने ।
कुमाराय महात्मानौ तपोविद्याधरौ प्रभुः ॥ ०३७ ॥

सुदर्शनीयौ वरदौ त्रिषु लोकेषु विश्रुतौ ।
सुप्रभं च महात्मानं शुभकर्माणमेव च ॥ ०३८ ॥

कार्त्तिकेयाय संप्रादाद्विधाता लोकविश्रुतौ ॥ ०३८ ॥

पालितकं कालिकं च महामायाविनावुभौ ।
पूषा च पार्षदौ प्रादात्कार्त्तिकेयाय भारत ॥ ०३९ ॥

बलं चातिबलं चैव महावक्रौ महाबलौ ।
प्रददौ कार्त्तिकेयाय वायुर्भरतसत्तम  ॥ ०४० ॥

घसं चातिघसं चैव तिमिवक्रौ महाबलौ ।
प्रददौ कार्त्तिकेयाय वरुणः सत्यसङ्गरः  ॥ ०४१ ॥

सुवर्चसं महात्मानं तथैवाप्यतिवर्चसम् ।
हिमवान्प्रददौ राजन्हुताशनसुताय वै  ॥ ०४२ ॥

काञ्चनं च महात्मानं मेघमालिनमेव च ।
ददावनुचरौ मेरुरग्निपुत्राय भारत  ॥ ०४३ ॥

स्थिरं चातिस्थिरं चैव मेरुरेवापरौ ददौ ।
महात्मनेऽग्निपुत्राय महाबलपराक्रमौ  ॥ ०४४ ॥

उच्छ्रितं चातिशृङ्गं च महापाषाणयोधिनौ ।
प्रददावग्निपुत्राय विन्ध्यः पारिषदावुभौ  ॥ ०४५ ॥

सङ्ग्रहं विग्रहं चैव समुद्रोऽपि गदाधरौ ।
प्रददावग्निपुत्राय महापारिषदावुभौ  ॥ ०४६ ॥

उन्मादं पुष्पदन्तं च शङ्कुकर्णं तथैव च ।
प्रददावग्निपुत्राय पार्वती शुभदर्शना  ॥ ०४७ ॥

जयं महाजयं चैव नागौ ज्वलनसूनवे ।
प्रददौ पुरुषव्याघ्र वासुकिः पन्नगेश्वरः  ॥ ०४८ ॥

एवं साध्याश्च रुद्राश्च वसवः पितरस्तथा ।
सागराः सरितश्चैव गिरयश्च महाबलाः  ॥ ०४९ ॥

ददुः सेनागणाध्यक्षाञ्शूलपट्टिशधारिणः ।
दिव्यप्रहरणोपेतान्नानावेषविभूषितान् ॥ ०५० ॥

शृणु नामानि चान्येषां येऽन्ये स्कन्दस्य सैनिकाः ।
विविधायुधसंपन्नाश्चित्राभरणवर्मिणः ॥ ०५१ ॥

शङ्कुकर्णो निकुम्भश्च पद्मः कुमुद एव च ।
अनन्तो द्वादशभुजस्तथा कृष्णोपकृष्णकौ ॥ ०५२ ॥

द्रोणश्रवाः कपिस्कन्धः काञ्चनाक्षो जलंधमः ।
अक्षसंतर्जनो राजन्कुनदीकस्तमोभ्रकृत् ॥ ०५३ ॥

एकाक्षो द्वादशाक्षश्च तथैवैकजटः प्रभुः ।
सहस्रबाहुर्विकटो व्याघ्राक्षः क्षितिकम्पनः ॥ ०५४ ॥

पुण्यनामा सुनामा च सुवक्रः प्रियदर्शनः ।
परिश्रुतः कोकनदः प्रियमाल्यानुलेपनः ॥ ०५५ ॥

अजोदरो गजशिराः स्कन्धाक्षः शतलोचनः ।
ज्वालाजिह्वः करालश्च सितकेशो जटी हरिः ॥ ०५६ ॥

चतुर्दंष्ट्रोऽष्टजिह्वश्च मेघनादः पृथुश्रवाः ।
विद्युदक्षो धनुर्वक्रो जठरो मारुताशनः ॥ ०५७ ॥

उदराक्षो झषाक्षश्च वज्रनाभो वसुप्रभः ।
समुद्रवेगो राजेन्द्र शैलकम्पी तथैव च ॥ ०५८ ॥

पुत्रमेषः प्रवाहश्च तथा नन्दोपनन्दकौ ।
धूम्रः श्वेतः कलिङ्गश्च सिद्धार्थो वरदस्तथा ॥ ०५९ ॥

प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतापवान् ।

आनन्दश्च प्रमोदश्च स्वस्तिको ध्रुवकस्तथा ॥ ०६० ॥

क्षेमवापः सुजातश्च सिद्धयात्रश्च भारत ।
गोव्रजः कनकापीडो महापारिषदेश्वरः ॥ ०६१ ॥

गायनो हसनश्चैव बाणः खड्गश्च वीर्यवान् ।
वैताली चातिताली च तथा कतिकवातिकौ ॥ ०६२ ॥

हंसजः पङ्कदिग्धाङ्गः समुद्रोन्मादनश्च ह ।
रणोत्कटः प्रहासश्च श्वेतशीर्षश्च नन्दकः ॥ ०६३ ॥

कालकण्ठः प्रभासश्च तथा कुम्भाण्डकोऽपरः ।
कालकाक्षः सितश्चैव भूतलोन्मथनस्तथा ॥ ०६४ ॥

यज्ञवाहः प्रवाहश्च देवयाजी च सोमपः ।
सजालश्च महातेजाः क्रथक्राथौ च भारत ॥ ०६५ ॥

तुहनश्च तुहानश्च चित्रदेवश्च वीर्यवान् ।
मधुरः सुप्रसादश्च किरीटी च महाबलः ॥ ०६६ ॥

वसनो मधुवर्णश्च कलशोदर एव च ।
धमन्तो मन्मथकरः सूचीवक्त्रश्च वीर्यवान् ॥ ०६७ ॥

श्वेतवक्त्रः सुवक्त्रश्च चारुवक्त्रश्च पाण्डुरः ।
दण्डबाहुः सुबाहुश्च रजः कोकिलकस्तथा ॥ ०६८ ॥

अचलः कनकाक्षश्च बालानामयिकः प्रभुः ।
सञ्चारकः कोकनदो गृध्रवक्त्रश्च जम्बुकः ॥ ०६९ ॥

लोहाशवक्त्रो जठरः कुम्भवक्त्रश्च कुण्डकः ।
मद्गुग्रीवश्च कृष्णौजा हंसवक्त्रश्च चन्द्रभाः ॥ ०७० ॥

पाणिकूर्मा च शम्बूकः पञ्चवक्त्रश्च शिक्षकः ।
चाषवक्त्रश्च जम्बूकः शाकवक्त्रश्च कुण्डकः ॥ ०७१ ॥

योगयुक्ता महात्मानः सततं ब्राह्मणप्रियाः ।
पैतामहा महात्मानो महापारिषदाश्च ह ॥ ०७२ ॥

यौवनस्थाश्च बालाश्च वृद्धाश्च जनमेजय ॥ ०७२ ॥

सहस्रशः पारिषदाः कुमारमुपतस्थिरे ।
वक्त्रैर्नानाविधैर्ये तु शृणु ताञ्जनमेजय ॥ ०७३ ॥

कूर्मकुक्कुटवक्त्राश्च शशोलूकमुखास्तथा ।
खरोष्ट्रवदनाश्चैव वराहवदनास्तथा ॥ ०७४ ॥

मनुष्यमेषवक्त्राश्च सृगालवदनास्तथा ।
भीमा मकरवक्त्राश्च शिंशुमारमुखास्तथा ॥ ०७५ ॥

मार्जारशशवक्त्राश्च दीर्घवक्त्राश्च भारत ।
नकुलोलूकवक्त्राश्च श्ववक्त्राश्च तथापरे ॥ ०७६ ॥

आखुबभ्रुकवक्त्राश्च मयूरवदनास्तथा ।
मत्स्यमेषाननाश्चान्ये अजाविमहिषाननाः ॥ ०७७ ॥

ऋक्षशार्दूलवक्त्राश्च द्वीपिसिंहाननास्तथा ।
भीमा गजाननाश्चैव तथा नक्रमुखाः परे ॥ ०७८ ॥

गरुडाननाः खड्गमुखा वृककाकमुखास्तथा ।
गोखरोष्ट्रमुखाश्चान्ये वृषदंशमुखास्तथा ॥ ०७९ ॥

महाजठरपादाङ्गास्तारकाक्षाश्च भारत ।

पारावतमुखाश्चान्ये तथा वृषमुखाः परे ॥ ०८० ॥

कोकिलावदनाश्चान्ये श्येनतित्तिरिकाननाः ।
कृकलासमुखाश्चैव विरजोम्बरधारिणः ॥ ०८१ ॥

व्यालवक्त्राः शूलमुखाश्चण्डवक्त्राः शताननाः ।
आशीविषाश्चीरधरा गोनासावरणास्तथा ॥ ०८२ ॥

स्थूलोदराः कृशाङ्गाश्च स्थूलाङ्गाश्च कृशोदराः ।
ह्रस्वग्रीवा महाकर्णा नानाव्यालविभूषिताः ॥ ०८३ ॥

गजेन्द्रचर्मवसनास्तथा कृष्णाजिनाम्बराः ।
स्कन्धेमुखा महाराज तथा ह्युदरतोमुखाः ॥ ०८४ ॥

पृष्ठेमुखा हनुमुखास्तथा जङ्घामुखा अपि ।
पार्श्वाननाश्च बहवो नानादेशमुखास्तथा ॥ ०८५ ॥

तथा कीटपतङ्गानां सदृशास्या गणेश्वराः ।
नानाव्यालमुखाश्चान्ये बहुबाहुशिरोधराः ॥ ०८६ ॥

नानावृक्षभुजाः केचित्कटिशीर्षास्तथापरे ।
भुजङ्गभोगवदना नानागुल्मनिवासिनः ॥ ०८७ ॥

चीरसंवृतगात्राश्च तथा फलकवाससः ।
नानावेषधराश्चैव चर्मवासस एव च ॥ ०८८ ॥

उष्णीषिणो मुकुटिनः कम्बुग्रीवाः सुवर्चसः ।
किरीटिनः पञ्चशिखास्तथा कठिनमूर्धजाः ॥ ०८९ ॥

त्रिशिखा द्विशिखाश्चैव तथा सप्तशिखाः परे ।
शिखण्डिनो मुकुटिनो मुण्डाश्च जटिलास्तथा ॥ ०९० ॥

चित्रमाल्यधराः केचित्केचिद्रोमाननास्तथा ।
दिव्यमाल्याम्बरधराः सततं प्रियविग्रहाः ॥ ०९१ ॥

कृष्णा निर्मांसवक्त्राश्च दीर्घपृष्ठा निरूदराः ।
स्थूलपृष्ठा ह्रस्वपृष्ठाः प्रलम्बोदरमेहनाः ॥ ०९२ ॥

महाभुजा ह्रस्वभुजा ह्रस्वगात्राश्च वामनाः ।
कुब्जाश्च दीर्घजङ्घाश्च हस्तिकर्णशिरोधराः ॥ ०९३ ॥

हस्तिनासाः कूर्मनासा वृकनासास्तथापरे ।
दीर्घोष्ठा दीर्घजिह्वाश्च विकराला ह्यधोमुखाः ॥ ०९४ ॥

महादंष्ट्रा ह्रस्वदंष्ट्राश्चतुर्दंष्ट्रास्तथापरे ।
वारणेन्द्रनिभाश्चान्ये भीमा राजन्सहस्रशः ॥ ०९५ ॥

सुविभक्तशरीराश्च दीप्तिमन्तः स्वलङ्कृताः ।
पिङ्गाक्षाः शङ्कुकर्णाश्च वक्रनासाश्च भारत ॥ ०९६ ॥

पृथुदंष्ट्रा महादंष्ट्राः स्थूलौष्ठा हरिमूर्धजाः ।
नानापादौष्ठदंष्ट्राश्च नानाहस्तशिरोधराः ॥ ०९७ ॥

नानावर्मभिराच्छन्ना नानाभाषाश्च भारत ॥ ०९७ ॥

कुशला देशभाषासु जल्पन्तोऽन्योन्यमीश्वराः ।
हृष्टाः परिपतन्ति स्म महापारिषदास्तथा ॥ ०९८ ॥

दीर्घग्रीवा दीर्घनखा दीर्घपादशिरोभुजाः ।
पिङ्गाक्षा नीलकण्ठाश्च लम्बकर्णाश्च भारत ॥ ०९९ ॥

वृकोदरनिभाश्चैव केचिदञ्जनसंनिभाः ।

श्वेताङ्गा लोहितग्रीवाः पिङ्गाक्षाश्च तथापरे ॥ १०० ॥

कल्माषा बहवो राजंश्चित्रवर्णाश्च भारत ॥ १०० ॥

चामरापीडकनिभाः श्वेतलोहितराजयः ।
नानावर्णाः सवर्णाश्च मयूरसदृशप्रभाः ॥ १०१ ॥

पुनः प्रहरणान्येषां कीर्त्यमानानि मे शृणु ।
शेषैः कृतं पारिषदैरायुधानां परिग्रहम् ॥ १०२ ॥

पाशोद्यतकराः केचिद्व्यादितास्याः खराननाः ।
पृथ्वक्षा नीलकण्ठाश्च तथा परिघबाहवः ॥ १०३ ॥

शतघ्नीचक्रहस्ताश्च तथा मुसलपाणयः ।
शूलासिहस्ताश्च तथा महाकाया महाबलाः ॥ १०४ ॥

गदाभुशुण्डिहस्ताश्च तथा तोमरपाणयः ।
असिमुद्गरहस्ताश्च दण्डहस्ताश्च भारत ॥ १०५ ॥

आयुधैर्विविधैर्घोरैर्महात्मानो महाजवाः ।
महाबला महावेगा महापारिषदास्तथा ॥ १०६ ॥

अभिषेकं कुमारस्य दृष्ट्वा हृष्टा रणप्रियाः ।
घण्टाजालपिनद्धाङ्गा ननृतुस्ते महौजसः ॥ १०७ ॥

एते चान्ये च बहवो महापारिषदा नृप ।
उपतस्थुर्महात्मानं कार्त्तिकेयं यशस्विनम् ॥ १०८ ॥

दिव्याश्चाप्यान्तरिक्षाश्च पार्थिवाश्चानिलोपमाः ।
व्यादिष्टा दैवतैः शूराः स्कन्दस्यानुचराभवन् ॥ १०९ ॥

तादृशानां सहस्राणि प्रयुतान्यर्बुदानि च ।
अभिषिक्तं महात्मानं परिवार्योपतस्थिरे ॥ ११० ॥

---

# अध्याय ०४५

वैशंपायन उवाच ॥

श्रृणु मातृगणान्राजन्कुमारानुचरानिमान् ।
कीर्त्यमानान्मया वीर सपत्नगणसूदनान् ॥ ००१ ॥

यशस्विनीनां मातॄणां श्रृणु नामानि भारत ।
याभिर्व्याप्तास्त्रयो लोकाः कल्याणीभिश्चराचराः ॥ ००२ ॥

प्रभावती विशालाक्षी पलिता गोनसी तथा ।
श्रीमती बहुला चैव तथैव बहुपुत्रिका ॥ ००३ ॥

अप्सुजाता च गोपाली बृहदम्बालिका तथा ।
जयावती मालतिका ध्रुवरत्ना भयङ्करी ॥ ००४ ॥

वसुदामा सुदामा च विशोका नन्दिनी तथा ।
एकचूडा महाचूडा चक्रनेमिश्च भारत ॥ ००५ ॥

उत्तेजनी जयत्सेना कमलाक्ष्यथ शोभना ।
शत्रुञ्जया तथा चैव क्रोधना शलभी खरी ॥ ००६ ॥

माधवी शुभवक्त्रा च तीर्थनेमिश्च भारत ।
गीतप्रिया च कल्याणी कद्रुला चामिताशना ॥ ००७ ॥

मेघस्वना भोगवती सुभ्रूश्च कनकावती ।
अलाताक्षी वीर्यवती विद्युज्जिह्वा च भारत ॥ ००८ ॥

पद्मावती सुनक्षत्रा कन्दरा बहुयोजना ।
संतानिका च कौरव्य कमला च महाबला ॥ ००९ ॥

सुदामा बहुदामा च सुप्रभा च यशस्विनी ।
नृत्यप्रिया च राजेन्द्र शतोलूखलमेखला ॥ ०१० ॥

शतघण्टा शतानन्दा भगनन्दा च भामिनी ।
वपुष्मती चन्द्रशीता भद्रकाली च भारत ॥ ०११ ॥

सङ्कारिका निष्कुटिका भ्रमा चत्वरवासिनी ।
सुमङ्गला स्वस्तिमती वृद्धिकामा जयप्रिया ॥ ०१२ ॥

धनदा सुप्रसादा च भवदा च जलेश्वरी ।
एडी भेडी समेडी च वेतालजननी तथा ॥ ०१३ ॥

कण्डूतिः कालिका चैव देवमित्रा च भारत ॥ ०१३ ॥

लम्बसी केतकी चैव चित्रसेना तथा बला ।
कुक्कुटिका शङ्खनिका तथा जर्जरिका नृप ॥ ०१४ ॥

कुण्डारिका कोकलिका कण्डरा च शतोदरी ।
उत्क्राथिनी जरेणा च महावेगा च कङ्कणा ॥ ०१५ ॥

मनोजवा कण्टकिनी प्रघसा पूतना तथा ।
खशाया चुर्व्युटिर्वामा क्रोशनाथ तडित्प्रभा ॥ ०१६ ॥

मण्डोदरी च तुण्डा च कोटरा मेघवासिनी ।
सुभगा लम्बिनी लम्बा वसुचूडा विकत्थनी ॥ ०१७ ॥

ऊर्ध्ववेणीधरा चैव पिङ्गाक्षी लोहमेखला ।
पृथुवक्त्रा मधुरिका मधुकुम्भा तथैव च ॥ ०१८ ॥

पक्षालिका मन्थनिका जरायुर्जर्जरानना ।
ख्याता दहदहा चैव तथा धमधमा नृप ॥ ०१९ ॥

खण्डखण्डा च राजेन्द्र पूषणा मणिकुण्डला ।
अमोचा चैव कौरव्य तथा लम्बपयोधरा ॥ ०२० ॥

वेणुवीणाधरा चैव पिङ्गाक्षी लोहमेखला ।
शशोलूकमुखी कृष्णा खरजङ्घा महाजवा ॥ ०२१ ॥

शिशुमारमुखी श्वेता लोहिताक्षी विभीषणा ।
जटालिका कामचरी दीर्घजिह्वा बलोत्कटा ॥ ०२२ ॥

कालेडिका वामनिका मुकुटा चैव भारत ।
लोहिताक्षी महाकाया हरिपिण्डी च भूमिप ॥ ०२३ ॥

एकाक्षरा सुकुसुमा कृष्णकर्णी च भारत ।
क्षुरकर्णी चतुष्कर्णी कर्णप्रावरणा तथा ॥ ०२४ ॥

चतुष्पथनिकेता च गोकर्णी महिषानना ।
खरकर्णी महाकर्णी भेरीस्वनमहास्वना ॥ ०२५ ॥

शङ्खकुम्भस्वना चैव भङ्गदा च महाबला ।
गणा च सुगणा चैव तथाभीत्यथ कामदा ॥ ०२६ ॥

चतुष्पथरता चैव भूतितीर्थान्यगोचरा ।
पशुदा वित्तदा चैव सुखदा च महायशाः ॥ ०२७ ॥

पयोदा गोमहिषदा सुविषाणा च भारत ॥ ०२७ ॥

प्रतिष्ठा सुप्रतिष्ठा च रोचमाना सुरोचना ।
गोकर्णी च सुकर्णी च ससिरा स्थेरिका तथा ॥ ०२८ ॥

एकचक्रा मेघरवा मेघमाला विरोचना ॥ ०२८ ॥

एताश्चान्याश्च बहवो मातरो भरतर्षभ ।
कार्त्तिकेयानुयायिन्यो नानारूपाः सहस्रशः ॥ ०२९ ॥

दीर्घनख्यो दीर्घदन्त्यो दीर्घतुण्ड्यश्च भारत ।
सरला मधुराश्चैव यौवनस्थाः स्वलङ्कृताः ॥ ०३० ॥

माहात्म्येन च संयुक्ताः कामरूपधरास्तथा ।
निर्मांसगात्र्यः श्वेताश्च तथा काञ्चनसंनिभाः ॥ ०३१ ॥

कृष्णमेघनिभाश्चान्या धूम्राश्च भरतर्षभ ।
अरुणाभा महाभागा दीर्घकेश्यः सिताम्बराः ॥ ०३२ ॥

ऊर्ध्ववेणीधराश्चैव पिङ्गाक्ष्यो लम्बमेखलाः ।
लम्बोदर्यो लम्बकर्णास्तथा लम्बपयोधराः ॥ ०३३ ॥

ताम्राक्ष्यस्ताम्रवर्णाश्च हर्यक्ष्यश्च तथापराः ।
वरदाः कामचारिण्यो नित्यप्रमुदितास्तथा ॥ ०३४ ॥

याम्यो रौद्र्यस्तथा सौम्याः कौबेर्योऽथ महाबलाः ।
वारुण्योऽथ च माहेन्द्र्यस्तथाग्नेय्यः परंतप ॥ ०३५ ॥

वायव्यश्चाथ कौमार्यो ब्राह्म्यश्च भरतर्षभ ।
रूपेणाप्सरसां तुल्या जवे वायुसमास्तथा ॥ ०३६ ॥

परपुष्टोपमा वाक्ये तथर्द्ध्या धनदोपमाः ।
शक्रवीर्योपमाश्चैव दीप्त्या वह्निसमास्तथा ॥ ०३७ ॥

वृक्षचत्वरवासिन्यश्चतुष्पथनिकेतनाः ।
गुहाश्मशानवासिन्यः शैलप्रस्रवणालयाः ॥ ०३८ ॥

नानाभरणधारिण्यो नानामाल्याम्बरास्तथा ।
नानाविचित्रवेषाश्च नानाभाषास्तथैव च ॥ ०३९ ॥

एते चान्ये च बहवो गणाः शत्रुभयङ्कराः ।
अनुजग्मुर्महात्मानं त्रिदशेन्द्रस्य संमते ॥ ०४० ॥

ततः शक्त्यस्त्रमददद्भगवान्पाकशासनः ।
गुहाय राजशार्दूल विनाशाय सुरद्विषाम् ॥ ०४१ ॥

महास्वनां महाघण्टां द्योतमानां सितप्रभाम् ।
तरुणादित्यवर्णां च पताकां भरतर्षभ ॥ ०४२ ॥

ददौ पशुपतिस्तस्मै सर्वभूतमहाचमूम् ।
उग्रां नानाप्रहरणां तपोवीर्यबलान्विताम् ॥ ०४३ ॥

विष्णुर्ददौ वैजयन्तीं मालां बलविवर्धिनीम् ।
उमा ददौ चारजसी वाससी सूर्यसप्रभे ॥ ०४४ ॥

गङ्गा कमण्डलुं दिव्यममृतोद्भवमुत्तमम् ।
ददौ प्रीत्या कुमाराय दण्डं चैव बृहस्पतिः ॥ ०४५ ॥

गरुडो दयितं पुत्रं मयूरं चित्रबर्हिणम् ।
अरुणस्ताम्रचूडं च प्रददौ चरणायुधम् ॥ ०४६ ॥

पाशं तु वरुणो राजा बलवीर्यसमन्वितम् ।

कृष्णाजिनं तथा ब्रह्मा ब्रह्मण्याय ददौ प्रभुः ॥ ०४७ ॥

समरेषु जयं चैव प्रददौ लोकभावनः ॥ ०४७ ॥

सेनापत्यमनुप्राप्य स्कन्दो देवगणस्य ह ।
शुशुभे ज्वलितोऽर्चिष्मान्द्वितीय इव पावकः ॥ ०४८ ॥

ततः पारिषदैश्चैव मातृभिश्च समन्वितः ॥ ०४८ ॥

सा सेना नैरृती भीमा सघण्टोच्छ्रितकेतना ।
सभेरीशङ्खमुरजा सायुधा सपताकिनी ॥ ०४९ ॥

शारदी द्यौरिवाभाति ज्योतिर्भिरुपशोभिता ॥ ०४९ ॥

ततो देवनिकायास्ते भूतसेनागणास्तथा ।
वादयामासुरव्यग्रा भेरीशङ्खांश्च पुष्कलान् ॥ ०५० ॥

पटहाञ्झर्झरांश्चैव कृकचान्गोविषाणिकान् ।
आडम्बरान्गोमुखांश्च डिण्डिमांश्च महास्वनान् ॥ ०५१ ॥

तुष्टुवुस्ते कुमारं च सर्वे देवाः सवासवाः ।
जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ०५२ ॥

ततः प्रीतो महासेनस्त्रिदशेभ्यो वरं ददौ ।
रिपून्हन्तास्मि समरे ये वो वधचिकीर्षवः ॥ ०५३ ॥

प्रतिगृह्य वरं देवास्तस्माद्विबुधसत्तमात् ।
प्रीतात्मानो महात्मानो मेनिरे निहतान्रिपून् ॥ ०५४ ॥

सर्वेषां भूतसंघानां हर्षान्नादः समुत्थितः ।
अपूरयत लोकांस्त्रीन्वरे दत्ते महात्मना ॥ ०५५ ॥

स निर्ययौ महासेनो महत्या सेनया वृतः ।
वधाय युधि दैत्यानां रक्षार्थं च दिवौकसाम्  ॥ ०५६  ॥

व्यवसायो जयो धर्मः सिद्धिर्लक्ष्मीर्धृतिः स्मृतिः ।
महासेनस्य सैन्यानामग्रे जग्मुर्नराधिप  ॥ ०५७  ॥

स तया भीमया देवः शूलमुद्गरहस्तया ।
गदामुसलनाराचशक्तितोमरहस्तया  ॥ ०५८  ॥

दृप्तसिंहनिनादिन्या विनद्य प्रययौ गुहः  ॥ ०५८  ॥

तं दृष्ट्वा सर्वदैतेया राक्षसा दानवास्तथा ।
व्यद्रवन्त दिशः सर्वा भयोद्विग्नाः समन्ततः  ॥ ०५९  ॥

अभ्यद्रवन्त देवास्तान्विविधायुधपाणयः  ॥ ०५९  ॥

दृष्ट्वा च स ततः क्रुद्धः स्कन्दस्तेजोबलान्वितः ।
शक्त्यस्त्रं भगवान्भीमं पुनः पुनरवासृजत्  ॥ ०६०  ॥

आदधच्चात्मनस्तेजो हविषेद्ध इवानलः  ॥ ०६०  ॥

अभ्यस्यमाने शक्त्यस्त्रे स्कन्देनामिततेजसा ।
उल्काज्वाला महाराज पपात वसुधातले  ॥ ०६१  ॥

संह्रादयन्तश्च तथा निर्घाताश्चापतन्क्षितौ ।
यथान्तकालसमये सुघोराः स्युस्तथा नृप  ॥ ०६२  ॥

क्षिप्ता ह्येका तथा शक्तिः सुघोरानलसूनुना ।
ततः कोट्यो विनिष्पेतुः शक्तीनां भरतर्षभ  ॥ ०६३  ॥

स शक्त्यस्त्रेण सङ्ग्रामे जघान भगवान्प्रभुः ।
दैत्येन्द्रं तारकं नाम महाबलपराक्रमम् ॥ ०६४ ॥

वृतं दैत्यायुतैर्वीरैर्बलिभिर्दशभिर्नृप ॥ ०६४ ॥

महिषं चाष्टभिः पद्मैर्वृतं संख्ये निजघ्निवान् ।
त्रिपादं चायुतशतैर्जघान दशभिर्वृतम् ॥ ०६५ ॥

ह्रदोदरं निखर्वैश्च वृतं दशभिरीश्वरः ।
जघानानुचरैः सार्धं विविधायुधपाणिभिः ॥ ०६६ ॥

तत्राकुर्वन्त विपुलं नादं वध्यत्सु शत्रुषु ।
कुमारानुचरा राजन्पूरयन्तो दिशो दश ॥ ०६७ ॥

शक्त्यस्त्रस्य तु राजेन्द्र ततोऽर्चिर्भिः समन्ततः ।
दग्धाः सहस्रशो दैत्या नादैः स्कन्दस्य चापरे ॥ ०६८ ॥

पताकयावधूताश्च हताः केचित्सुरद्विषः ।
केचिद्घण्टारवत्रस्ता निपेतुर्वसुधातले ॥ ०६९ ॥

केचित्प्रहरणैश्छिन्ना विनिपेतुर्गतासवः ॥ ०६९ ॥

एवं सुरद्विषोऽनेकान्बलवानाततायिनः ।
जघान समरे वीरः कार्त्तिकेयो महाबलः ॥ ०७० ॥

बाणो नामाथ दैतेयो बलेः पुत्रो महाबलः ।
क्रौञ्चं पर्वतमासाद्य देवसंघानबाधत ॥ ०७१ ॥

तमभ्ययान्महासेनः सुरशत्रुमुदारधीः ।
स कार्त्तिकेयस्य भयात्क्रौञ्चं शरणमेयिवान् ॥ ०७२ ॥

ततः क्रौञ्चं महामन्युः क्रौञ्चनादनिनादितम् ।
शक्त्या बिभेद भगवान्कार्त्तिकेयोऽग्निदत्तया ॥ ०७३ ॥

सशालस्कन्धसरलं त्रस्तवानरवारणम् ।
पुलिनत्रस्तविहगं विनिष्पतितपन्नगम् ॥ ०७४ ॥

गोलाङ्गूलर्क्षसंघैश्च द्रवद्भिरनुनादितम् ।
कुरङ्गगतिनिर्घोषमुद्भ्रान्तसृमराचितम् ॥ ०७५ ॥

विनिष्पतद्भिः शरभैः सिंहैश्च सहसा द्रुतैः ।
शोच्यामपि दशां प्राप्तो रराजैव स पर्वतः ॥ ०७६ ॥

विद्याधराः समुत्पेतुस्तस्य शृङ्गनिवासिनः ।
किंनराश्च समुद्विग्नाः शक्तिपातरवोद्धताः ॥ ०७७ ॥

ततो दैत्या विनिष्पेतुः शतशोऽथ सहस्रशः ।
प्रदीप्तात्पर्वतश्रेष्ठाद्विचित्राभरणस्रजः ॥ ०७८ ॥

तान्निजघ्नुरतिक्रम्य कुमारानुचरा मृधे ।
बिभेद शक्त्या क्रौञ्चं च पावकिः परवीरहा ॥ ०७९ ॥

बहुधा चैकधा चैव कृत्वात्मानं महात्मना ।
शक्तिः क्षिप्ता रणे तस्य पाणिमेति पुनः पुनः ॥ ०८० ॥

एवंप्रभावो भगवानतो भूयश्च पावकिः ।
क्रौञ्चस्तेन विनिर्भिन्नो दैत्याश्च शतशो हताः ॥ ०८१ ॥

ततः स भगवान्देवो निहत्य विबुधद्विषः ।
सभाज्यमानो विबुधैः परं हर्षमवाप ह ॥ ०८२ ॥

ततो दुन्दुभयो राजन्नेदुः शङ्खाश्च भारत ।

मुमुचुर्देवयोषाश्च पुष्पवर्षमनुत्तमम् ॥ ०८३ ॥

दिव्यगन्धमुपादाय ववौ पुण्यश्च मारुतः ।
गन्धर्वास्तुष्टुवुश्चैनं यज्वानश्च महर्षयः ॥ ०८४ ॥

केचिदेनं व्यवस्यन्ति पितामहसुतं प्रभुम् ।
सनत्कुमारं सर्वेषां ब्रह्मयोनिं तमग्रजम् ॥ ०८५ ॥

केचिन्महेश्वरसुतं केचित्पुत्रं विभावसोः ।
उमायाः कृत्तिकानां च गङ्गायाश्च वदन्त्युत ॥ ०८६ ॥

एकधा च द्विधा चैव चतुर्धा च महाबलम् ।
योगिनामीश्वरं देवं शतशोऽथ सहस्रशः ॥ ०८७ ॥

एतत्ते कथितं राजन्कार्त्तिकेयाभिषेचनम् ।
शृणु चैव सरस्वत्यास्तीर्थवंशस्य पुण्यताम् ॥ ०८८ ॥

बभूव तीर्थप्रवरं हतेषु सुरशत्रुषु ।
कुमारेण महाराज त्रिविष्टपमिवापरम् ॥ ०८९ ॥

ऐश्वर्याणि च तत्रस्थो ददावीशः पृथक्पृथक् ।
तदा नैर्ऋतमुख्येभ्यस्त्रैलोक्ये पावकात्मजः ॥ ०९० ॥

एवं स भगवांस्तस्मिंस्तीर्थे दैत्यकुलान्तकः ।
अभिषिक्तो महाराज देवसेनापतिः सुरैः ॥ ०९१ ॥

औजसं नाम तत्तीर्थं यत्र पूर्वमपां पतिः ।
अभिषिक्तः सुरगणैर्वरुणो भरतर्षभ ॥ ०९२ ॥

तस्मिंस्तीर्थवरे स्नात्वा स्कन्दं चाभ्यर्च्य लाङ्गली ।
ब्राह्मणेभ्यो ददौ रुक्मं वासांस्याभरणानि च ॥ ०९३ ॥

उषित्वा रजनीं तत्र माधवः परवीरहा ।
पूज्य तीर्थवरं तच्च स्पृष्ट्वा तोयं च लाङ्गली ॥ ०९४ ॥

हृष्टः प्रीतमनाश्चैव ह्यभवन्माधवोत्तमः ॥ ०९४ ॥

एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
यथाभिषिक्तो भगवान्स्कन्दो देवैः समागतैः ॥ ०९५ ॥

---

# अध्याय ०४६

जनमेजय उवाच ॥

अत्यद्भुतमिदं ब्रह्मञ्श्रुतवानस्मि तत्त्वतः ।
अभिषेकं कुमारस्य विस्तरेण यथाविधि ॥ ००१ ॥

यच्छ्रुत्वा पूतमात्मानं विजानामि तपोधन ।
प्रहृष्टानि च रोमाणि प्रसन्नं च मनो मम ॥ ००२ ॥

अभिषेकं कुमारस्य दैत्यानां च वधं तथा ।
श्रुत्वा मे परमा प्रीतिर्भूयः कौतूहलं हि मे ॥ ००३ ॥

अपां पतिः कथं ह्यस्मिन्नभिषिक्तः सुरासुरैः ।
तन्मे ब्रूहि महाप्राज्ञ कुशलो ह्यसि सत्तम ॥ ००४ ॥

वैशंपायन उवाच ॥

श्रृणु राजन्निदं चित्रं पूर्वकल्पे यथातथम् ।

आदौ कृतयुगे तस्मिन्वर्तमाने यथाविधि ॥ ००५ ॥

वरुणं देवताः सर्वाः समेत्येदमथाब्रुवन् ॥ ००५ ॥

यथास्मान्सुरराड्शक्रो भयेभ्यः पाति सर्वदा ।
तथा त्वमपि सर्वासां सरितां वै पतिर्भव ॥ ००६ ॥

वासश्च ते सदा देव सागरे मकरालये ।
समुद्रोऽयं तव वशे भविष्यति नदीपतिः ॥ ००७ ॥

सोमेन सार्धं च तव हानिवृद्धी भविष्यतः ।
एवमस्त्विति तान्देवान्वरुणो वाक्यमब्रवीत् ॥ ००८ ॥

समागम्य ततः सर्वे वरुणं सागरालयम् ।
अपां पतिं प्रचक्रुर्हि विधिदृष्टेन कर्मणा ॥ ००९ ॥

अभिषिच्य ततो देवा वरुणं यादसां पतिम् ।
जग्मुः स्वान्येव स्थानानि पूजयित्वा जलेश्वरम् ॥ ०१० ॥

अभिषिक्तस्ततो देवैर्वरुणोऽपि महायशाः ।
सरितः सागरांश्चैव नदांश्चैव सरांसि च ॥ ०११ ॥

पालयामास विधिना यथा देवाञ्शतक्रतुः ॥ ०११ ॥

ततस्तत्राप्युपस्पृश्य दत्त्वा च विविधं वसु ।
अग्नितीर्थं महाप्राज्ञः स जगाम प्रलम्बहा ॥ ०१२ ॥

नष्टो न दृश्यते यत्र शमीगर्भे हुताशनः ॥ ०१२ ॥

लोकालोकविनाशे च प्रादुर्भूते तदानघ ।
उपतस्थुर्महात्मानं सर्वलोकपितामहम् ॥ ०१३ ॥

अग्निः प्रनष्टो भगवान्कारणं च न विद्महे ।
सर्वलोकक्षयो मा भूत्संपादयतु नोऽनलम् ॥ ०१४ ॥

जनमेजय उवाच ॥

किमर्थं भगवानग्निः प्रनष्टो लोकभावनः ।
विज्ञातश्च कथं देवैस्तन्ममाचक्ष्व तत्त्वतः ॥ ०१५ ॥

वैशंपायन उवाच ॥

भृगोः शापाद्भृशं भीतो जातवेदाः प्रतापवान् ।
शमीगर्भमथासाद्य ननाश भगवांस्ततः ॥ ०१६ ॥

प्रनष्टे तु तदा वह्नौ देवाः सर्वे सवासवाः ।
अन्वेषन्त तदा नष्टं ज्वलनं भृशदुःखिताः ॥ ०१७ ॥

ततोऽग्नितीर्थमासाद्य शमीगर्भस्थमेव हि ।
ददृशुर्ज्वलनं तत्र वसमानं यथाविधि ॥ ०१८ ॥

देवाः सर्वे नरव्याघ्र बृहस्पतिपुरोगमाः ।
ज्वलनं तं समासाद्य प्रीताभूवन्सवासवाः ॥ ०१९ ॥

पुनर्यथागतं जग्मुः सर्वभक्षश्च सोऽभवत् ॥ ०१९ ॥

भृगोः शापान्महीपाल यदुक्तं ब्रह्मवादिना ।
तत्राप्याप्लुत्य मतिमान्ब्रह्मयोनिं जगाम ह ॥ ०२० ॥

ससर्ज भगवान्यत्र सर्वलोकपितामहः ।
तत्राप्लुत्य ततो ब्रह्मा सह देवैः प्रभुः पुरा ॥ ०२१ ॥

ससर्ज चान्नानि तथा देवतानां यथाविधि ॥ ०२१ ॥

तत्र स्नात्वा च दत्त्वा च वसूनि विविधानि च ।
कौबेरं प्रययौ तीर्थं तत्र तप्त्वा महत्तपः ॥ ०२२ ॥

धनाधिपत्यं संप्राप्तो राजन्नैलबिलः प्रभुः ॥ ०२२ ॥

तत्रस्थमेव तं राजन्धनानि निधयस्तथा ।
उपतस्थुर्नरश्रेष्ठ तत्तीर्थं लाङ्गली ततः ॥ ०२३ ॥

गत्वा स्नात्वा च विधिवद्ब्राह्मणेभ्यो धनं ददौ ॥ ०२३ ॥

ददृशे तत्र तत्स्थानं कौबेरे काननोत्तमे ।
पुरा यत्र तपस्तप्तं विपुलं सुमहात्मना ॥ ०२४ ॥

यत्र राज्ञा कुबेरेण वरा लब्धाश्च पुष्कलाः ।
धनाधिपत्यं सख्यं च रुद्रेणामिततेजसा ॥ ०२५ ॥

सुरत्वं लोकपालत्वं पुत्रं च नलकूबरम् ।
यत्र लेभे महाबाहो धनाधिपतिरञ्जसा ॥ ०२६ ॥

अभिषिक्तश्च तत्रैव समागम्य मरुद्गणैः ।
वाहनं चास्य तद्दत्तं हंसयुक्तं मनोरमम् ॥ ०२७ ॥

विमानं पुष्पकं दिव्यं नैरृतैश्वर्यमेव च ॥ ०२७ ॥

तत्राप्लुत्य बलो राजन्दत्त्वा दायांश्च पुष्कलान् ।
जगाम त्वरितो रामस्तीर्थं श्वेतानुलेपनः ॥ ०२८ ॥

निषेवितं सर्वसत्त्वैर्नाम्ना बदरपाचनम् ।
नानर्तुकवनोपेतं सदापुष्पफलं शुभम् ॥ ०२९ ॥

# स्रुचावत्युपाख्यानम्

## अध्याय ०४७

वैशंपायन उवाच ॥

ततस्तीर्थवरं रामो ययौ बदरपाचनम् ।
तपस्विसिद्धचरितं यत्र कन्या धृतव्रता ॥ ००१ ॥

भरद्वाजस्य दुहिता रूपेणाप्रतिमा भुवि ।
स्रुचावती नाम विभो कुमारी ब्रह्मचारिणी ॥ ००२ ॥

तपश्चचार सात्युग्रं नियमैर्बहुभिर्नृप ।
भर्ता मे देवराजः स्यादिति निश्चित्य भामिनी ॥ ००३ ॥

समास्तस्या व्यतिक्रान्ता बह्व्यः कुरुकुलोद्वह ।
चरन्त्या नियमांस्तांस्तान्स्त्रीभिस्तीव्रान्सुदुश्चरान् ॥ ००४ ॥

तस्यास्तु तेन वृत्तेन तपसा च विशां पते ।
भक्त्या च भगवान्प्रीतः परया पाकशासनः ॥ ००५ ॥

आजगामाश्रमं तस्यास्त्रिदशाधिपतिः प्रभुः ।
आस्थाय रूपं विप्रर्षेर्वसिष्ठस्य महात्मनः ॥ ००६ ॥

सा तं दृष्ट्वोग्रतपसं वसिष्ठं तपतां वरम् ।
आचारैर्मुनिभिर्दृष्टैः पूजयामास भारत ॥ ००७ ॥

उवाच नियमज्ञा च कल्याणी सा प्रियंवदा ।
भगवन्मुनिशार्दूल किमाज्ञापयसि प्रभो ॥ ००८ ॥

सर्वमद्य यथाशक्ति तव दास्यामि सुव्रत ।
शक्रभक्त्या तु ते पाणिं न दास्यामि कथञ्चन ॥ ००९ ॥

व्रतैश्च नियमैश्चैव तपसा च तपोधन ।
शक्रस्तोषयितव्यो वै मया त्रिभुवनेश्वरः ॥ ०१० ॥

इत्युक्तो भगवान्देवः स्मयन्निव निरीक्ष्य ताम् ।
उवाच नियमज्ञां तां सान्त्वयन्निव भारत ॥ ०११ ॥

उग्रं तपश्चरसि वै विदिता मेऽसि सुव्रते ।
यदर्थमयमारम्भस्तव कल्याणि हृद्गतः ॥ ०१२ ॥

तच्च सर्वं यथाभूतं भविष्यति वरानने ।
तपसा लभ्यते सर्वं सर्वं तपसि तिष्ठति ॥ ०१३ ॥

यानि स्थानानि दिव्यानि विबुधानां शुभानने ।
तपसा तानि प्राप्यानि तपोमूलं महत्सुखम् ॥ ०१४ ॥

इह कृत्वा तपो घोरं देहं संन्यस्य मानवाः ।
देवत्वं यान्ति कल्याणि शृणु चेदं वचो मम ॥ ०१५ ॥

पचस्वैतानि सुभगे बदराणि शुभव्रते ।
पचेत्युक्त्वा स भगवाञ्जगाम बलसूदनः ॥ ०१६ ॥

आमन्त्र्य तां तु कल्याणीं ततो जप्यं जजाप सः ।
अविदूरे ततस्तस्मादाश्रमात्तीर्थ उत्तमे ॥ ०१७ ॥

इन्द्रतीर्थे महाराज त्रिषु लोकेषु विश्रुते ॥ ०१७ ॥

तस्या जिज्ञासनार्थं स भगवान्पाकशासनः ।
बदराणामपचनं चकार विबुधाधिपः ॥ ०१८ ॥

ततः स प्रयता राजन्वाग्यता विगतक्लमा ।
तत्परा शुचिसंवीता पावके समधिश्रयत् ॥ ०१९ ॥

अपचद्राजशार्दूल बदराणि महाव्रता ॥ ०१९ ॥

तस्याः पचन्त्याः सुमहान्कालोऽगात्पुरुषर्षभ ।
न च स्म तान्यपच्यन्त दिनं च क्षयमभ्यगात् ॥ ०२० ॥

हुताशनेन दग्धश्च यस्तस्याः काष्ठसञ्चयः ।
अकाष्ठमग्निं सा दृष्ट्वा स्वशरीरमथादहत् ॥ ०२१ ॥

पादौ प्रक्षिप्य सा पूर्वं पावके चारुदर्शना ।
दग्धौ दग्धौ पुनः पादावुपावर्तयतानघा ॥ ०२२ ॥

चरणौ दह्यमानौ च नाचिन्तयदनिन्दिता ।
दुःखं कमलपत्राक्षी महर्षेः प्रियकाम्यया ॥ ०२३ ॥

अथ तत्कर्म दृष्ट्वास्याः प्रीतस्त्रिभुवनेश्वरः ।
ततः संदर्शयामास कन्यायै रूपमात्मनः ॥ ०२४ ॥

उवाच च सुरश्रेष्ठस्तां कन्यां सुदृढव्रताम् ।
प्रीतोऽस्मि ते शुभे भक्त्या तपसा नियमेन च ॥ ०२५ ॥

तस्माद्योऽभिमतः कामः स ते संपत्स्यते शुभे ।
देहं त्यक्त्वा महाभागे त्रिदिवे मयि वत्स्यसि ॥ ०२६ ॥

इदं च ते तीर्थवरं स्थिरं लोके भविष्यति ।
सर्वपापापहं सुभ्रु नाम्ना बदरपाचनम् ॥ ०२७ ॥

विख्यातं त्रिषु लोकेषु ब्रह्मर्षिभिरभिप्लुतम् ॥ ०२७ ॥

अस्मिन्खलु महाभागे शुभे तीर्थवरे पुरा ।
त्यक्त्वा सप्तर्षयो जग्मुर्हिमवन्तमरुन्धतीम् ॥ ०२८ ॥

ततस्ते वै महाभागा गत्वा तत्र सुसंशिताः ।
वृत्त्यर्थं फलमूलानि समाहर्तुं ययुः किल ॥ ०२९ ॥

तेषां वृत्त्यर्थिनां तत्र वसतां हिमवद्वने ।
अनावृष्टिरनुप्राप्ता तदा द्वादशवार्षिकी ॥ ०३० ॥

ते कृत्वा चाश्रमं तत्र न्यवसन्त तपस्विनः ।
अरुन्धत्यपि कल्याणी तपोनित्याभवत्तदा ॥ ०३१ ॥

अरुन्धतीं ततो दृष्ट्वा तीव्रं नियममास्थिताम् ।
अथागमत्त्रिनयनः सुप्रीतो वरदस्तदा ॥ ०३२ ॥

ब्राह्मं रूपं ततः कृत्वा महादेवो महायशाः ।
तामभ्येत्याब्रवीद्देवो भिक्षामिच्छाम्यहं शुभे ॥ ०३३ ॥

प्रत्युवाच ततः सा तं ब्राह्मणं चारुदर्शना ।
क्षीणोऽन्नसञ्चयो विप्र बदराणीह भक्षय ॥ ०३४ ॥

ततोऽब्रवीन्महादेवः पचस्वैतानि सुव्रते ॥ ०३४ ॥

इत्युक्ता सापचत्तानि ब्राह्मणप्रियकाम्यया ।
अधिश्रित्य समिद्धेऽग्नौ बदराणि यशस्विनी ॥ ०३५ ॥

दिव्या मनोरमाः पुण्याः कथाः शुश्राव सा तदा ।
अतीता सा त्वनावृष्टिर्घोरा द्वादशवार्षिकी ॥ ०३६ ॥

अनश्नन्त्याः पचन्त्याश्च शृण्वन्त्याश्च कथाः शुभाः ।
अहःसमः स तस्यास्तु कालोऽतीतः सुदारुणः ॥ ०३७ ॥

ततस्ते मुनयः प्राप्ताः फलान्यादाय पर्वतात् ।
ततः स भगवान्प्रीतः प्रोवाचारुन्धतीं तदा ॥ ०३८ ॥

उपसर्पस्व धर्मज्ञे यथापूर्वमिमानृषीन् ।
प्रीतोऽस्मि तव धर्मज्ञे तपसा नियमेन च ॥ ०३९ ॥

ततः संदर्शयामास स्वरूपं भगवान्हरः ।
ततोऽब्रवीत्तदा तेभ्यस्तस्यास्तच्चरितं महत् ॥ ०४० ॥

भवद्भिर्हिमवत्पृष्ठे यत्तपः समुपार्जितम् ।
अस्याश्च यत्तपो विप्रा न समं तन्मतं मम ॥ ०४१ ॥

अनया हि तपस्विन्या तपस्तप्तं सुदुश्चरम् ।
अनश्नन्त्या पचन्त्या च समा द्वादश पारिताः ॥ ०४२ ॥

ततः प्रोवाच भगवांस्तामेवारुन्धतीं पुनः ।
वरं वृणीष्व कल्याणि यत्तेऽभिलषितं हृदि ॥ ०४३ ॥

साब्रवीत्पृथुताम्राक्षी देवं सप्तर्षिसंसदि ।
भगवान्यदि मे प्रीतस्तीर्थं स्यादिदमुत्तमम् ॥ ०४४ ॥

सिद्धदेवर्षिदयितं नाम्ना बदरपाचनम् ॥ ०४४ ॥

तथास्मिन्देवदेवेश त्रिरात्रमुषितः शुचिः ।
प्राप्नुयादुपवासेन फलं द्वादशवार्षिकम् ॥ ०४५ ॥

एवमस्त्विति तां चोक्त्वा हरो यातस्तदा दिवम्  ॥ ०४५  ॥

ऋषयो विस्मयं जग्मुस्तां दृष्ट्वा चाप्यरुन्धतीम् ।
अश्रान्तां चाविवर्णां च क्षुत्पिपासासहां सतीम्  ॥ ०४६  ॥

एवं सिद्धिः परा प्राप्ता अरुन्धत्या विशुद्धया ।
यथा त्वया महाभागे मदर्थं संशितव्रते  ॥ ०४७  ॥

विशेषो हि त्वया भद्रे व्रते ह्यस्मिन्समर्पितः ।
तथा चेदं ददाम्यद्य नियमेन सुतोषितः  ॥ ०४८  ॥

विशेषं तव कल्याणि प्रयच्छामि वरं वरे ।
अरुन्धत्या वरस्तस्या यो दत्तो वै महात्मना  ॥ ०४९  ॥

तस्य चाहं प्रसादेन तव कल्याणि तेजसा ।
प्रवक्ष्याम्यपरं भूयो वरमत्र यथाविधि  ॥ ०५०  ॥

यस्त्वेकां रजनीं तीर्थे वत्स्यते सुसमाहितः ।
स स्नात्वा प्राप्स्यते लोकान्देहन्यासाच्च दुर्लभान्  ॥ ०५१  ॥

इत्युक्त्वा भगवान्देवः सहस्राक्षः प्रतापवान् ।
स्रुचावतीं ततः पुण्यां जगाम त्रिदिवं पुनः  ॥ ०५२  ॥

गते वज्रधरे राजंस्तत्र वर्षं पपात ह ।
पुष्पाणां भरतश्रेष्ठ दिव्यानां दिव्यगन्धिनाम्  ॥ ०५३  ॥

नेदुर्दुन्दुभयश्चापि समन्तात्सुमहास्वनाः ।
मारुतश्च ववौ युक्त्या पुण्यगन्धो विशां पते  ॥ ०५४  ॥

उत्सृज्य तु शुभं देहं जगामेन्द्रस्य भार्यताम् ।

तपसोग्रेण सा लब्ध्वा तेन रेमे सहाच्युत ॥ ०५५ ॥

जनमेजय उवाच ॥

का तस्या भगवन्माता क्व संवृद्धा च शोभना ।
श्रोतुमिच्छाम्यहं ब्रह्मन्परं कौतूहलं हि मे ॥ ०५६ ॥

वैशंपायन उवाच ॥

भारद्वाजस्य विप्रर्षेः स्कन्नं रेतो महात्मनः ।
दृष्ट्वाप्सरसमायान्तीं घृताचीं पृथुलोचनाम् ॥ ०५७ ॥

स तु जग्राह तद्रेतः करेण जपतां वरः ।
तदावपत्पर्णपुटे तत्र सा संभवच्छुभा ॥ ०५८ ॥

तस्यास्तु जातकर्मादि कृत्वा सर्वं तपोधनः ।
नाम चास्याः स कृतवान्भारद्वाजो महामुनिः ॥ ०५९ ॥

स्रुचावतीति धर्मात्मा तदर्षिगणसंसदि ।
स च तामाश्रमे न्यस्य जगाम हिमवद्वनम् ॥ ०६० ॥

तत्राप्युपस्पृश्य महानुभावो ; वसूनि दत्त्वा च महाद्विजेभ्यः ।
जगाम तीर्थं सुसमाहितात्मा ; शक्रस्य वृष्णिप्रवरस्तदानीम् ॥ ०६१ ॥

---

# अध्याय ०४८

वैशंपायन उवाच ॥

इन्द्रतीर्थं ततो गत्वा यदूनां प्रवरो बली ।
विप्रेभ्यो धनरत्नानि ददौ स्नात्वा यथाविधि ॥ ००१ ॥

तत्र ह्यमरराजोऽसावीजे क्रतुशतेन ह ।
बृहस्पतेश्च देवेशः प्रददौ विपुलं धनम् ॥ ००२ ॥

निरर्गलान्सजारूथ्यान्सर्वान्विविधदक्षिणान् ।
आजहार क्रतूंस्तत्र यथोक्तान्वेदपारगैः ॥ ००३ ॥

तान्क्रतून्भरतश्रेष्ठ शतकृत्वो महाद्युतिः ।
पूरयामास विधिवत्ततः ख्यातः शतक्रतुः ॥ ००४ ॥

तस्य नाम्ना च तत्तीर्थं शिवं पुण्यं सनातनम् ।
इन्द्रतीर्थमिति ख्यातं सर्वपापप्रमोचनम् ॥ ००५ ॥

उपस्पृश्य च तत्रापि विधिवन्मुसलायुधः ।
ब्राह्मणान्पूजयित्वा च पानाच्छादनभोजनैः ॥ ००६ ॥

शुभं तीर्थवरं तस्माद्रामतीर्थं जगाम ह ॥ ००६ ॥

यत्र रामो महाभागो भार्गवः सुमहातपाः ।
असकृत्पृथिवीं सर्वां हतक्षत्रियपुङ्गवाम् ॥ ००७ ॥

उपाध्यायं पुरस्कृत्य कश्यपं मुनिसत्तमम् ।
अयजद्वाजपेयेन सोऽश्वमेधशतेन च ॥ ००८ ॥

प्रददौ दक्षिणार्थं च पृथिवीं वै ससागराम् ॥ ००८ ॥

रामो दत्त्वा धनं तत्र द्विजेभ्यो जनमेजय ।
उपस्पृश्य यथान्यायं पूजयित्वा तथा द्विजान् ॥ ००९ ॥

पुण्ये तीर्थे शुभे देशे वसु दत्त्वा शुभाननः ।
मुनींश्चैवाभिवाद्याथ यमुनातीर्थमागमत् ॥ ०१० ॥

यत्रानयामास तदा राजसूयं महीपते ।
पुत्रोऽदितेर्महाभागो वरुणो वै सितप्रभः ॥ ०११ ॥

तत्र निर्जित्य सङ्ग्रामे मानुषान्दैवतांस्तथा ।
वरं क्रतुं समाजह्रे वरुणः परवीरहा ॥ ०१२ ॥

तस्मिन्क्रतुवरे वृत्ते सङ्ग्रामः समजायत ।
देवानां दानवानां च त्रैलोक्यस्य क्षयावहः ॥ ०१३ ॥

राजसूये क्रतुश्रेष्ठे निवृत्ते जनमेजय ।
जायते सुमहाघोरः सङ्ग्रामः क्षत्रियान्प्रति ॥ ०१४ ॥

सीरायुधस्तदा रामस्तस्मिंस्तीर्थवरे तदा ।
तत्र स्नात्वा च दत्त्वा च द्विजेभ्यो वसु माधवः ॥ ०१५ ॥

वनमाली ततो हृष्टः स्तूयमानो द्विजातिभिः ।
तस्मादादित्यतीर्थं च जगाम कमलेक्षणः ॥ ०१६ ॥

यत्रेष्ट्वा भगवाञ्ज्योतिर्भास्करो राजसत्तम ।
ज्योतिषामाधिपत्यं च प्रभावं चाभ्यपद्यत ॥ ०१७ ॥

तस्या नद्यास्तु तीरे वै सर्वे देवाः सवासवाः ।
विश्वेदेवाः समरुतो गन्धर्वाप्सरसश्च ह ॥ ०१८ ॥

द्वैपायनः शुकश्चैव कृष्णश्च मधुसूदनः ।
यक्षाश्च राक्षसाश्चैव पिशाचाश्च विशां पते ॥ ०१९ ॥

एते चान्ये च बहवो योगसिद्धाः सहस्रशः ।

तस्मिंस्तीर्थे सरस्वत्याः शिवे पुण्ये परंतप ॥ ०२० ॥

तत्र हत्वा पुरा विष्णुरसुरौ मधुकैटभौ ।
आप्लुतो भरतश्रेष्ठ तीर्थप्रवर उत्तमे ॥ ०२१ ॥

द्वैपायनश्च धर्मात्मा तत्रैवाप्लुत्य भारत ।
संप्राप्तः परमं योगं सिद्धिं च परमां गतः ॥ ०२२ ॥

असितो देवलश्चैव तस्मिन्नेव महातपाः ।
परमं योगमास्थाय ऋषिर्योगमवाप्तवान् ॥ ०२३ ॥

---

# जैगीषव्योपाख्यानम्

## अध्याय ०४९

वैशंपायन उवाच ॥

तस्मिन्नेव तु धर्मात्मा वसति स्म तपोधनः ।
गार्हस्थ्यं धर्ममास्थाय असितो देवलः पुरा ॥ ००१ ॥

धर्मनित्यः शुचिर्दान्तो न्यस्तदण्डो महातपाः ।
कर्मणा मनसा वाचा समः सर्वेषु जन्तुषु ॥ ००२ ॥

अक्रोधनो महाराज तुल्यनिन्दाप्रियाप्रियः ।
काञ्चने लोष्टके चैव समदर्शी महातपाः ॥ ००३ ॥

देवताः पूजयन्नित्यमतिथींश्च द्विजैः सह ।

ब्रह्मचर्यरतो नित्यं सदा धर्मपरायणः ॥ ००४ ॥

ततोऽभ्येत्य महाराज योगमास्थाय भिक्षुकः ।
जैगीषव्यो मुनिर्धीमांस्तस्मिंस्तीर्थे समाहितः ॥ ००५ ॥

देवलस्याश्रमे राजन्न्यवसत्स महाद्युतिः ।
योगनित्यो महाराज सिद्धिं प्राप्तो महातपाः ॥ ००६ ॥

तं तत्र वसमानं तु जैगीषव्यं महामुनिम् ।
देवलो दर्शयन्नेव नैवायुञ्जत धर्मतः ॥ ००७ ॥

एवं तयोर्महाराज दीर्घकालो व्यतिक्रमत् ।
जैगीषव्यं मुनिं चैव न ददर्शाथ देवलः ॥ ००८ ॥

आहारकाले मतिमान्परिव्राड्जनमेजय ।
उपातिष्ठत धर्मज्ञो भैक्षकाले स देवलम् ॥ ००९ ॥

स दृष्ट्वा भिक्षुरूपेण प्राप्तं तत्र महामुनिम् ।
गौरवं परमं चक्रे प्रीतिं च विपुलां तथा ॥ ०१० ॥

देवलस्तु यथाशक्ति पूजयामास भारत ।
ऋषिदृष्टेन विधिना समा बह्व्यः समाहितः ॥ ०११ ॥

कदाचित्तस्य नृपते देवलस्य महात्मनः ।
चिन्ता सुमहती जाता मुनिं दृष्ट्वा महाद्युतिम् ॥ ०१२ ॥

समास्तु समतिक्रान्ता बह्व्यः पूजयतो मम ।
न चायमलसो भिक्षुरभ्यभाषत किञ्चन ॥ ०१३ ॥

एवं विगणयन्नेव स जगाम महोदधिम् ।
अन्तरिक्षचरः श्रीमान्कलशं गृह्य देवलः ॥ ०१४ ॥

गच्छन्नेव स धर्मात्मा समुद्रं सरितां पतिम् ।
जैगीषव्यं ततोऽपश्यद्गतं प्रागेव भारत ॥ ०१५ ॥

ततः सविस्मयश्चिन्तां जगामाथासितः प्रभुः ।
कथं भिक्षुरयं प्राप्तः समुद्रे स्नात एव च ॥ ०१६ ॥

इत्येवं चिन्तयामास महर्षिरसितस्तदा ।
स्नात्वा समुद्रे विधिवच्छुचिर्जप्यं जजाप ह ॥ ०१७ ॥

कृतजप्याह्निकः श्रीमानाश्रमं च जगाम ह ।
कलशं जलपूर्णं वै गृहीत्वा जनमेजय ॥ ०१८ ॥

ततः स प्रविशन्नेव स्वमाश्रमपदं मुनिः ।
आसीनमाश्रमे तत्र जैगीषव्यमपश्यत ॥ ०१९ ॥

न व्याहरति चैवैनं जैगीषव्यः कथञ्चन ।
काष्ठभूतोऽऽश्रमपदे वसति स्म महातपाः ॥ ०२० ॥

तं दृष्ट्वा चाप्लुतं तोये सागरे सागरोपमम् ।
प्रविष्टमाश्रमं चापि पूर्वमेव ददर्श सः ॥ ०२१ ॥

असितो देवलो राजंश्चिन्तयामास बुद्धिमान् ।
दृष्टः प्रभावं तपसो जैगीषव्यस्य योगजम् ॥ ०२२ ॥

चिन्तयामास राजेन्द्र तदा स मुनिसत्तमः ।
मया दृष्टः समुद्रे च आश्रमे च कथं त्वयम् ॥ ०२३ ॥

एवं विगणयन्नेव स मुनिर्मन्त्रपारगः ।
उत्पपाताश्रमात्तस्मादन्तरिक्षं विशां पते ॥ ०२४ ॥

जिज्ञासार्थं तदा भिक्षोर्जैगीषव्यस्य देवलः ॥ ०२४ ॥

सोऽन्तरिक्षचरान्सिद्धान्समपश्यत्समाहितान् ।
जैगीषव्यं च तैः सिद्धैः पूज्यमानमपश्यत ॥ ०२५ ॥

ततोऽसितः सुसंरब्धो व्यवसायी दृढव्रतः ।
अपश्यद्वै दिवं यान्तं जैगीषव्यं स देवलः ॥ ०२६ ॥

तस्माच्च पितृलोकं तं व्रजन्तं सोऽन्वपश्यत ।
पितृलोकाच्च तं यान्तं याम्यं लोकमपश्यत ॥ ०२७ ॥

तस्मादपि समुत्पत्य सोमलोकमभिष्टुतम् ।
व्रजन्तमन्वपश्यत्स जैगीषव्यं महामुनिम् ॥ ०२८ ॥

लोकान्समुत्पतन्तं च शुभानेकान्तयाजिनाम् ।
ततोऽग्निहोत्रिणां लोकांस्तेभ्यश्चाप्युत्पपात ह ॥ ०२९ ॥

दर्शं च पौर्णमासं च ये यजन्ति तपोधनाः ।
तेभ्यः स ददृशे धीमा.ण्ल्लोकेभ्यः पशुयाजिनाम् ॥ ०३० ॥

व्रजन्तं लोकममलमपश्यद्देवपूजितम् ॥ ०३० ॥

चातुर्मास्यैर्बहुविधैर्यजन्ते ये तपोधनाः ।
तेषां स्थानं तथा यान्तं तथाग्निष्टोमयाजिनाम् ॥ ०३१ ॥

अग्निष्टुतेन च तथा ये यजन्ति तपोधनाः ।
तत्स्थानमनुसंप्राप्तमन्वपश्यत देवलः ॥ ०३२ ॥

वाजपेयं क्रतुवरं तथा बहुसुवर्णकम् ।
आहरन्ति महाप्राज्ञास्तेषां लोकेष्वपश्यत ॥ ०३३ ॥

यजन्ते पुण्डरीकेण राजसूयेन चैव ये ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ०३४ ॥

अश्वमेधं क्रतुवरं नरमेधं तथैव च ।
आहरन्ति नरश्रेष्ठास्तेषां लोकेष्वपश्यत ॥ ०३५ ॥

सर्वमेधं च दुष्प्रापं तथा सौत्रामणिं च ये ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ०३६ ॥

द्वादशाहैश्च सत्रैर्ये यजन्ते विविधैर्नृप ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ०३७ ॥

मित्रावरुणयोर्लोकानादित्यानां तथैव च ।
सलोकतामनुप्राप्तमपश्यत ततोऽसितः ॥ ०३८ ॥

रुद्राणां च वसूनां च स्थानं यच्च बृहस्पतेः ।
तानि सर्वाण्यतीतं च समपश्यत्ततोऽसितः ॥ ०३९ ॥

आरुह्य च गवां लोकं प्रयान्तं ब्रह्मसत्रिणाम् ।
लोकानपश्यद्गच्छन्तं जैगीषव्यं ततोऽसितः ॥ ०४० ॥

त्री.ण्ल्लोकानपरान्विप्रमुत्पतन्तं स्वतेजसा ।
पतिव्रतानां लोकांश्च व्रजन्तं सोऽन्वपश्यत ॥ ०४१ ॥

ततो मुनिवरं भूयो जैगीषव्यमथासितः ।
नान्वपश्यत योगस्थमन्तर्हितमरिंदम ॥ ०४२ ॥

सोऽचिन्तयन्महाभागो जैगीषव्यस्य देवलः ।
प्रभावं सुव्रतत्वं च सिद्धिं योगस्य चातुलाम् ॥ ०४३ ॥

असितोऽपृच्छत तदा सिद्धा.ण्ल्लोकेषु सत्तमान् ।

प्रयतः प्राञ्जलिर्भूत्वा धीरस्तान्ब्रह्मसत्रिणः ॥ ०४४ ॥

जैगीषव्यं न पश्यामि तं शंसत महौजसम् ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ ०४५ ॥

सिद्धा ऊचुः ॥

शृणु देवल भूतार्थं शंसतां नो दृढव्रत ।
जैगीषव्यो गतो लोकं शाश्वतं ब्रह्मणोऽव्ययम् ॥ ०४६ ॥

स श्रुत्वा वचनं तेषां सिद्धानां ब्रह्मसत्रिणाम् ।
असितो देवलस्तूर्णमुत्पपात पपात च ॥ ०४७ ॥

ततः सिद्धास्त ऊचुर्हि देवलं पुनरेव ह ।
न देवल गतिस्तत्र तव गन्तुं तपोधन ॥ ०४८ ॥

ब्रह्मणः सदनं विप्र जैगीषव्यो यदाप्तवान् ॥ ०४८ ॥

तेषां तद्वचनं श्रुत्वा सिद्धानां देवलः पुनः ।
आनुपूर्व्येण लोकांस्तान्सर्वानवततार ह ॥ ०४९ ॥

स्वमाश्रमपदं पुण्यमाजगाम पतङ्गवत् ।
प्रविशन्नेव चापश्यज्जैगीषव्यं स देवलः ॥ ०५० ॥

ततो बुद्ध्या व्यगणयद्देवलो धर्मयुक्तया ।
दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजम् ॥ ०५१ ॥

ततोऽब्रवीन्महात्मानं जैगीषव्यं स देवलः ।
विनयावनतो राजन्नुपसर्प्य महामुनिम् ॥ ०५२ ॥

मोक्षधर्मं समास्थातुमिच्छेयं भगवन्नहम् ॥ ०५२ ॥

तस्य तद्वचनं श्रुत्वा उपदेशं चकार सः ।
विधिं च योगस्य परं कार्याकार्यं च शास्त्रतः ॥ ०५३ ॥

संन्यासकृतबुद्धिं तं ततो दृष्ट्वा महातपाः ।
सर्वाश्चास्य क्रियाश्चक्रे विधिदृष्टेन कर्मणा ॥ ०५४ ॥

संन्यासकृतबुद्धिं तं भूतानि पितृभिः सह ।
ततो दृष्ट्वा प्ररुरुदुः कोऽस्मान्संविभजिष्यति ॥ ०५५ ॥

देवलस्तु वचः श्रुत्वा भूतानां करुणं तथा ।
दिशो दश व्याहरतां मोक्षं त्यक्तुं मनो दधे ॥ ०५६ ॥

ततस्तु फलमूलानि पवित्राणि च भारत ।
पुष्पाण्योषधयश्चैव रोरूयन्ते सहस्रशः ॥ ०५७ ॥

पुनर्नो देवलः क्षुद्रो नूनं छेत्स्यति दुर्मतिः ।
अभयं सर्वभूतेभ्यो यो दत्त्वा नावबुध्यते ॥ ०५८ ॥

ततो भूयो व्यगणयत्स्वबुद्ध्या मुनिसत्तमः ।
मोक्षे गार्हस्थ्यधर्मे वा किं नु श्रेयस्करं भवेत् ॥ ०५९ ॥

इति निश्चित्य मनसा देवलो राजसत्तम ।
त्यक्त्वा गार्हस्थ्यधर्मं स मोक्षधर्ममरोचयत् ॥ ०६० ॥

एवमादीनि सञ्चिन्त्य देवलो निश्चयात्ततः ।
प्राप्तवान्परमां सिद्धिं परं योगं च भारत ॥ ०६१ ॥

ततो देवाः समागम्य बृहस्पतिपुरोगमाः ।
जैगीषव्यं तपश्चास्य प्रशंसन्ति तपस्विनः ॥ ०६२ ॥

अथाब्रवीदृषिवरो देवान्वै नारदस्तदा ।
जैगीषव्ये तपो नास्ति विस्मापयति योऽसितम् ॥ ०६३ ॥

तमेवंवादिनं धीरं प्रत्यूचुस्ते दिवौकसः ।
मैवमित्येव शंसन्तो जैगीषव्यं महामुनिम् ॥ ०६४ ॥

तत्राप्युपस्पृश्य ततो महात्मा ; दत्त्वा च वित्तं हलभृद्द्विजेभ्यः ।
अवाप्य धर्मं परमार्यकर्मा ; जगाम सोमस्य महत्स तीर्थम् ॥ ०६५ ॥

---

# अध्याय ०५०

वैशंपायन उवाच ॥

यत्रेजिवानुडुपती राजसूयेन भारत ।
तस्मिन्वृत्ते महानासीत्सङ्ग्रामस्तारकामयः ॥ ००१ ॥

तत्राप्युपस्पृश्य बलो दत्त्वा दानानि चात्मवान् ।
सारस्वतस्य धर्मात्मा मुनेस्तीर्थं जगाम ह ॥ ००२ ॥

यत्र द्वादशवार्षिक्यामनावृष्ट्यां द्विजोत्तमान् ।
वेदानध्यापयामास पुरा सारस्वतो मुनिः ॥ ००३ ॥

जनमेजय उवाच ॥

कथं द्वादशवार्षिक्यामनावृष्ट्यां तपोधनः ।
वेदानध्यापयामास पुरा सारस्वतो मुनिः ॥ ००४ ॥

वैशंपायन उवाच ॥

आसीत्पूर्वं महाराज मुनिर्धीमान्महातपाः ।
दधीच इति विख्यातो ब्रह्मचारी जितेन्द्रियः ॥ ००५ ॥

तस्यातितपसः शक्रो बिभेति सततं विभो ।
न स लोभयितुं शक्यः फलैर्बहुविधैरपि ॥ ००६ ॥

प्रलोभनार्थं तस्याथ प्राहिणोत्पाकशासनः ।
दिव्यामप्सरसं पुण्यां दर्शनीयामलम्बुसाम् ॥ ००७ ॥

तस्य तर्पयतो देवान्सरस्वत्यां महात्मनः ।
समीपतो महाराज सोपातिष्ठत भामिनी ॥ ००८ ॥

तां दिव्यवपुषं दृष्ट्वा तस्यर्षेर्भावितात्मनः ।
रेतः स्कन्नं सरस्वत्यां तत्सा जग्राह निम्नगा ॥ ००९ ॥

कुक्षौ चाप्यदधद्दृष्ट्वा तद्रेतः पुरुषर्षभ ।
सा दधार च तं गर्भं पुत्रहेतोर्महानदी ॥ ०१० ॥

सुषुवे चापि समये पुत्रं सा सरितां वरा ।
जगाम पुत्रमादाय तमृषिं प्रति च प्रभो ॥ ०११ ॥

ऋषिसंसदि तं दृष्ट्वा सा नदी मुनिसत्तमम् ।
ततः प्रोवाच राजेन्द्र ददती पुत्रमस्य तम् ॥ ०१२ ॥

ब्रह्मर्षे तव पुत्रोऽयं त्वद्भक्त्या धारितो मया ॥ ०१२ ॥

दृष्ट्वा तेऽप्सरसं रेतो यत्स्कन्नं प्रागलम्बुसाम् ।
तत्कुक्षिणा वै ब्रह्मर्षे त्वद्भक्त्या धृतवत्यहम् ॥ ०१३ ॥

न विनाशमिदं गच्छेत्त्वत्तेज इति निश्चयात् ।
प्रतिगृह्णीष्व पुत्रं स्वं मया दत्तमनिन्दितम् ॥ ०१४ ॥

इत्युक्तः प्रतिजग्राह प्रीतिं चावाप उत्तमाम् ।
मन्त्रवच्चोपजिघ्रत्तं मूर्ध्नि प्रेम्णा द्विजोत्तमः ॥ ०१५ ॥

परिष्वज्य चिरं कालं तदा भरतसत्तम ।
सरस्वत्यै वरं प्रादात्प्रीयमाणो महामुनिः ॥ ०१६ ॥

विश्वे देवाः सपितरो गन्धर्वाप्सरसां गणाः ।
तृप्तिं यास्यन्ति सुभगे तर्प्यमाणास्तवाम्भसा ॥ ०१७ ॥

इत्युक्त्वा स तु तुष्टाव वचोभिर्वै महानदीम् ।
प्रीतः परमहृष्टात्मा यथावच्छृणु पार्थिव ॥ ०१८ ॥

प्रसृतासि महाभागे सरसो ब्रह्मणः पुरा ।
जानन्ति त्वां सरिच्छ्रेष्ठे मुनयः संशितव्रताः ॥ ०१९ ॥

मम प्रियकरी चापि सततं प्रियदर्शने ।
तस्मात्सारस्वतः पुत्रो महांस्ते वरवर्णिनि ॥ ०२० ॥

तवैव नाम्ना प्रथितः पुत्रस्ते लोकभावनः ।
सारस्वत इति ख्यातो भविष्यति महातपाः ॥ ०२१ ॥

एष द्वादशवार्षिक्यामनावृष्ट्यां द्विजर्षभान् ।
सारस्वतो महाभागे वेदानध्यापयिष्यति ॥ ०२२ ॥

पुण्याभ्यश्च सरिद्भ्यस्त्वं सदा पुण्यतमा शुभे ।
भविष्यसि महाभागे मत्प्रसादात्सरस्वति ॥ ०२३ ॥

एवं सा संस्तुता तेन वरं लब्ध्वा महानदी ।

पुत्रमादाय मुदिता जगाम भरतर्षभ ॥ ०२४ ॥

एतस्मिन्नेव काले तु विरोधे देवदानवैः ।
शक्रः प्रहरणान्वेषी लोकांस्त्रीन्विचचार ह ॥ ०२५ ॥

न चोपलेभे भगवाञ्शक्रः प्रहरणं तदा ।
यद्वै तेषां भवेद्योग्यं वधाय विबुधद्विषाम् ॥ ०२६ ॥

ततोऽब्रवीत्सुराञ्शक्रो न मे शक्या महासुराः ।
ऋतेऽस्थिभिर्दधीचस्य निहन्तुं त्रिदशद्विषः ॥ ०२७ ॥

तस्माद्गत्वा ऋषिश्रेष्ठो याच्यतां सुरसत्तमाः ।
दधीचास्थीनि देहीति तैर्वधिष्यामहे रिपून् ॥ ०२८ ॥

स देवैर्याचितोऽस्थीनि यत्नादृषिवरस्तदा ।
प्राणत्यागं कुरुष्वेति चकारैवाविचारयन् ॥ ०२९ ॥

स लोकानक्षयान्प्राप्तो देवप्रियकरस्तदा ॥ ०२९ ॥

तस्यास्थिभिरथो शक्रः संप्रहृष्टमनास्तदा ।
कारयामास दिव्यानि नानाप्रहरणान्युत ॥ ०३० ॥

वज्राणि चक्राणि गदा गुरुदण्डांश्च पुष्कलान् ॥ ०३० ॥

स हि तीव्रेण तपसा संभृतः परमर्षिणा ।
प्रजापतिसुतेनाथ भृगुणा लोकभावनः ॥ ०३१ ॥

अतिकायः स तेजस्वी लोकसारविनिर्मितः ।
जज्ञे शैलगुरुः प्रांशुर्महिम्ना प्रथितः प्रभुः ॥ ०३२ ॥

नित्यमुद्विजते चास्य तेजसा पाकशासनः ॥ ०३२ ॥

तेन वज्रेण भगवान्मन्त्रयुक्तेन भारत ।
भृशं क्रोधविसृष्टेन ब्रह्मतेजोभवेन च ॥ ०३३ ॥

दैत्यदानववीराणां जघान नवतीर्नव ॥ ०३३ ॥

अथ काले व्यतिक्रान्ते महत्यतिभयङ्करे ।
अनावृष्टिरनुप्राप्ता राजन्द्वादशवार्षिकी ॥ ०३४ ॥

तस्यां द्वादशवार्षिक्यामनावृष्ट्यां महर्षयः ।
वृत्त्यर्थं प्राद्रवन्राजन्क्षुधार्ताः सर्वतोदिशम् ॥ ०३५ ॥

दिग्भ्यस्तान्प्रद्रुतान्दृष्ट्वा मुनिः सारस्वतस्तदा ।
गमनाय मतिं चक्रे तं प्रोवाच सरस्वती ॥ ०३६ ॥

न गन्तव्यमितः पुत्र तवाहारमहं सदा ।
दास्यामि मत्स्यप्रवरानुष्यतामिह भारत ॥ ०३७ ॥

इत्युक्तस्तर्पयामास स पितॄन्देवतास्तथा ।
आहारमकरोन्नित्यं प्राणान्वेदांश्च धारयन् ॥ ०३८ ॥

अथ तस्यामतीतायामनावृष्ट्यां महर्षयः ।
अन्योन्यं परिपप्रच्छुः पुनः स्वाध्यायकारणात् ॥ ०३९ ॥

तेषां क्षुधापरीतानां नष्टा वेदा विधावताम् ।
सर्वेषामेव राजेन्द्र न कश्चित्प्रतिभानवान् ॥ ०४० ॥

अथ कश्चिदृषिस्तेषां सारस्वतमुपेयिवान् ।
कुर्वाणं संशितात्मानं स्वाध्यायमृषिसत्तमम् ॥ ०४१ ॥

स गत्वाचष्ट तेभ्यश्च सारस्वतमतिप्रभम् ।

स्वाध्यायममरप्रख्यं कुर्वाणं विजने जने ॥ ०४२ ॥

ततः सर्वे समाजग्मुस्तत्र राजन्महर्षयः ।
सारस्वतं मुनिश्रेष्ठमिदमूचुः समागताः ॥ ०४३ ॥

अस्मानध्यापयस्वेति तानुवाच ततो मुनिः ।
शिष्यत्वमुपगच्छध्वं विधिवद्धो ममेत्युत ॥ ०४४ ॥

ततोऽब्रवीदृषिगणो बालस्त्वमसि पुत्रक ।
स तानाह न मे धर्मो नश्येदिति पुनर्मुनीन् ॥ ०४५ ॥

यो ह्यधर्मेण विब्रूयाद्गृह्णीयाद्वाप्यधर्मतः ।
म्रियतां तावुभौ क्षिप्रं स्यातां वा वैरिणावुभौ ॥ ०४६ ॥

न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ०४७ ॥

एतच्छ्रुत्वा वचस्तस्य मुनयस्ते विधानतः ।
तस्माद्वेदाननुप्राप्य पुनर्धर्मं प्रचक्रिरे ॥ ०४८ ॥

षष्टिर्मुनिसहस्राणि शिष्यत्वं प्रतिपेदिरे ।
सारस्वतस्य विप्रर्षेर्वेदस्वाध्यायकारणात् ॥ ०४९ ॥

मुष्टिं मुष्टिं ततः सर्वे दर्भाणां तेऽभ्युपाहरन् ।
तस्यासनार्थं विप्रर्षेर्बालस्यापि वशे स्थिताः ॥ ०५० ॥

तत्रापि दत्त्वा वसु रौहिणेयो ; महाबलः केशवपूर्वजोऽथ ।
जगाम तीर्थं मुदितः क्रमेण ; ख्यातं महद्वृद्धकन्या स्म यत्र ॥ ०५१ ॥

# वृद्धकन्योपाख्यानम्

## अध्याय ०५१

जनमेजय उवाच ॥

कथं कुमारी भगवंस्तपोयुक्ता ह्यभूत्पुरा ।
किमर्थं च तपस्तेपे को वास्या नियमोऽभवत् ॥ ००१ ॥

सुदुष्करमिदं ब्रह्मंस्त्वत्तः श्रुतमनुत्तमम् ।
आख्याहि तत्त्वमखिलं यथा तपसि सा स्थिता ॥ ००२ ॥

वैशंपायन उवाच ॥

ऋषिरासीन्महावीर्यः कुणिर्गार्ग्यो महायशाः ।
स तप्त्वा विपुलं राजंस्तपो वै तपतां वरः ॥ ००३ ॥

मानसीं स सुतां सुभ्रूं समुत्पादितवान्विभुः ॥ ००३ ॥

तां च दृष्ट्वा भृशं प्रीतः कुणिर्गार्ग्यो महायशाः ।
जगाम त्रिदिवं राजन्संत्यज्येह कलेवरम् ॥ ००४ ॥

सुभ्रूः सा ह्यथ कल्याणी पुण्डरीकनिभेक्षणा ।
महता तपसोग्रेण कृत्वाश्रममनिन्दिता ॥ ००५ ॥

उपवासैः पूजयन्ती पितृन्देवांश्च सा पुरा ।
तस्यास्तु तपसोग्रेण महान्कालोऽत्यगान्नृप ॥ ००६ ॥

सा पित्रा दीयमानापि भर्त्रे नैच्छदनिन्दिता ।
आत्मनः सदृशं सा तु भर्तारं नान्वपश्यत ॥ ००७ ॥

ततः सा तपसोग्रेण पीडयित्वात्मनस्तनुम् ।
पितृदेवार्चनरता बभूव विजने वने ॥ ००८ ॥

सात्मानं मन्यमानापि कृतकृत्यं श्रमान्विता ।
वार्द्धकेन च राजेन्द्र तपसा चैव कर्शिता ॥ ००९ ॥

सा नाशकद्यदा गन्तुं पदात्पदमपि स्वयम् ।
चकार गमने बुद्धिं परलोकाय वै तदा ॥ ०१० ॥

मोक्तुकामां तु तां दृष्ट्वा शरीरं नारदोऽब्रवीत् ।
असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे ॥ ०११ ॥

एवं हि श्रुतमस्माभिर्देवलोके महाव्रते ।
तपः परमकं प्राप्तं न तु लोकास्त्वया जिताः ॥ ०१२ ॥

तन्नारदवचः श्रुत्वा साब्रवीदृषिसंसदि ।
तपसोऽर्धं प्रयच्छामि पाणिग्राहस्य सत्तमाः ॥ ०१३ ॥

इत्युक्ते चास्या जग्राह पाणिं गालवसंभवः ।
ऋषिः प्राक्शृङ्गवान्नाम समयं चेदमब्रवीत् ॥ ०१४ ॥

समयेन तवाद्याहं पाणिं स्प्रक्ष्यामि शोभने ।
यद्येकरात्रं वस्तव्यं त्वया सह मयेति ह ॥ ०१५ ॥

तथेति सा प्रतिश्रुत्य तस्मै पाणिं ददौ तदा ।
चक्रे च पाणिग्रहणं तस्योद्वाहं च गालविः ॥ ०१६ ॥

सा रात्रावभवद्राजंस्तरुणी देववर्णिनी ।
दिव्याभरणवस्त्रा च दिव्यस्रगनुलेपना ॥ ०१७ ॥

तां दृष्ट्वा गालविः प्रीतो दीपयन्तीमिवात्मना ।

उवास च क्षपामेकां प्रभाते साब्रवीच्च तम्  ॥ ०१८  ॥

यस्त्वया समयो विप्र कृतो मे तपतां वर ।
तेनोषितास्मि भद्रं ते स्वस्ति तेऽस्तु व्रजाम्यहम्  ॥ ०१९  ॥

सानुज्ञाताब्रवीद्भूयो योऽस्मिंस्तीर्थे समाहितः ।
वत्स्यते रजनीमेकां तर्पयित्वा दिवौकसः  ॥ ०२०  ॥

चत्वारिंशतमष्टौ च द्वे चाष्टौ सम्यगाचरेत् ।
यो ब्रह्मचर्यं वर्षाणि फलं तस्य लभेत सः  ॥ ०२१  ॥

एवमुक्त्वा ततः साध्वी देहं त्यक्त्वा दिवं गता  ॥ ०२१  ॥

ऋषिरप्यभवद्दीनस्तस्या रूपं विचिन्तयन् ।
समयेन तपोऽर्धं च कृच्छ्रात्प्रतिगृहीतवान्  ॥ ०२२  ॥

साधयित्वा तदात्मानं तस्याः स गतिमन्वयात् ।
दुःखितो भरतश्रेष्ठ तस्या रूपबलात्कृतः  ॥ ०२३  ॥

एतत्ते वृद्धकन्याया व्याख्यातं चरितं महत्  ॥ ०२३  ॥

तत्रस्थश्चापि शुश्राव हतं शल्यं हलायुधः ।
तत्रापि दत्त्वा दानानि द्विजातिभ्यः परंतप  ॥ ०२४  ॥

शुशोच शल्यं सङ्ग्रामे निहतं पाण्डवैस्तदा  ॥ ०२४  ॥

समन्तपञ्चकद्वारात्ततो निष्क्रम्य माधवः ।
पप्रच्छर्षिगणान्रामः कुरुक्षेत्रस्य यत्फलम्  ॥ ०२५  ॥

ते पृष्टा यदुसिंहेन कुरुक्षेत्रफलं विभो ।
समाचख्युर्महात्मानस्तस्मै सर्वं यथातथम्  ॥ ०२६  ॥

# अध्याय ०५२

ऋषय ऊचुः ॥

प्रजापतेरुत्तरवेदिरुच्यते ; सनातना राम समन्तपञ्चकम् ।
समीजिरे यत्र पुरा दिवौकसो ; वरेण सत्रेण महावरप्रदाः ॥ ००१ ॥

पुरा च राजर्षिवरेण धीमता ; बहूनि वर्षाण्यमितेन तेजसा ।
प्रकृष्टमेतत्कुरुणा महात्मना ; ततः कुरुक्षेत्रमितीह पप्रथे ॥ ००२ ॥

राम उवाच ॥

किमर्थं कुरुणा कृष्टं क्षेत्रमेतन्महात्मना ।
एतदिच्छाम्यहं श्रोतुं कथ्यमानं तपोधनाः ॥ ००३ ॥

ऋषय ऊचुः ॥

पुरा किल कुरुं राम कृषन्तं सततोत्थितम् ।
अभ्येत्य शक्रस्त्रिदिवात्पर्यपृच्छत कारणम् ॥ ००४ ॥

किमिदं वर्तते राजन्प्रयत्नेन परेण च ।
राजर्षे किमभिप्रेतं येनेयं कृष्यते क्षितिः ॥ ००५ ॥

कुरुरुवाच ॥

इह ये पुरुषाः क्षेत्रे मरिष्यन्ति शतक्रतो ।
ते गमिष्यन्ति सुकृता.ण्ल्लोकान्पापविवर्जितान् ॥ ००६ ॥

अवहस्य ततः शक्रो जगाम त्रिदिवं प्रभुः ।
राजर्षिरप्यनिर्विण्णः कर्षत्येव वसुंधराम् ॥ ००७ ॥

आगम्यागम्य चैवैनं भूयो भूयोऽवहस्य च ।
शतक्रतुरनिर्विण्णं पृष्ट्वा पृष्ट्वा जगाम ह ॥ ००८ ॥

यदा तु तपसोग्रेण चकर्ष वसुधां नृपः ।
ततः शक्रोऽब्रवीद्देवान्राजर्षेर्यच्चिकीर्षितम् ॥ ००९ ॥

तच्छ्रुत्वा चाब्रुवन्देवाः सहस्राक्षमिदं वचः ।
वरेण च्छन्द्यतां शक्र राजर्षिर्यदि शक्यते ॥ ०१० ॥

यदि ह्यत्र प्रमीता वै स्वर्गं गच्छन्ति मानवाः ।
अस्माननिष्ट्वा क्रतुभिर्भागो नो न भविष्यति ॥ ०११ ॥

आगम्य च ततः शक्रस्तदा राजर्षिमब्रवीत् ।
अलं खेदेन भवतः क्रियतां वचनं मम ॥ ०१२ ॥

मानवा ये निराहारा देहं त्यक्ष्यन्त्यतन्द्रिताः ।
युधि वा निहताः सम्यगपि तिर्यग्गता नृप ॥ ०१३ ॥

ते स्वर्गभाजो राजेन्द्र भवन्त्विति महामते ।
तथास्त्विति ततो राजा कुरुः शक्रमुवाच ह ॥ ०१४ ॥

ततस्तमभ्यनुज्ञाप्य प्रहृष्टेनान्तरात्मना ।
जगाम त्रिदिवं भूयः क्षिप्रं बलनिषूदनः ॥ ०१५ ॥

एवमेतद्यदुश्रेष्ठ कृष्टं राजर्षिणा पुरा ।
शक्रेण चाप्यनुज्ञातं पुण्यं प्राणान्विमुञ्चताम् ॥ ०१६ ॥

अपि चात्र स्वयं शक्रो जगौ गाथां सुराधिपः ।
कुरुक्षेत्रे निबद्धां वै तां शृणुष्व हलायुध ॥ ०१७ ॥

पांसवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ॥ ०१८ ॥

सुरर्षभा ब्राह्मणसत्तमाश्च ; तथा नृगाद्या नरदेवमुख्याः ।
इष्ट्वा महार्हैः क्रतुभिर्नृसिंह ; संन्यस्य देहान्सुगतिं प्रपन्नाः ॥ ०१९ ॥

तरन्तुकारन्तुकयोर्यदन्तरं ; रामह्रदानां च मचक्रुकस्य ।
एतत्कुरुक्षेत्रसमन्तपञ्चकं ; प्रजापतेरुत्तरवेदिरुच्यते ॥ ०२० ॥

शिवं महत्पुण्यमिदं दिवौकसां ; सुसंमतं स्वर्गगुणैः समन्वितम् ।
अतश्च सर्वेऽपि वसुंधराधिपा ; हता गमिष्यन्ति महात्मनां गतिम् ॥ ०२१ ॥

---

# अध्याय ०५३

वैशंपायन उवाच ॥

कुरुक्षेत्रं ततो दृष्ट्वा दत्त्वा दायांश्च सात्वतः ।
आश्रमं सुमहद्दिव्यमगमज्जनमेजय ॥ ००१ ॥

मधूकाम्रवनोपेतं प्लक्षन्यग्रोधसङ्कुलम् ।
चिरिबिल्वयुतं पुण्यं पनसार्जुनसङ्कुलम् ॥ ००२ ॥

तं दृष्ट्वा यादवश्रेष्ठः प्रवरं पुण्यलक्षणम् ।
पप्रच्छ तानृषीन्सर्वान्कस्याश्रमवरस्त्वयम् ॥ ००३ ॥

ते तु सर्वे महात्मानमूचू राजन्हलायुधम् ।
श्रृणु विस्तरतो राम यस्यायं पूर्वमाश्रमः ॥ ००४ ॥

अत्र विष्णुः पुरा देवस्तप्तवांस्तप उत्तमम् ।
अत्रास्य विधिवद्यज्ञाः सर्वे वृत्ताः सनातनाः ॥ ००५ ॥

अत्रैव ब्राह्मणी सिद्धा कौमारब्रह्मचारिणी ।
योगयुक्ता दिवं याता तपःसिद्धा तपस्विनी ॥ ००६ ॥

बभूव श्रीमती राजञ्शाण्डिल्यस्य महात्मनः ।
सुता धृतव्रता साध्वी नियता ब्रह्मचारिणी ॥ ००७ ॥

सा तु प्राप्य परं योगं गता स्वर्गमनुत्तमम् ।
भुक्त्वाश्रमेऽश्वमेधस्य फलं फलवतां शुभा ॥ ००८ ॥

गता स्वर्गं महाभागा पूजिता नियतात्मभिः ॥ ००८ ॥

अभिगम्याश्रमं पुण्यं दृष्ट्वा च यदुपुङ्गवः ।
ऋषींस्तानभिवाद्याथ पार्श्वे हिमवतोऽच्युतः ॥ ००९ ॥

स्कन्धावाराणि सर्वाणि निवर्त्यारुरुहेऽचलम् ॥ ००९ ॥

नातिदूरं ततो गत्वा नगं तालध्वजो बली ।
पुण्यं तीर्थवरं दृष्ट्वा विस्मयं परमं गतः ॥ ०१० ॥

प्रभवं च सरस्वत्याः प्लक्षप्रस्रवणं बलः ।
संप्राप्तः कारपचनं तीर्थप्रवरमुत्तमम् ॥ ०११ ॥

हलायुधस्तत्र चापि दत्त्वा दानं महाबलः ।
आप्लुतः सलिले शीते तस्माच्चापि जगाम ह ॥ ०१२ ॥

आश्रमं परमप्रीतो मित्रस्य वरुणस्य च ॥ ०१२ ॥

इन्द्रोऽग्निरर्यमा चैव यत्र प्राक्प्रीतिमाप्नुवन् ।
तं देशं कारपचनाद्यमुनायां जगाम ह ॥ ०१३ ॥

स्नात्वा तत्रापि धर्मात्मा परां तुष्टिमवाप्य च ।
ऋषिभिश्चैव सिद्धैश्च सहितो वै महाबलः ॥ ०१४ ॥

उपविष्टः कथाः शुभ्राः शुश्राव यदुपुङ्गवः ॥ ०१४ ॥

तथा तु तिष्ठतां तेषां नारदो भगवानृषिः ।
आजगामाथ तं देशं यत्र रामो व्यवस्थितः ॥ ०१५ ॥

जटामण्डलसंवीतः स्वर्णचीरी महातपाः ।
हेमदण्डधरो राजन्कमण्डलुधरस्तथा ॥ ०१६ ॥

कच्छपीं सुखशब्दां तां गृह्य वीणां मनोरमाम् ।
नृत्ये गीते च कुशलो देवब्राह्मणपूजितः ॥ ०१७ ॥

प्रकर्ता कलहानां च नित्यं च कलहप्रियः ।
तं देशमगमद्यत्र श्रीमान्रामो व्यवस्थितः ॥ ०१८ ॥

प्रत्युत्थाय तु ते सर्वे पूजयित्वा यतव्रतम् ।
देवर्षिं पर्यपृच्छन्त यथावृत्तं कुरून्प्रति ॥ ०१९ ॥

ततोऽस्याकथयद्राजन्नारदः सर्वधर्मवित् ।
सर्वमेव यथावृत्तमतीतं कुरुसङ्क्षयम् ॥ ०२० ॥

ततोऽब्रवीद्रौहिणेयो नारदं दीनया गिरा ।
किमवस्थं तु तत्क्षत्रं ये च तत्राभवन्नृपाः ॥ ०२१ ॥

श्रुतमेतन्मया पूर्वं सर्वमेव तपोधन ।
विस्तरश्रवणे जातं कौतूहलमतीव मे ॥ ०२२ ॥

नारद उवाच ॥

पूर्वमेव हतो भीष्मो द्रोणः सिन्धुपतिस्तथा ।
हतो वैकर्तनः कर्णः पुत्राश्चास्य महारथाः ॥ ०२३ ॥

भूरिश्रवा रौहिणेय मद्रराजश्च वीर्यवान् ।
एते चान्ये च बहवस्तत्र तत्र महाबलाः ॥ ०२४ ॥

प्रियान्प्राणान्परित्यज्य प्रियार्थं कौरवस्य वै ।
राजानो राजपुत्राश्च समरेष्वनिवर्तिनः ॥ ०२५ ॥

अहतांस्तु महाबाहो शृणु मे तत्र माधव ।
धार्तराष्ट्रबले शेषाः कृपो भोजश्च वीर्यवान् ॥ ०२६ ॥

अश्वत्थामा च विक्रान्तो भग्नसैन्या दिशो गताः ॥ ०२६ ॥

दुर्योधनो हते सैन्ये प्रद्रुतेषु कृपादिषु ।
ह्रदं द्वैपायनं नाम विवेश भृशदुःखितः ॥ ०२७ ॥

शयानं धार्तराष्ट्रं तु स्तम्भिते सलिले तदा ।
पाण्डवाः सह कृष्णेन वाग्भिरुग्राभिरार्दयन् ॥ ०२८ ॥

स तुद्यमानो बलवान्वाग्भी राम समन्ततः ।
उत्थितः प्राग्घ्रदाद्वीरः प्रगृह्य महतीं गदाम् ॥ ०२९ ॥

स चाप्युपगतो युद्धं भीमेन सह सांप्रतम् ।
भविष्यति च तत्सद्यस्तयो राम सुदारुणम् ॥ ०३० ॥

यदि कौतूहलं तेऽस्ति व्रज माधव मा चिरम् ।
पश्य युद्धं महाघोरं शिष्ययोर्यदि मन्यसे ॥ ०३१ ॥

वैशंपायन उवाच ॥

नारदस्य वचः श्रुत्वा तानभ्यर्च्य द्विजर्षभान् ।
सर्वान्विसर्जयामास ये तेनाभ्यागताः सह ॥ ०३२ ॥

गम्यतां द्वारकां चेति सोऽन्वशादनुयायिनः ॥ ०३२ ॥

सोऽवतीर्याचलश्रेष्ठात्प्लक्षप्रस्रवणाच्छुभात् ।
ततः प्रीतमना रामः श्रुत्वा तीर्थफलं महत् ॥ ०३३ ॥

विप्राणां संनिधौ श्लोकमगायदिदमच्युतः ॥ ०३३ ॥

सरस्वतीवाससमा कुतो रतिः ; सरस्वतीवाससमाः कुतो गुणाः ।
सरस्वतीं प्राप्य दिवं गता जनाः ; सदा स्मरिष्यन्ति नदीं सरस्वतीम् ॥ ०३४ ॥

सरस्वती सर्वनदीषु पुण्या ; सरस्वती लोकसुखावहा सदा ।
सरस्वतीं प्राप्य जनाः सुदुष्कृताः ; सदा न शोचन्ति परत्र चेह च ॥ ०३५ ॥

ततो मुहुर्मुहुः प्रीत्या प्रेक्षमाणः सरस्वतीम् ।
हयैर्युक्तं रथं शुभ्रमातिष्ठत परंतपः ॥ ०३६ ॥

स शीघ्रगामिना तेन रथेन यदुपुङ्गवः ।
दिदृक्षुरभिसंप्राप्तः शिष्ययुद्धमुपस्थितम् ॥ ०३७ ॥

# गदायुद्धपर्व

## अध्याय ०५४

वैशंपायन उवाच ॥

एवं तदभवद्युद्धं तुमुलं जनमेजय ।
यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ ००१ ॥

रामं संनिहितं दृष्ट्वा गदायुद्ध उपस्थिते ।
मम पुत्रः कथं भीमं प्रत्ययुध्यत सञ्जय ॥ ००२ ॥

सञ्जय उवाच ॥

रामसांनिध्यमासाद्य पुत्रो दुर्योधनस्तव ।
युद्धकामो महाबाहुः समहृष्यत वीर्यवान् ॥ ००३ ॥

दृष्ट्वा लाङ्गलिनं राजा प्रत्युत्थाय च भारत ।
प्रीत्या परमया युक्तो युधिष्ठिरमथाब्रवीत् ॥ ००४ ॥

समन्तपञ्चकं क्षिप्रमितो याम विशां पते ।
प्रथितोत्तरवेदी सा देवलोके प्रजापतेः ॥ ००५ ॥

तस्मिन्महापुण्यतमे त्रैलोक्यस्य सनातने ।
सङ्ग्रामे निधनं प्राप्य ध्रुवं स्वर्गो भविष्यति ॥ ००६ ॥

तथेत्युक्त्वा महाराज कुन्तीपुत्रो युधिष्ठिरः ।
समन्तपञ्चकं वीरः प्रायादभिमुखः प्रभुः ॥ ००७ ॥

ततो दुर्योधनो राजा प्रगृह्य महतीं गदाम् ।
पद्भ्याममर्षाद्द्युतिमानगच्छत्पाण्डवैः सह ॥ ००८ ॥

तथा यान्तं गदाहस्तं वर्मणा चापि दंशितम् ।
अन्तरिक्षगता देवाः साधु साध्वित्यपूजयन् ॥ ००९ ॥

वातिकाश्च नरा येऽत्र दृष्ट्वा ते हर्षमागताः ॥ ००९ ॥

स पाण्डवैः परिवृतः कुरुराजस्तवात्मजः ।
मत्तस्येव गजेन्द्रस्य गतिमास्थाय सोऽव्रजत् ॥ ०१० ॥

ततः शङ्खनिनादेन भेरीणां च महास्वनैः ।
सिंहनादैश्च शूराणां दिशः सर्वाः प्रपूरिताः ॥ ०११ ॥

प्रतीच्यभिमुखं देशं यथोद्दिष्टं सुतेन ते ।
गत्वा च तैः परिक्षिप्तं समन्तात्सर्वतोदिशम् ॥ ०१२ ॥

दक्षिणेन सरस्वत्याः स्वयनं तीर्थमुत्तमम् ।
तस्मिन्देशे त्वनिरिणे तत्र युद्धमरोचयन् ॥ ०१३ ॥

ततो भीमो महाकोटिं गदां गृह्याथ वर्मभृत् ।
बिभ्रद्रूपं महाराज सदृशं हि गरुत्मतः ॥ ०१४ ॥

अवबद्धशिरस्त्राणः संख्ये काञ्चनवर्मभृत् ।
रराज राजन्पुत्रस्ते काञ्चनः शैलराडिव ॥ ०१५ ॥

वर्मभ्यां संवृतौ वीरौ भीमदुर्योधनावुभौ ।
संयुगे च प्रकाशेते संरब्धाविव कुञ्जरौ ॥ ०१६ ॥

रणमण्डलमध्यस्थौ भ्रातरौ तौ नरर्षभौ ।
अशोभेतां महाराज चन्द्रसूर्याविवोदितौ ॥ ०१७ ॥

तावन्योन्यं निरीक्षेतां क्रुद्धाविव महाद्विपौ ।

दहन्तौ लोचनै राजन्परस्परवधैषिणौ ॥ ०१८ ॥

संप्रहृष्टमना राजन्गदामादाय कौरवः ।
सृक्किणी संलिहन्राजन्क्रोधरक्तेक्षणः श्वसन् ॥ ०१९ ॥

ततो दुर्योधनो राजा गदामादाय वीर्यवान् ।
भीमसेनमभिप्रेक्ष्य गजो गजमिवाह्वयत् ॥ ०२० ॥

अद्रिसारमयीं भीमस्तथैवादाय वीर्यवान् ।
आह्वयामास नृपतिं सिंहः सिंहं यथा वने ॥ ०२१ ॥

तावुद्यतगदापाणी दुर्योधनवृकोदरौ ।
संयुगे स्म प्रकाशेते गिरी सशिखराविव ॥ ०२२ ॥

तावुभावभिसङ्क्रुद्धावुभौ भीमपराक्रमौ ।
उभौ शिष्यौ गदायुद्धे रौहिणेयस्य धीमतः ॥ ०२३ ॥

उभौ सदृशकर्माणौ यमवासवयोरिव ।
तथा सदृशकर्माणौ वरुणस्य महाबलौ ॥ ०२४ ॥

वासुदेवस्य रामस्य तथा वैश्रवणस्य च ।
सदृशौ तौ महाराज मधुकैटभयोर्युधि ॥ ०२५ ॥

उभौ सदृशकर्माणौ रणे सुन्दोपसुन्दयोः ।
तथैव कालस्य समौ मृत्योश्चैव परंतपौ ॥ ०२६ ॥

अन्योन्यमभिधावन्तौ मत्ताविव महाद्विपौ ।
वाशितासङ्गमे दृप्तौ शरदीव मदोत्कटौ ॥ ०२७ ॥

मत्ताविव जिगीषन्तौ मातङ्गौ भरतर्षभौ ।
उभौ क्रोधविषं दीप्तं वमन्तावुरगाविव ॥ ०२८ ॥

अन्योन्यमभिसंरब्धौ प्रेक्षमाणावरिंदमौ ।
उभौ भरतशार्दूलौ विक्रमेण समन्वितौ ॥ ०२९ ॥

सिंहाविव दुराधर्षौ गदायुद्धे परंतपौ ।
नखदंष्ट्रायुधौ वीरौ व्याघ्राविव दुरुत्सहौ ॥ ०३० ॥

प्रजासंहरणे क्षुब्धौ समुद्राविव दुस्तरौ ।
लोहिताङ्गाविव क्रुद्धौ प्रतपन्तौ महारथौ ॥ ०३१ ॥

रश्मिमन्तौ महात्मानौ दीप्तिमन्तौ महाबलौ ।
ददृशाते कुरुश्रेष्ठौ कालसूर्याविवोदितौ ॥ ०३२ ॥

व्याघ्राविव सुसंरब्धौ गर्जन्ताविव तोयदौ ।
जहृषाते महाबाहू सिंहौ केसरिणाविव ॥ ०३३ ॥

गजाविव सुसंरब्धौ ज्वलिताविव पावकौ ।
ददृशुस्तौ महात्मानौ सशृङ्गाविव पर्वतौ ॥ ०३४ ॥

रोषात्प्रस्फुरमाणोष्ठौ निरीक्षन्तौ परस्परम् ।
तौ समेतौ महात्मानौ गदाहस्तौ नरोत्तमौ ॥ ०३५ ॥

उभौ परमसंहृष्टावुभौ परमसंमतौ ।
सदश्वाविव हेषन्तौ बृंहन्ताविव कुञ्जरौ ॥ ०३६ ॥

वृषभाविव गर्जन्तौ दुर्योधनवृकोदरौ ।
दैत्याविव बलोन्मत्तौ रेजतुस्तौ नरोत्तमौ ॥ ०३७ ॥

ततो दुर्योधनो राजन्निदमाह युधिष्ठिरम् ।
सृञ्जयैः सह तिष्ठन्तं तपन्तमिव भास्करम् ॥ ०३८ ॥

इदं व्यवसितं युद्धं मम भीमस्य चोभयोः ।
उपोपविष्टाः पश्यध्वं विमर्दं नृपसत्तमाः ॥ ०३९ ॥

ततः समुपविष्टं तत्सुमहद्राजमण्डलम् ।
विराजमानं ददृशे दिवीवादित्यमण्डलम् ॥ ०४० ॥

तेषां मध्ये महाबाहुः श्रीमान्केशवपूर्वजः ।
उपविष्टो महाराज पूज्यमानः समन्ततः ॥ ०४१ ॥

शुशुभे राजमध्यस्थो नीलवासाः सितप्रभः ।
नक्षत्रैरिव संपूर्णो वृतो निशि निशाकरः ॥ ०४२ ॥

तौ तथा तु महाराज गदाहस्तौ दुरासदौ ।
अन्योन्यं वाग्भिरुग्राभिस्तक्षमाणौ व्यवस्थितौ ॥ ०४३ ॥

अप्रियाणि ततोऽन्योन्यमुक्त्वा तौ कुरुपुङ्गवौ ।
उदीक्षन्तौ स्थितौ वीरौ वृत्रशक्राविवाहवे ॥ ०४४ ॥

---

# अध्याय ०५५

वैशंपायन उवाच ॥

ततो वाग्युद्धमभवत्तुमुलं जनमेजय ।
यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ ००१ ॥

धिगस्तु खलु मानुष्यं यस्य निष्ठेयमीदृशी ।
एकादशचमूभर्ता यत्र पुत्रो ममाभिभूः ॥ ००२ ॥

आज्ञाप्य सर्वान्नृपतीन्भुक्त्वा चेमां वसुंधराम् ।
गदामादाय वेगेन पदातिः प्रस्थितो रणम्  ॥ ००३  ॥

भूत्वा हि जगतो नाथो ह्यनाथ इव मे सुतः ।
गदामुद्यम्य यो याति किमन्यद्भागधेयतः  ॥ ००४  ॥

अहो दुःखं महत्प्राप्तं पुत्रेण मम सञ्जय ।
एवमुक्त्वा स दुःखार्तो विरराम जनाधिपः  ॥ ००५  ॥

सञ्जय उवाच  ॥

स मेघनिनदो हर्षाद्विनदन्निव गोवृषः ।
आजुहाव ततः पार्थं युद्धाय युधि वीर्यवान्  ॥ ००६  ॥

भीममाह्वयमाने तु कुरुराजे महात्मनि ।
प्रादुरासन्सुघोराणि रूपाणि विविधान्युत  ॥ ००७  ॥

ववुर्वाताः सनिर्घाताः पांसुवर्षं पपात च ।
बभूवुश्च दिशः सर्वास्तिमिरेण समावृताः  ॥ ००८  ॥

महास्वनाः सनिर्घातास्तुमुला रोमहर्षणाः ।
पेतुस्तथोल्काः शतशः स्फोटयन्त्यो नभस्तलम्  ॥ ००९  ॥

राहुश्चाग्रसदादित्यमपर्वणि विशां पते ।
चकम्पे च महाकम्पं पृथिवी सवनद्रुमा  ॥ ०१०  ॥

रूक्षाश्च वाताः प्रववुर्नीचैः शर्करवर्षिणः ।
गिरीणां शिखराण्येव न्यपतन्त महीतले  ॥ ०११  ॥

मृगा बहुविधाकाराः संपतन्ति दिशो दश ।

दीप्ताः शिवाश्चाप्यनदन्घोररूपाः सुदारुणाः ॥ ०१२ ॥

निर्घाताश्च महाघोरा बभूवू रोमहर्षणाः ।
दीप्तायां दिशि राजेन्द्र मृगाश्चाशुभवादिनः ॥ ०१३ ॥

उदपानगताश्चापो व्यवर्धन्त समन्ततः ।
अशरीरा महानादाः श्रूयन्ते स्म तदा नृप ॥ ०१४ ॥

एवमादीनि दृष्ट्वाथ निमित्तानि वृकोदरः ।
उवाच भ्रातरं ज्येष्ठं धर्मराजं युधिष्ठिरम् ॥ ०१५ ॥

नैष शक्तो रणे जेतुं मन्दात्मा मां सुयोधनः ।
अद्य क्रोधं विमोक्ष्यामि निगूढं हृदये चिरम् ॥ ०१६ ॥

सुयोधने कौरवेन्द्रे खाण्डवे पावको यथा ॥ ०१६ ॥

शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयम् ।
निहत्य गदया पापमिमं कुरुकुलाधमम् ॥ ०१७ ॥

अद्य कीर्तिमयीं मालां प्रतिमोक्ष्याम्यहं त्वयि ।
हत्वेमं पापकर्माणं गदया रणमूर्धनि ॥ ०१८ ॥

अद्यास्य शतधा देहं भिनद्मि गदयानया ।
नायं प्रवेष्टा नगरं पुनर्वारणसाह्वयम् ॥ ०१९ ॥

सर्पोत्सर्गस्य शयने विषदानस्य भोजने ।
प्रमाणकोट्यां पातस्य दाहस्य जतुवेश्मनि ॥ ०२० ॥

सभायामवहासस्य सर्वस्वहरणस्य च ।
वर्षमज्ञातवासस्य वनवासस्य चानघ ॥ ०२१ ॥

अद्यान्तमेषां दुःखानां गन्ता भरतसत्तम ।
एकाह्वा विनिहत्येमं भविष्याम्यात्मनोऽनृणः ॥ ०२२ ॥

अद्यायुर्धार्तराष्ट्रस्य दुर्मतेरकृतात्मनः ।
समाप्तं भरतश्रेष्ठ मातापित्रोश्च दर्शनम् ॥ ०२३ ॥

अद्यायं कुरुराजस्य शंतनोः कुलपांसनः ।
प्राणाञ्श्रियं च राज्यं च त्यक्त्वा शेष्यति भूतले ॥ ०२४ ॥

राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं मया हतम् ।
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ ०२५ ॥

इत्युक्त्वा राजशार्दूल गदामादाय वीर्यवान् ।
अवातिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ ०२६ ॥

तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
भीमसेनः पुनः क्रुद्धो दुर्योधनमुवाच ह ॥ ०२७ ॥

राज्ञश्च धृतराष्ट्रस्य तथा त्वमपि चात्मनः ।
स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते ॥ ०२८ ॥

द्रौपदी च परिक्लिष्टा सभायां यद्रजस्वला ।
द्यूते च वञ्चितो राजा यत्त्वया सौबलेन च ॥ ०२९ ॥

वने दुःखं च यत्प्राप्तमस्माभिस्त्वत्कृतं महत् ।
विराटनगरे चैव योन्यन्तरगतैरिव ॥ ०३० ॥

तत्सर्वं यातयाम्यद्य दिष्ट्या दृष्टोऽसि दुर्मते ॥ ०३० ॥

त्वत्कृतेऽसौ हतः शेते शरतल्पे प्रतापवान् ।
गाङ्गेयो रथिनां श्रेष्ठो निहतो याज्ञसेनिना ॥ ०३१ ॥

हतो द्रोणश्च कर्णश्च तथा शल्यः प्रतापवान् ।
वैराग्नेरादिकर्ता च शकुनिः सौबलो हतः ॥ ०३२ ॥

प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः ।
भ्रातरस्ते हताः सर्वे शूरा विक्रान्तयोधिनः ॥ ०३३ ॥

एते चान्ये च बहवो निहतास्त्वत्कृते नृपाः ।
त्वामद्य निहनिष्यामि गदया नात्र संशयः ॥ ०३४ ॥

इत्येवमुच्चै राजेन्द्र भाषमाणं वृकोदरम् ।
उवाच वीतभी राजन्पुत्रस्ते सत्यविक्रमः ॥ ०३५ ॥

किं कत्थितेन बहुधा युध्यस्व त्वं वृकोदर ।
अद्य तेऽहं विनेष्यामि युद्धश्रद्धां कुलाधम ॥ ०३६ ॥

नैव दुर्योधनः क्षुद्र केनचित्त्वद्विधेन वै ।
शक्यस्त्रासयितुं वाचा यथान्यः प्राकृतो नरः ॥ ०३७ ॥

चिरकालेप्सितं दिष्ट्या हृदयस्थमिदं मम ।
त्वया सह गदायुद्धं त्रिदशैरुपपादितम् ॥ ०३८ ॥

किं वाचा बहुनोक्तेन कत्थितेन च दुर्मते ।
वाणी संपद्यतामेषा कर्मणा मा चिरं कृथाः ॥ ०३९ ॥

तस्य तद्वचनं श्रुत्वा सर्व एवाभ्यपूजयन् ।
राजानः सोमकाश्चैव ये तत्रासन्समागताः ॥ ०४० ॥

ततः संपूजितः सर्वैः संप्रहृष्टतनूरुहः ।
भूयो धीरं मनश्चक्रे युद्धाय कुरुनन्दनः ॥ ०४१ ॥

तं मत्तमिव मातङ्गं तलतालैर्नराधिपाः ।
भूयः संहर्षयां चक्रुर्दुर्योधनममर्षणम् ॥ ०४२ ॥

तं महात्मा महात्मानं गदामुद्यम्य पाण्डवः ।
अभिदुद्राव वेगेन धार्तराष्ट्रं वृकोदरः ॥ ०४३ ॥

बृंहन्ति कुञ्जरास्तत्र हया हेषन्ति चासकृत् ।
शस्त्राणि चाप्यदीप्यन्त पाण्डवानां जयैषिणाम् ॥ ०४४ ॥

---

# अध्याय ०५६

सञ्जय उवाच ॥

ततो दुर्योधनो दृष्ट्वा भीमसेनं तथागतम् ।
प्रत्युद्ययावदीनात्मा वेगेन महता नदन् ॥ ००१ ॥

समापेततुरानद्य श्रृङ्गिणौ वृषभाविव ।
महानिर्घातघोषश्च संप्रहारस्तयोरभूत् ॥ ००२ ॥

अभवच्च तयोर्युद्धं तुमुलं रोमहर्षणम् ।
जिगीषतोर्युधान्योन्यमिन्द्रप्रह्लादयोरिव ॥ ००३ ॥

रुधिरोक्षितसर्वाङ्गौ गदाहस्तौ मनस्विनौ ।
ददृशाते महात्मानौ पुष्पिताविव किंशुकौ ॥ ००४ ॥

तथा तस्मिन्महायुद्धे वर्तमाने सुदारुणे ।
खद्योतसंघैरिव खं दर्शनीयं व्यरोचत ॥ ००५ ॥

तथा तस्मिन्वर्तमाने सङ्कुले तुमुले भृशम् ।
उभावपि परिश्रान्तौ युध्यमानावरिंदमौ ॥ ००६ ॥

तौ मुहूर्तं समाश्वस्य पुनरेव परंतपौ ।
अभ्यहारयतां तत्र संप्रगृह्य गदे शुभे ॥ ००७ ॥

तौ तु दृष्ट्वा महावीर्यौ समाश्वस्तौ नरर्षभौ ।
बलिनौ वारणौ यद्वद्वाशितार्थे मदोत्कटौ ॥ ००८ ॥

अपारवीर्यौ संप्रेक्ष्य प्रगृहीतगदावुभौ ।
विस्मयं परमं जग्मुर्देवगन्धर्वदानवाः ॥ ००९ ॥

प्रगृहीतगदौ दृष्ट्वा दुर्योधनवृकोदरौ ।
संशयः सर्वभूतानां विजये समपद्यत ॥ ०१० ॥

समागम्य ततो भूयो भ्रातरौ बलिनां वरौ ।
अन्योन्यस्यान्तरप्रेप्सू प्रचक्रातेऽन्तरं प्रति ॥ ०११ ॥

यमदण्डोपमां गुर्वीमिन्द्राशनिमिवोद्यताम् ।
ददृशुः प्रेक्षका राजन्रौद्रीं विशसनीं गदाम् ॥ ०१२ ॥

आविध्यतो गदां तस्य भीमसेनस्य संयुगे ।
शब्दः सुतुमुलो घोरो मुहूर्तं समपद्यत ॥ ०१३ ॥

आविध्यन्तमभिप्रेक्ष्य धार्तराष्ट्रोऽथ पाण्डवम् ।
गदामलघुवेगां तां विस्मितः संबभूव ह ॥ ०१४ ॥

चरंश्च विविधान्मार्गान्मण्डलानि च भारत ।
अशोभत तदा वीरो भूय एव वृकोदरः ॥ ०१५ ॥

तौ परस्परमासाद्य यत्तावन्योन्यरक्षणे ।
मार्जाराविव भक्षार्थे ततक्षाते मुहुर्मुहुः ॥ ०१६ ॥

अचरद्भीमसेनस्तु मार्गान्बहुविधांस्तथा ।
मण्डलानि विचित्राणि स्थानानि विविधानि च ॥ ०१७ ॥

गोमूत्रिकाणि चित्राणि गतप्रत्यागतानि च ।
परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ ०१८ ॥

अभिद्रवणमाक्षेपमवस्थानं सविग्रहम् ।
परावर्तनसंवर्तमवप्लुतमथाप्लुतम् ॥ ०१९ ॥

उपन्यस्तमपन्यस्तं गदायुद्धविशारदौ ॥ ०१९ ॥

एवं तौ विचरन्तौ तु न्यघ्नतां वै परस्परम् ।
वञ्चयन्तौ पुनश्चैव चेरतुः कुरुसत्तमौ ॥ ०२० ॥

विक्रीडन्तौ सुबलिनौ मण्डलानि प्रचेरतुः ।
गदाहस्तौ ततस्तौ तु मण्डलावस्थितौ बली ॥ ०२१ ॥

दक्षिणं मण्डलं राजन्धार्तराष्ट्रोऽभ्यवर्तत ।
सव्यं तु मण्डलं तत्र भीमसेनोऽभ्यवर्तत ॥ ०२२ ॥

तथा तु चरतस्तस्य भीमस्य रणमूर्धनि ।
दुर्योधनो महाराज पार्श्वदेशेऽभ्यताडयत् ॥ ०२३ ॥

आहतस्तु तदा भीमस्तव पुत्रेण भारत ।
आविध्यत गदां गुर्वीं प्रहारं तमचिन्तयन् ॥ ०२४ ॥

इन्द्राशनिसमां घोरां यमदण्डमिवोद्यताम् ।
ददृशुस्ते महाराज भीमसेनस्य तां गदाम् ॥ ०२५ ॥

आविध्यन्तं गदां दृष्ट्वा भीमसेनं तवात्मजः ।
समुद्यम्य गदां घोरां प्रत्यविध्यदरिंदमः ॥ ०२६ ॥

गदामारुतवेगेन तव पुत्रस्य भारत ।
शब्द आसीत्सुतुमुलस्तेजश्च समजायत ॥ ०२७ ॥

स चरन्विविधान्मार्गान्मण्डलानि च भागशः ।
समशोभत तेजस्वी भूयो भीमात्सुयोधनः ॥ ०२८ ॥

आविद्धा सर्ववेगेन भीमेन महती गदा ।
सधूमं सार्चिषं चाग्निं मुमोचोग्रा महास्वना ॥ ०२९ ॥

आधूतां भीमसेनेन गदां दृष्ट्वा सुयोधनः ।
अद्रिसारमयीं गुर्वीमाविध्यन्बह्वशोभत ॥ ०३० ॥

गदामारुतवेगं हि दृष्ट्वा तस्य महात्मनः ।
भयं विवेश पाण्डून्वै सर्वानेव ससोमकान् ॥ ०३१ ॥

तौ दर्शयन्तौ समरे युद्धक्रीडां समन्ततः ।
गदाभ्यां सहसान्योन्यमाजघ्नतुररिंदमौ ॥ ०३२ ॥

तौ परस्परमासाद्य दंष्ट्राभ्यां द्विरदौ यथा ।
अशोभेतां महाराज शोणितेन परिप्लुतौ ॥ ०३३ ॥

एवं तदभवद्युद्धं घोररूपमसंवृतम् ।
परिवृत्तेऽहनि क्रूरं वृत्रवासवयोरिव ॥ ०३४ ॥

दृष्ट्वा व्यवस्थितं भीमं तव पुत्रो महाबलः ।
चरंश्चित्रतरान्मार्गान्कौन्तेयमभिदुद्रुवे ॥ ०३५ ॥

तस्य भीमो महावेगां जाम्बूनदपरिष्कृताम् ।
अभिक्रुद्धस्य क्रुद्धस्तु ताडयामास तां गदाम्  ॥ ०३६  ॥

सविस्फुलिङ्गो निर्ह्रादस्तयोस्तत्राभिघातजः ।
प्रादुरासीन्महाराज सृष्टयोर्वज्रयोरिव  ॥ ०३७  ॥

वेगवत्या तया तत्र भीमसेनप्रमुक्तया ।
निपतन्त्या महाराज पृथिवी समकम्पत  ॥ ०३८  ॥

तां नामृष्यत कौरव्यो गदां प्रतिहतां रणे ।
मत्तो द्विप इव क्रुद्धः प्रतिकुञ्जरदर्शनात्  ॥ ०३९  ॥

स सव्यं मण्डलं राजन्नुद्भ्राम्य कृतनिश्चयः ।
आजघ्ने मूर्ध्नि कौन्तेयं गदया भीमवेगया  ॥ ०४०  ॥

तया त्वभिहतो भीमः पुत्रेण तव पाण्डवः ।
नाकम्पत महाराज तदद्भुतमिवाभवत्  ॥ ०४१  ॥

आश्चर्यं चापि तद्राजन्सर्वसैन्यान्यपूजयन् ।
यद्गदाभिहतो भीमो नाकम्पत पदात्पदम्  ॥ ०४२  ॥

ततो गुरुतरां दीप्तां गदां हेमपरिष्कृताम् ।
दुर्योधनाय व्यसृजद्भीमो भीमपराक्रमः  ॥ ०४३  ॥

तं प्रहारमसंभ्रान्तो लाघवेन महाबलः ।
मोघं दुर्योधनश्चक्रे तत्राभूद्विस्मयो महान्  ॥ ०४४  ॥

सा तु मोघा गदा राजन्पतन्ती भीमचोदिता ।
चालयामास पृथिवीं महानिर्घातनिस्वना  ॥ ०४५  ॥

आस्थाय कौशिकान्मार्गानुत्पतन्स पुनः पुनः ।

गदानिपातं प्रज्ञाय भीमसेनमवञ्चयत्  ॥ ०४६  ॥

वञ्चयित्वा तथा भीमं गदया कुरुसत्तमः ।
ताडयामास सङ्क्रुद्धो वक्षोदेशे महाबलः  ॥ ०४७  ॥

गदयाभिहतो भीमो मुह्यमानो महारणे ।
नाभ्यमन्यत कर्तव्यं पुत्रेणाभ्याहतस्तव  ॥ ०४८  ॥

तस्मिंस्तथा वर्तमाने राजन्सोमकपाण्डवाः ।
भृशोपहतसङ्कल्पा नहृष्टमनसोऽभवन्  ॥ ०४९  ॥

स तु तेन प्रहारेण मातङ्ग इव रोषितः ।
हस्तिवद्धस्तिसङ्काशमभिदुद्राव ते सुतम्  ॥ ०५०  ॥

ततस्तु रभसो भीमो गदया तनयं तव ।
अभिदुद्राव वेगेन सिंहो वनगजं यथा  ॥ ०५१  ॥

उपसृत्य तु राजानं गदामोक्षविशारदः ।
आविध्यत गदां राजन्समुद्दिश्य सुतं तव  ॥ ०५२  ॥

अताडयद्भीमसेनः पार्श्वे दुर्योधनं तदा ।
स विह्वलः प्रहारेण जानुभ्यामगमन्महीम्  ॥ ०५३  ॥

तस्मिंस्तु भरतश्रेष्ठे जानुभ्यामवनीं गते ।
उदतिष्ठत्ततो नादः सृञ्जयानां जगत्पते  ॥ ०५४  ॥

तेषां तु निनदं श्रुत्वा सृञ्जयानां नरर्षभः ।
अमर्षाद्भरतश्रेष्ठ पुत्रस्ते समकुप्यत  ॥ ०५५  ॥

उत्थाय तु महाबाहुः क्रुद्धो नाग इव श्वसन् ।
दिधक्षन्निव नेत्राभ्यां भीमसेनमवैक्षत  ॥ ०५६  ॥

ततः स भरतश्रेष्ठो गदापाणिरभिद्रवत् ।
प्रमथिष्यन्निव शिरो भीमसेनस्य संयुगे ॥ ०५७ ॥

स महात्मा महात्मानं भीमं भीमपराक्रमः ।
अताडयच्छङ्खदेशे स चचालाचलोपमः ॥ ०५८ ॥

स भूयः शुशुभे पार्थस्ताडितो गदया रणे ।
उद्भिन्नरुधिरो राजन्प्रभिन्न इव कुञ्जरः ॥ ०५९ ॥

ततो गदां वीरहणीमयस्मयीं ; प्रगृह्य वज्राशनितुल्यनिस्वनाम् ।
अताडयच्छत्रुममित्रकर्शनो ; बलेन विक्रम्य धनञ्जयाग्रजः ॥ ०६० ॥

स भीमसेनाभिहतस्तवात्मजः ; पपात सङ्कम्पितदेहबन्धनः ।
सुपुष्पितो मारुतवेगताडितो ; महावने साल इवावघूर्णितः ॥ ०६१ ॥

ततः प्रणेदुर्जहृषुश्च पाण्डवाः ; समीक्ष्य पुत्रं पतितं क्षितौ तव ।
ततः सुतस्ते प्रतिलभ्य चेतनां ; समुत्पपात द्विरदो यथा ह्रदात् ॥ ०६२ ॥

स पार्थिवो नित्यममर्षितस्तदा ; महारथः शिक्षितवत्परिभ्रमन् ।
अताडयत्पाण्डवमग्रतः स्थितं ; स विह्वलाङ्गो जगतीमुपास्पृशत् ॥ ०६३ ॥

स सिंहनादान्विननाद कौरवो ; निपात्य भूमौ युधि भीममोजसा ।
बिभेद चैवाशनितुल्यतेजसा ; गदानिपातेन शरीररक्षणम् ॥ ०६४ ॥

ततोऽन्तरिक्षे निनदो महानभू ;द्दिवौकसामप्सरसां च नेदुषाम् ।
पपात चोच्चैरमरप्रवेरितं ; विचित्रपुष्पोत्करवर्षमुत्तमम् ॥ ०६५ ॥

ततः परानाविशदुत्तमं भयं ; समीक्ष्य भूमौ पतितं नरोत्तमम् ।
अहीयमानं च बलेन कौरवं ; निशम्य भेदं च दृढस्य वर्मणः ॥ ०६६ ॥

ततो मुहूर्तादुपलभ्य चेतनां ; प्रमृज्य वक्त्रं रुधिरार्द्रमात्मनः ।
धृतिं समालम्ब्य विवृत्तलोचनो ; बलेन संस्तभ्य वृकोदरः स्थितः ॥ ०६७ ॥

---

# दुर्योधनोरुभ ङ्गः

## अध्याय ०५७

सञ्जय उवाच ॥

समुदीर्णं ततो दृष्ट्वा सङ्ग्रामं कुरुमुख्ययोः ।
अथाब्रवीदर्जुनस्तु वासुदेवं यशस्विनम् ॥ ००१ ॥

अनयोर्वीरयोर्युद्धे को ज्यायान्भवतो मतः ।
कस्य वा को गुणो भूयानेतद्वद जनार्दन ॥ ००२ ॥

वासुदेव उवाच ॥

उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः ।
कृतयत्नतरस्त्वेष धार्तराष्ट्रो वृकोदरात् ॥ ००३ ॥

भीमसेनस्तु धर्मेण युध्यमानो न जेष्यति ।
अन्यायेन तु युध्यन्वै हन्यादेष सुयोधनम् ॥ ००४ ॥

मायया निर्जिता देवैरसुरा इति नः श्रुतम् ।
विरोचनश्च शक्रेण मायया निर्जितः सखे ॥ ००५ ॥

मायया चाक्षिपत्तेजो वृत्रस्य बलसूदनः ॥ ००५ ॥

प्रतिज्ञातं तु भीमेन द्यूतकाले धनञ्जय ।
ऊरू भेत्स्यामि ते संख्ये गदयेति सुयोधनम्  ॥ ००६  ॥

सोऽयं प्रतिज्ञां तां चापि पारयित्वारिकर्शनः ।
मायाविनं च राजानं माययैव निकृन्ततु  ॥ ००७  ॥

यद्येष बलमास्थाय न्यायेन प्रहरिष्यति ।
विषमस्थस्ततो राजा भविष्यति युधिष्ठिरः  ॥ ००८  ॥

पुनरेव च वक्ष्यामि पाण्डवेदं निबोध मे ।
धर्मराजापराधेन भयं नः पुनरागतम्  ॥ ००९  ॥

कृत्वा हि सुमहत्कर्म हत्वा भीष्ममुखान्कुरून् ।
जयः प्राप्तो यशश्चाग्र्यं वैरं च प्रतियातितम्  ॥ ०१०  ॥

तदेवं विजयः प्राप्तः पुनः संशयितः कृतः  ॥ ०१०  ॥

अबुद्धिरेषा महती धर्मराजस्य पाण्डव ।
यदेकविजये युद्धं पणितं कृतमीदृशम्  ॥ ०११  ॥

सुयोधनः कृती वीर एकायनगतस्तथा  ॥ ०११  ॥

अपि चोशनसा गीतः श्रूयतेऽयं पुरातनः ।
श्लोकस्तत्त्वार्थसहितस्तन्मे निगदतः शृणु  ॥ ०१२  ॥

पुनरावर्तमानानां भग्नानां जीवितैषिणाम् ।
भेतव्यमरिशेषाणामेकायनगता हि ते  ॥ ०१३  ॥

सुयोधनमिमं भग्नं हतसैन्यं ह्रदं गतम् ।
पराजितं वनप्रेप्सुं निराशं राज्यलम्भने  ॥ ०१४  ॥

को न्वेष संयुगे प्राज्ञः पुनर्द्वंद्वे समाह्वयेत् ।
अपि वो निर्जितं राज्यं न हरेत सुयोधनः ॥ ०१५ ॥

यस्त्रयोदशवर्षाणि गदया कृतनिश्रमः ।
चरत्यूर्ध्वं च तिर्यक्क भीमसेनजिघांसया ॥ ०१६ ॥

एवं चेन्न महाबाहुरन्यायेन हनिष्यति ।
एष वः कौरवो राजा धार्तराष्ट्रो भविष्यति ॥ ०१७ ॥

धनञ्जयस्तु श्रुत्वैतत्केशवस्य महात्मनः ।
प्रेक्षतो भीमसेनस्य हस्तेनोरुमताडयत् ॥ ०१८ ॥

गृह्य सञ्ज्ञां ततो भीमो गदया व्यचरद्रणे ।
मण्डलानि विचित्राणि यमकानीतराणि च ॥ ०१९ ॥

दक्षिणं मण्डलं सव्यं गोमूत्रकमथापि च ।
व्यचरत्पाण्डवो राजन्नरिं संमोहयन्निव ॥ ०२० ॥

तथैव तव पुत्रोऽपि गदामार्गविशारदः ।
व्यचरल्लघु चित्रं च भीमसेनजिघांसया ॥ ०२१ ॥

आधुन्वन्तौ गदे घोरे चन्दनागरुरूषिते ।
वैरस्यान्तं परीप्सन्तौ रणे क्रुद्धाविवान्तकौ ॥ ०२२ ॥

अन्योन्यं तौ जिघांसन्तौ प्रवीरौ पुरुषर्षभौ ।
युयुधाते गरुत्मन्तौ यथा नागामिषैषिणौ ॥ ०२३ ॥

मण्डलानि विचित्राणि चरतोर्नृपभीमयोः ।
गदासंपातजास्तत्र प्रजज्ञुः पावकार्चिषः ॥ ०२४ ॥

समं प्रहरतोस्तत्र शूरयोर्बलिनोर्मृधे ।
क्षुब्धयोर्वायुना राजन्द्वयोरिव समुद्रयोः ॥ ०२५ ॥

तयोः प्रहरतोस्तुल्यं मत्तकुञ्जरयोरिव ।
गदानिर्घातसंह्रादः प्रहाराणामजायत ॥ ०२६ ॥

तस्मिंस्तदा संप्रहारे दारुणे सङ्कुले भृशम् ।
उभावपि परिश्रान्तौ युध्यमानावरिंदमौ ॥ ०२७ ॥

तौ मुहूर्तं समाश्वस्य पुनरेव परंतपौ ।
अभ्यहारयतां क्रुद्धौ प्रगृह्य महती गदे ॥ ०२८ ॥

तयोः समभवद्युद्धं घोररूपमसंवृतम् ।
गदानिपातै राजेन्द्र तक्षतोर्वै परस्परम् ॥ ०२९ ॥

व्यायामप्रद्रुतौ तौ तु वृषभाक्षौ तरस्विनौ ।
अन्योन्यं जघ्नतुर्वीरौ पङ्कस्थौ महिषाविव ॥ ०३० ॥

जर्जरीकृतसर्वाङ्गौ रुधिरेणाभिसंप्लुतौ ।
ददृशाते हिमवति पुष्पिताविव किंशुकौ ॥ ०३१ ॥

दुर्योधनेन पार्थस्तु विवरे संप्रदर्शिते ।
ईषदुत्स्मयमानस्तु सहसा प्रससार ह ॥ ०३२ ॥

तमभ्याशगतं प्राज्ञो रणे प्रेक्ष्य वृकोदरः ।
अवाक्षिपद्गदां तस्मै वेगेन महता बली ॥ ०३३ ॥

अवक्षेपं तु तं दृष्ट्वा पुत्रस्तव विशां पते ।
अपासर्पत्ततः स्थानात्सा मोघा न्यपतद्भुवि ॥ ०३४ ॥

मोक्षयित्वा प्रहारं तं सुतस्तव स संभ्रमात् ।
भीमसेनं च गदया प्राहरत्कुरुसत्तमः ॥ ०३५ ॥

तस्य विष्यन्दमानेन रुधिरेणामितौजसः ।
प्रहारगुरुपाताच्च मूर्छेव समजायत ॥ ०३६ ॥

दुर्योधनस्तं च वेद पीडितं पाण्डवं रणे ।
धारयामास भीमोऽपि शरीरमतिपीडितम् ॥ ०३७ ॥

अमन्यत स्थितं ह्येनं प्रहरिष्यन्तमाहवे ।
अतो न प्राहरत्तस्मै पुनरेव तवात्मजः ॥ ०३८ ॥

ततो मुहूर्तमाश्वस्य दुर्योधनमवस्थितम् ।
वेगेनाभ्यद्रवद्राजन्भीमसेनः प्रतापवान् ॥ ०३९ ॥

तमापतन्तं संप्रेक्ष्य संरब्धममितौजसम् ।
मोघमस्य प्रहारं तं चिकीर्षुर्भरतर्षभ ॥ ०४० ॥

अवस्थाने मतिं कृत्वा पुत्रस्तव महामनाः ।
इयेषोत्पतितुं राजंश्छलयिष्यन्वृकोदरम् ॥ ०४१ ॥

अबुध्यद्भीमसेनस्तद्राज्ञस्तस्य चिकीर्षितम् ।
अथास्य समभिद्रुत्य समुत्क्रम्य च सिंहवत् ॥ ०४२ ॥

सृत्या वञ्चयतो राजन्पुनरेवोत्पतिष्यतः ।
ऊरुभ्यां प्राहिणोद्राजन्गदां वेगेन पाण्डवः ॥ ०४३ ॥

सा वज्रनिष्पेषसमा प्रहिता भीमकर्मणा ।
ऊरू दुर्योधनस्याथ बभञ्ज प्रियदर्शनौ ॥ ०४४ ॥

स पपात नरव्याघ्रो वसुधामनुनादयन् ।

भग्नोरुर्भीमसेनेन पुत्रस्तव महीपते ॥ ०४५ ॥

ववुर्वाताः सनिर्घाताः पांसुवर्षं पपात च ।
चचाल पृथिवी चापि सवृक्षक्षुपपर्वता ॥ ०४६ ॥

तस्मिन्निपतिते वीरे पत्यौ सर्वमहीक्षिताम् ।
महास्वना पुनर्दीप्ता सनिर्घाता भयङ्करी ॥ ०४७ ॥

पपात चोल्का महती पतिते पृथिवीपतौ ॥ ०४७ ॥

तथा शोणितवर्षं च पांसुवर्षं च भारत ।
ववर्ष मघवांस्तत्र तव पुत्रे निपातिते ॥ ०४८ ॥

यक्षाणां राक्षसानां च पिशाचानां तथैव च ।
अन्तरिक्षे महानादः श्रूयते भरतर्षभ ॥ ०४९ ॥

तेन शब्देन घोरेण मृगाणामथ पक्षिणाम् ।
जज्ञे घोरतमः शब्दो बहूनां सर्वतोदिशम् ॥ ०५० ॥

ये तत्र वाजिनः शेषा गजाश्च मनुजैः सह ।
मुमुचुस्ते महानादं तव पुत्रे निपातिते ॥ ०५१ ॥

भेरीशङ्खमृदङ्गानामभवच्च स्वनो महान् ।
अन्तर्भूमिगतश्चैव तव पुत्रे निपातिते ॥ ०५२ ॥

बहुपादैर्बहुभुजैः कबन्धैर्घोरदर्शनैः ।
नृत्यद्भिर्भयदैर्व्याप्ता दिशस्तत्राभवन्नृप ॥ ०५३ ॥

ध्वजवन्तोऽस्त्रवन्तश्च शस्त्रवन्तस्तथैव च ।
प्राकम्पन्त ततो राजंस्तव पुत्रे निपातिते ॥ ०५४ ॥

ह्रदाः कूपाश्च रुधिरमुद्वेमुर्नृपसत्तम ।
नद्यश्च सुमहावेगाः प्रतिस्रोतोवहाभवन् ॥ ०५५ ॥

पुल्लिङ्गा इव नार्यस्तु स्त्रीलिङ्गाः पुरुषाभवन् ।
दुर्योधने तदा राजन्पतिते तनये तव ॥ ०५६ ॥

दृष्ट्वा तानद्भुतोत्पातान्पाञ्चालाः पाण्डवैः सह ।
आविग्नमनसः सर्वे बभूवुर्भरतर्षभ ॥ ०५७ ॥

ययुर्देवा यथाकामं गन्धर्वाप्सरसस्तथा ।
कथयन्तोऽद्भुतं युद्धं सुतयोस्तव भारत ॥ ०५८ ॥

तथैव सिद्धा राजेन्द्र तथा वातिकचारणाः ।
नरसिंहौ प्रशंसन्तौ विप्रजग्मुर्यथागतम् ॥ ०५९ ॥

---

# अध्याय ०५८

सञ्जय उवाच ॥

तं पातितं ततो दृष्ट्वा महाशालमिवोद्गतम् ।
प्रहृष्टमनसः सर्वे बभूवुस्तत्र पाण्डवाः ॥ ००१ ॥

उन्मत्तमिव मातङ्गं सिंहेन विनिपातितम् ।
ददृशुर्हृष्टरोमाणः सर्वे ते चापि सोमकाः ॥ ००२ ॥

ततो दुर्योधनं हत्वा भीमसेनः प्रतापवान् ।
पतितं कौरवेन्द्रं तमुपगम्येदमब्रवीत् ॥ ००३ ॥

गौर्गौरिति पुरा मन्द द्रौपदीमेकवाससम् ।
यत्सभायां हसन्नस्मांस्तदा वदसि दुर्मते ॥ ००४ ॥

तस्यावहासस्य फलमद्य त्वं समवाप्नुहि ॥ ००४ ॥

एवमुक्त्वा स वामेन पदा मौलिमुपास्पृशत् ।
शिरश्च राजसिंहस्य पादेन समलोडयत् ॥ ००५ ॥

तथैव क्रोधसंरक्तो भीमः परबलार्दनः ।
पुनरेवाब्रवीद्वाक्यं यत्तच्छृणु नराधिप ॥ ००६ ॥

येऽस्मान्पुरोऽपनृत्यन्त पुनर्गौरिति गौरिति ।
तान्वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥ ००७ ॥

नास्माकं निकृतिर्वह्निर्नाक्षद्यूतं न वञ्चना ।
स्वबाहुबलमाश्रित्य प्रबाधामो वयं रिपून् ॥ ००८ ॥

सोऽवाप्य वैरस्य परस्य पारं ; वृकोदरः प्राह शनैः प्रहस्य ।
युधिष्ठिरं केशवसृञ्जयांश्च ; धनञ्जयं माद्रवतीसुतौ च ॥ ००९ ॥

रजस्वलां द्रौपदीमानयन्ये ; ये चाप्यकुर्वन्त सदस्यवस्त्राम् ।
तान्पश्यध्वं पाण्डवैर्धार्तराष्ट्रा ;न्रणे हतांस्तपसा याज्ञसेन्याः ॥ ०१० ॥

ये नः पुरा षण्ढतिलानवोच ;न्क्रूरा राज्ञो धृतराष्ट्रस्य पुत्राः ।
ते नो हताः सगणाः सानुबन्धाः ; कामं स्वर्गं नरकं वा व्रजामः ॥ ०११ ॥

पुनश्च राज्ञः पतितस्य भूमौ ; स तां गदां स्कन्धगतां निरीक्ष्य ।
वामेन पादेन शिरः प्रमृद्य ; दुर्योधनं नैकृतिकेत्यवोचत् ॥ ०१२ ॥

हृष्टेन राजन्कुरुपार्थिवस्य ; क्षुद्रात्मना भीमसेनेन पादम् ।
दृष्ट्वा कृतं मूर्धनि नाभ्यनन्द ;न्धर्मात्मानः सोमकानां प्रवर्हाः ॥ ०१३ ॥

तव पुत्रं तथा हत्वा कत्थमानं वृकोदरम् ।
नृत्यमानं च बहुशो धर्मराजोऽब्रवीदिदम्  ॥ ०१४  ॥

मा शिरोऽस्य पदा मर्दीर्मा धर्मस्तेऽत्यगान्महान् ।
राजा ज्ञातिर्हतश्चायं नैतन्न्याय्यं तवानघ  ॥ ०१५  ॥

विध्वस्तोऽयं हतामात्यो हतभ्राता हतप्रजः ।
उत्सन्नपिण्डो भ्राता च नैतन्न्याय्यं कृतं त्वया  ॥ ०१६  ॥

धार्मिको भीमसेनोऽसावित्याहुस्त्वां पुरा जनाः ।
स कस्माद्भीमसेन त्वं राजानमधितिष्ठसि  ॥ ०१७  ॥

दृष्ट्वा दुर्योधनं राजा कुन्तीपुत्रस्तथागतम् ।
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत्  ॥ ०१८  ॥

नूनमेतद्बलवता धात्रादिष्टं महात्मना ।
यद्वयं त्वां जिघांसामस्त्वं चास्मान्कुरुसत्तम  ॥ ०१९  ॥

आत्मनो ह्यपराधेन महद्व्यसनमीदृशम् ।
प्राप्तवानसि यल्लोभान्मदाद्बाल्याच्च भारत  ॥ ०२०  ॥

घातयित्वा वयस्यांश्च भ्रातॄनथ पितॄंस्तथा ।
पुत्रान्पौत्रांस्तथाचार्यांस्ततोऽसि निधनं गतः  ॥ ०२१  ॥

तवापराधादस्माभिर्भ्रातरस्ते महारथाः ।
निहता ज्ञातयश्चान्ये दिष्टं मन्ये दुरत्ययम्  ॥ ०२२  ॥

स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य विह्वलाः ।
गर्हयिष्यन्ति नो नूनं विधवाः शोककर्शिताः  ॥ ०२३  ॥

एवमुक्त्वा सुदुःखार्तो निशश्वास स पार्थिवः ।
विललाप चिरं चापि धर्मपुत्रो युधिष्ठिरः ॥ ०२४ ॥

---

# बलदेववासुदेवसंवादः

## अध्याय ०५९

धृतराष्ट्र उवाच ॥

अधर्मेण हतं दृष्ट्वा राजानं माधवोत्तमः ।
किमब्रवीत्तदा सूत बलदेवो महाबलः ॥ ००१ ॥

गदायुद्धविशेषज्ञो गदायुद्धविशारदः ।
कृतवान्रौहिणेयो यत्तन्ममाचक्ष्व सञ्जय ॥ ००२ ॥

सञ्जय उवाच ॥

शिरस्यभिहतं दृष्ट्वा भीमसेनेन ते सुतम् ।
रामः प्रहरतां श्रेष्ठश्चुक्रोध बलवद्बली ॥ ००३ ॥

ततो मध्ये नरेन्द्राणामूर्ध्वबाहुर्हलायुधः ।
कुर्वन्नार्तस्वरं घोरं धिग्धिग्भीमेत्युवाच ह ॥ ००४ ॥

अहो धिग्यदधो नाभेः प्रहृतं शुद्धविक्रमे ।
नैतद्दृष्टं गदायुद्धे कृतवान्यद्वृकोदरः ॥ ००५ ॥

अधो नाभ्या न हन्तव्यमिति शास्त्रस्य निश्चयः ।

अयं त्वशास्त्रविन्मूढः स्वच्छन्दात्संप्रवर्तते ॥ ००६ ॥

तस्य तत्तद्ब्रुवाणस्य रोषः समभवन्महान् ।
ततो लाङ्गलमुद्यम्य भीममभ्यद्रवद्बली ॥ ००७ ॥

तस्योर्ध्वबाहोः सदृशं रूपमासीन्महात्मनः ।
बहुधातुविचित्रस्य श्वेतस्येव महागिरेः ॥ ००८ ॥

तमुत्पतन्तं जग्राह केशवो विनयानतः ।
बाहुभ्यां पीनवृत्ताभ्यां प्रयत्नाद्बलवद्बली ॥ ००९ ॥

सितासितौ यदुवरौ शुशुभातेऽधिकं ततः ।
नभोगतौ यथा राजंश्चन्द्रसूर्यौ दिनक्षये ॥ ०१० ॥

उवाच चैनं संरब्धं शमयन्निव केशवः ।
आत्मवृद्धिर्मित्रवृद्धिर्मित्रमित्रोदयस्तथा ॥ ०११ ॥

विपरीतं द्विषत्स्वेतत्षड्विधा वृद्धिरात्मनः ॥ ०११ ॥

आत्मन्यपि च मित्रेषु विपरीतं यदा भवेत् ।
तदा विद्यान्मनोज्यानिमाशु शान्तिकरो भवेत् ॥ ०१२ ॥

अस्माकं सहजं मित्रं पाण्डवाः शुद्धपौरुषाः ।
स्वकाः पितृष्वसुः पुत्रास्ते परैर्निकृता भृशम् ॥ ०१३ ॥

प्रतिज्ञापारणं धर्मः क्षत्रियस्येति वेत्थ ह ।
सुयोधनस्य गदया भङ्क्तास्म्यूरू महाहवे ॥ ०१४ ॥

इति पूर्वं प्रतिज्ञातं भीमेन हि सभातले ॥ ०१४ ॥

मैत्रेयेणाभिशप्तश्च पूर्वमेव महर्षिणा ।

ऊरू भेत्स्यति ते भीमो गदयेति परंतप ॥ ०१५ ॥

अतो दोषं न पश्यामि मा क्रुधस्त्वं प्रलम्बहन् ॥ ०१५ ॥

यौनैर्हार्दैश्च संबन्धैः संबद्धाः स्मेह पाण्डवैः ।
तेषां वृद्ध्याभिवृद्धिर्नो मा क्रुधः पुरुषर्षभ ॥ ०१६ ॥

राम उवाच ॥

धर्मः सुचरितः सद्भिः सह द्वाभ्यां नियच्छति ।
अर्थश्चात्यर्थलुब्धस्य कामश्चातिप्रसङ्गिनः ॥ ०१७ ॥

धर्मार्थौ धर्मकामौ च कामार्थौ चाप्यपीडयन् ।
धर्मार्थकामान्योऽभ्येति सोऽत्यन्तं सुखमश्नुते ॥ ०१८ ॥

तदिदं व्याकुलं सर्वं कृतं धर्मस्य पीडनात् ।
भीमसेनेन गोविन्द कामं त्वं तु यथात्थ माम् ॥ ०१९ ॥

वासुदेव उवाच ॥

अरोषणो हि धर्मात्मा सततं धर्मवत्सलः ।
भवान्प्रख्यायते लोके तस्मात्संशाम्य मा क्रुधः ॥ ०२० ॥

प्राप्तं कलियुगं विद्धि प्रतिज्ञां पाण्डवस्य च ।
आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः ॥ ०२१ ॥

सञ्जय उवाच ॥

धर्मच्छलमपि श्रुत्वा केशवात्स विशां पते ।
नैव प्रीतमना रामो वचनं प्राह संसदि ॥ ०२२ ॥

हत्वाधर्मेण राजानं धर्मात्मानं सुयोधनम् ।
जिह्मयोधीति लोकेऽस्मिन्ख्यातिं यास्यति पाण्डवः ॥ ०२३ ॥

दुर्योधनोऽपि धर्मात्मा गतिं यास्यति शाश्वतीम् ।
ऋजुयोधी हतो राजा धार्तराष्ट्रो नराधिपः ॥ ०२४ ॥

युद्धदीक्षां प्रविश्याजौ रणयज्ञं वितत्य च ।
हुत्वात्मानममित्राग्नौ प्राप चावभृथं यशः ॥ ०२५ ॥

इत्युक्त्वा रथमास्थाय रौहिणेयः प्रतापवान् ।
श्वेताभ्रशिखराकारः प्रययौ द्वारकां प्रति ॥ ०२६ ॥

पाञ्चालाश्च सवार्ष्णेयाः पाण्डवाश्च विशां पते ।
रामे द्वारवतीं याते नातिप्रमनसोऽभवन् ॥ ०२७ ॥

ततो युधिष्ठिरं दीनं चिन्तापरमधोमुखम् ।
शोकोपहतसङ्कल्पं वासुदेवोऽब्रवीदिदम् ॥ ०२८ ॥

धर्मराज किमर्थं त्वमधर्ममनुमन्यसे ।
हतबन्धोर्यदेतस्य पतितस्य विचेतसः ॥ ०२९ ॥

दुर्योधनस्य भीमेन मृद्यमानं शिरः पदा ।
उपप्रेक्षसि कस्मात्त्वं धर्मज्ञः सन्नराधिप ॥ ०३० ॥

युधिष्ठिर उवाच ॥

न ममैतत्प्रियं कृष्ण यद्राजानं वृकोदरः ।
पदा मूर्ध्न्यस्पृशत्क्रोधान्न च हृष्ये कुलक्षये ॥ ०३१ ॥

निकृत्या निकृता नित्यं धृतराष्ट्रसुतैर्वयम् ।
बहूनि परुषाण्युक्त्वा वनं प्रस्थापिताः स्म ह ॥ ०३२ ॥

भीमसेनस्य तद्दुःखमतीव हृदि वर्तते ।
इति सञ्चिन्त्य वार्ष्णेय मयैतत्समुपेक्षितम्  ॥ ०३३  ॥

तस्माद्धत्वाकृतप्रज्ञं लुब्धं कामवशानुगम् ।
लभतां पाण्डवः कामं धर्मेऽधर्मेऽपि वा कृते  ॥ ०३४  ॥

सञ्जय उवाच  ॥

इत्युक्ते धर्मराजेन वासुदेवोऽब्रवीदिदम् ।
काममस्त्वेवमिति वै कृच्छ्राद्यदुकुलोद्वहः  ॥ ०३५  ॥

इत्युक्तो वासुदेवेन भीमप्रियहितैषिणा ।
अन्वमोदत तत्सर्वं यद्भीमेन कृतं युधि  ॥ ०३६  ॥

भीमसेनोऽपि हत्वाजौ तव पुत्रममर्षणः ।
अभिवाद्याग्रतः स्थित्वा संप्रहृष्टः कृताञ्जलिः  ॥ ०३७  ॥

प्रोवाच सुमहातेजा धर्मराजं युधिष्ठिरम् ।
हर्षादुत्फुल्लनयनो जितकाशी विशां पते  ॥ ०३८  ॥

तवाद्य पृथिवी राजन्क्षेमा निहतकण्टका ।
तां प्रशाधि महाराज स्वधर्ममनुपालयन्  ॥ ०३९  ॥

यस्तु कर्तास्य वैरस्य निकृत्या निकृतिप्रियः ।
सोऽयं विनिहतः शेते पृथिव्यां पृथिवीपते  ॥ ०४०  ॥

दुःशासनप्रभृतयः सर्वे ते चोग्रवादिनः ।
राधेयः शकुनिश्चापि निहतास्तव शत्रवः  ॥ ०४१  ॥

सेयं रत्नसमाकीर्णा मही सवनपर्वता ।

उपावृत्ता महाराज त्वामद्य निहतद्विषम्  ॥ ०४२  ॥

युधिष्ठिर उवाच  ॥

गतं वैरस्य निधनं हतो राजा सुयोधनः ।
कृष्णस्य मतमास्थाय विजितेयं वसुंधरा  ॥ ०४३  ॥

दिष्ट्या गतस्त्वमानृण्यं मातुः कोपस्य चोभयोः ।
दिष्ट्या जयसि दुर्धर्ष दिष्ट्या शत्रुर्निपातितः  ॥ ०४४  ॥

---

# अध्याय ०६०

धृतराष्ट्र उवाच  ॥

हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
पाण्डवाः सृञ्जयाश्चैव किमकुर्वत सञ्जय  ॥ ००१  ॥

सञ्जय उवाच  ॥

हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
सिंहेनेव महाराज मत्तं वनगजं वने  ॥ ००२  ॥

प्रहृष्टमनसस्तत्र कृष्णेन सह पाण्डवाः ।
पाञ्चालाः सृञ्जयाश्चैव निहते कुरुनन्दने  ॥ ००३  ॥

आविध्यन्नुत्तरीयाणि सिंहनादांश्च नेदिरे ।
नैतान्हर्षसमाविष्टानियं सेहे वसुंधरा  ॥ ००४  ॥

धनूंष्यन्ये व्याक्षिपन्त ज्याश्चाप्यन्ये तथाक्षिपन् ।
दध्मुरन्ये महाशङ्खानन्ये जघ्नुश्च दुन्दुभीः ॥ ००५ ॥

चिक्रीडुश्च तथैवान्ये जहसुश्च तवाहिताः ।
अब्रुवंश्चासकृद्वीरा भीमसेनमिदं वचः ॥ ००६ ॥

दुष्करं भवता कर्म रणेऽद्य सुमहत्कृतम् ।
कौरवेन्द्रं रणे हत्वा गदयातिकृतश्रमम् ॥ ००७ ॥

इन्द्रेणेव हि वृत्रस्य वधं परमसंयुगे ।
त्वया कृतममन्यन्त शत्रोर्वधमिमं जनाः ॥ ००८ ॥

चरन्तं विविधान्मार्गान्मण्डलानि च सर्वशः ।
दुर्योधनमिमं शूरं कोऽन्यो हन्याद्वृकोदरात् ॥ ००९ ॥

वैरस्य च गतः पारं त्वमिहान्यैः सुदुर्गमम् ।
अशक्यमेतदन्येन संपादयितुमीदृशम् ॥ ०१० ॥

कुञ्जरेणेव मत्तेन वीर सङ्ग्राममूर्धनि ।
दुर्योधनशिरो दिष्ट्या पादेन मृदितं त्वया ॥ ०११ ॥

सिंहेन महिषस्येव कृत्वा सङ्गरमद्भुतम् ।
दुःशासनस्य रुधिरं दिष्ट्या पीतं त्वयानघ ॥ ०१२ ॥

ये विप्रकुर्वन्राजानं धर्मात्मानं युधिष्ठिरम् ।
मूर्ध्नि तेषां कृतः पादो दिष्ट्या ते स्वेन कर्मणा ॥ ०१३ ॥

अमित्राणामधिष्ठानाद्वधाद्दुर्योधनस्य च ।
भीम दिष्ट्या पृथिव्यां ते प्रथितं सुमहद्यशः ॥ ०१४ ॥

एवं नूनं हते वृत्रे शक्रं नन्दन्ति बन्दिनः ।

तथा त्वां निहतामित्रं वयं नन्दाम भारत ॥ ०१५ ॥

दुर्योधनवधे यानि रोमाणि हृषितानि नः ।
अद्यापि न विहृष्यन्ति तानि तद्विद्धि भारत ॥ ०१६ ॥

इत्यब्रुवन्भीमसेनं वातिकास्तत्र सङ्गताः ॥ ०१६ ॥

तान्हृष्टान्पुरुषव्याघ्रान्पाञ्चालान्पाण्डवैः सह ।
ब्रुवतः सदृशं तत्र प्रोवाच मधुसूदनः ॥ ०१७ ॥

न न्याय्यं निहतः शत्रुर्भूयो हन्तुं जनाधिपाः ।
असकृद्वाग्भिरुग्राभिर्निहतो ह्येष मन्दधीः ॥ ०१८ ॥

तदैवैष हतः पापो यदैव निरपत्रपः ।
लुब्धः पापसहायश्च सुहृदां शासनातिगः ॥ ०१९ ॥

बहुशो विदुरद्रोणकृपगाङ्गेयसृञ्जयैः ।
पाण्डुभ्यः प्रोच्यमानोऽपि पित्र्यमंशं न दत्तवान् ॥ ०२० ॥

नैष योग्योऽद्य मित्रं वा शत्रुर्वा पुरुषाधमः ।
किमनेनातिनुन्नेन वाग्भिः काष्ठसधर्मणा ॥ ०२१ ॥

रथेष्वारोहत क्षिप्रं गच्छामो वसुधाधिपाः ।
दिष्ट्या हतोऽयं पापात्मा सामात्यज्ञातिबान्धवः ॥ ०२२ ॥

इति श्रुत्वा त्वधिक्षेपं कृष्णाद्दुर्योधनो नृपः ।
अमर्षवशमापन्न उदतिष्ठद्विशां पते ॥ ०२३ ॥

स्फिग्देशेनोपविष्टः स दोर्भ्यां विष्टभ्य मेदिनीम् ।
दृष्टिं भ्रूसङ्कटां कृत्वा वासुदेवे न्यपातयत् ॥ ०२४ ॥

अर्धोन्नतशरीरस्य रूपमासीन्नृपस्य तत् ।
क्रुद्धस्याशीविषस्येव च्छिन्नपुच्छस्य भारत ॥ ०२५ ॥

प्राणान्तकरणीं घोरां वेदनामविचिन्तयन् ।
दुर्योधनो वासुदेवं वाग्भिरुग्राभिरार्दयत् ॥ ०२६ ॥

कंसदासस्य दायाद न ते लज्जास्त्यनेन वै ।
अधर्मेण गदायुद्धे यदहं विनिपातितः ॥ ०२७ ॥

ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्या प्रयच्छता ।
किं न विज्ञातमेतन्मे यदर्जुनमवोचथाः ॥ ०२८ ॥

घातयित्वा महीपालानृजुयुद्धान्सहस्रशः ।
जिह्मैरुपायैर्बहुभिर्न ते लज्जा न ते घृणा ॥ ०२९ ॥

अहन्यहनि शूराणां कुर्वाणः कदनं महत् ।
शिखण्डिनं पुरस्कृत्य घातितस्ते पितामहः ॥ ०३० ॥

अश्वत्थाम्नः सनामानं हत्वा नागं सुदुर्मते ।
आचार्यो न्यासितः शस्त्रं किं तन्न विदितं मम ॥ ०३१ ॥

स चानेन नृशंसेन धृष्टद्युम्नेन वीर्यवान् ।
पात्यमानस्त्वया दृष्टो न चैनं त्वमवारयः ॥ ०३२ ॥

वधार्थं पाण्डुपुत्रस्य याचितां शक्तिमेव च ।
घटोत्कचे व्यंसयथाः कस्त्वत्तः पापकृत्तमः ॥ ०३३ ॥

छिन्नबाहुः प्रायगतस्तथा भूरिश्रवा बली ।
त्वया निसृष्टेन हतः शैनेयेन दुरात्मना ॥ ०३४ ॥

कुर्वाणश्चोत्तमं कर्म कर्णः पार्थजिगीषया ।

व्यंसनेनाश्वसेनस्य पन्नगेन्द्रसुतस्य वै ॥ ०३५ ॥

पुनश्च पतिते चक्रे व्यसनार्तः पराजितः ।
पातितः समरे कर्णश्चक्रव्यग्रोऽग्रणीर्नृणाम् ॥ ०३६ ॥

यदि मां चापि कर्णं च भीष्मद्रोणौ च संयुगे ।
ऋजुना प्रतियुध्येथा न ते स्याद्विजयो ध्रुवम् ॥ ०३७ ॥

त्वया पुनरनार्येण जिह्ममार्गेण पार्थिवाः ।
स्वधर्ममनुतिष्ठन्तो वयं चान्ये च घातिताः ॥ ०३८ ॥

वासुदेव उवाच ॥

हतस्त्वमसि गान्धारे सभ्रातृसुतबान्धवः ।
सगणः ससुहृच्चैव पापमार्गमनुष्ठितः ॥ ०३९ ॥

तवैव दुष्कृतैर्वीरौ भीष्मद्रोणौ निपातितौ ।
कर्णश्च निहतः संख्ये तव शीलानुवर्तकः ॥ ०४० ॥

याच्यमानो मया मूढ पित्र्यमंशं न दित्ससि ।
पाण्डवेभ्यः स्वराज्यार्धं लोभाच्छकुनिनिश्चयात् ॥ ०४१ ॥

विषं ते भीमसेनाय दत्तं सर्वे च पाण्डवाः ।
प्रदीपिता जतुगृहे मात्रा सह सुदुर्मते ॥ ०४२ ॥

सभायां याज्ञसेनी च कृष्टा द्यूते रजस्वला ।
तदैव तावद्दुष्टात्मन्वध्यस्त्वं निरपत्रपः ॥ ०४३ ॥

अनक्षज्ञं च धर्मज्ञं सौबलेनाक्षवेदिना ।
निकृत्या यत्पराजैषीस्तस्मादसि हतो रणे ॥ ०४४ ॥

जयद्रथेन पापेन यत्कृष्णा क्लेशिता वने ।
यातेषु मृगयां तेषु तृणबिन्दोरथाश्रमे ॥ ०४५ ॥

अभिमन्युश्च यद्बाल एको बहुभिराहवे ।
त्वद्दोषैर्निहतः पाप तस्मादसि हतो रणे ॥ ०४६ ॥

दुर्योधन उवाच ॥

अधीतं विधिवद्दत्तं भूः प्रशास्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां को नु स्वन्ततरो मया ॥ ०४७ ॥

यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुपश्यताम् ।
तदिदं निधनं प्राप्तं को नु स्वन्ततरो मया ॥ ०४८ ॥

देवार्हा मानुषा भोगाः प्राप्ता असुलभा नृपैः ।
ऐश्वर्यं चोत्तमं प्राप्तं को नु स्वन्ततरो मया ॥ ०४९ ॥

ससुहृत्सानुबन्धश्च स्वर्गं गन्ताहमच्युत ।
यूयं विहतसङ्कल्पाः शोचन्तो वर्तयिष्यथ ॥ ०५० ॥

सञ्जय उवाच ॥

अस्य वाक्यस्य निधने कुरुराजस्य भारत ।
अपतत्सुमहद्वर्षं पुष्पाणां पुण्यगन्धिनाम् ॥ ०५१ ॥

अवादयन्त गन्धर्वा जगुश्चाप्सरसां गणाः ।
सिद्धाश्च मुमुचुर्वाचः साधु साध्विति भारत ॥ ०५२ ॥

ववौ च सुरभिर्वायुः पुण्यगन्धो मृदुः सुखः ।
व्यराजतामलं चैव नभो वैडूर्यसंनिभम् ॥ ०५३ ॥

अत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः ।
दुर्योधनस्य पूजां च दृष्ट्वा व्रीडामुपागमन् ॥ ०५४ ॥

हतांश्चाधर्मतः श्रुत्वा शोकार्ताः शुशुचुर्हि ते ।
भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च ॥ ०५५ ॥

तांस्तु चिन्तापरान्दृष्ट्वा पाण्डवान्दीनचेतसः ।
प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिस्वनः ॥ ०५६ ॥

नैष शक्योऽतिशीघ्रास्त्रस्ते च सर्वे महारथाः ।
ऋजुयुद्धेन विक्रान्ता हन्तुं युष्माभिराहवे ॥ ०५७ ॥

उपाया विहिता ह्येते मया तस्मान्नराधिपाः ।
अन्यथा पाण्डवेयानां नाभविष्यज्जयः क्वचित् ॥ ०५८ ॥

ते हि सर्वे महात्मानश्चत्वारोऽतिरथा भुवि ।
न शक्या धर्मतो हन्तुं लोकपालैरपि स्वयम् ॥ ०५९ ॥

तथैवायं गदापाणिर्धार्तराष्ट्रो गतक्लमः ।
न शक्यो धर्मतो हन्तुं कालेनापीह दण्डिना ॥ ०६० ॥

न च वो हृदि कर्तव्यं यदयं घातितो नृपः ।
मिथ्यावध्यास्तथोपायैर्बहवः शत्रवोऽधिकाः ॥ ०६१ ॥

पूर्वैरनुगतो मार्गो देवैरसुरघातिभिः ।
सद्भिश्चानुगतः पन्थाः स सर्वैरनुगम्यते ॥ ०६२ ॥

कृतकृत्याः स्म सायाह्ने निवासं रोचयामहे ।
साश्वनागरथाः सर्वे विश्रमामो नराधिपाः ॥ ०६३ ॥

वासुदेववचः श्रुत्वा तदानीं पाण्डवैः सह ।

पाञ्चाला भृशसंहृष्टा विनेदुः सिंहसंघवत् ॥ ०६४ ॥

ततः प्राध्मापयञ्शङ्खान्पाञ्चजन्यं च माधवः ।
हृष्टा दुर्योधनं दृष्ट्वा निहतं पुरुषर्षभाः ॥ ०६५ ॥

---

# अध्याय ०६१

सञ्जय उवाच ॥

ततस्ते प्रययुः सर्वे निवासाय महीक्षितः ।
शङ्खान्प्रध्मापयन्तो वै हृष्टाः परिघबाहवः ॥ ००१ ॥

पाण्डवान्गच्छतश्चापि शिबिरं नो विशां पते ।
महेष्वासोऽन्वगात्पश्चाद्युयुत्सुः सात्यकिस्तथा ॥ ००२ ॥

धृष्टद्युम्नः शिखण्डी च द्रौपदेयाश्च सर्वशः ।
सर्वे चान्ये महेष्वासा ययुः स्वशिबिराण्युत ॥ ००३ ॥

ततस्ते प्राविशन्पार्था हतत्विड्कं हतेश्वरम् ।
दुर्योधनस्य शिबिरं रङ्गवद्विसृते जने ॥ ००४ ॥

गतोत्सवं पुरमिव हृतनागमिव ह्रदम् ।
स्त्रीवर्षवरभूयिष्ठं वृद्धामात्यैरधिष्ठितम् ॥ ००५ ॥

तत्रैतान्पर्युपातिष्ठन्दुर्योधनपुरःसराः ।
कृताञ्जलिपुटा राजन्काषायमलिनाम्बराः ॥ ००६ ॥

शिबिरं समनुप्राप्य कुरुराजस्य पाण्डवाः ।

अवतेरुर्महाराज रथेभ्यो रथसत्तमाः ॥ ००७ ॥

ततो गाण्डीवधन्वानमभ्यभाषत केशवः ।
स्थितः प्रियहिते नित्यमतीव भरतर्षभ ॥ ००८ ॥

अवरोपय गाण्डीवमक्षय्यौ च महेषुधी ।
अथाहमवरोक्ष्यामि पश्चाद्भरतसत्तम ॥ ००९ ॥

स्वयं चैवावरोह त्वमेतच्छ्रेयस्तवानघ ।
तच्चाकरोत्तथा वीरः पाण्डुपुत्रो धनञ्जयः ॥ ०१० ॥

अथ पश्चात्ततः कृष्णो रश्मीनुत्सृज्य वाजिनाम् ।
अवारोहत मेधावी रथाद्गाण्डीवधन्वनः ॥ ०११ ॥

अथावतीर्णे भूतानामीश्वरे सुमहात्मनि ।
कपिरन्तर्दधे दिव्यो ध्वजो गाण्डीवधन्वनः ॥ ०१२ ॥

स दग्धो द्रोणकर्णाभ्यां दिव्यैरस्त्रैर्महारथः ।
अथ दीप्तोऽग्निना ह्याशु प्रजज्वाल महीपते ॥ ०१३ ॥

सोपासङ्गः सरश्मिश्च साश्वः सयुगबन्धुरः ।
भस्मीभूतोऽपतद्भूमौ रथो गाण्डीवधन्वनः ॥ ०१४ ॥

तं तथा भस्मभूतं तु दृष्ट्वा पाण्डुसुताः प्रभो ।
अभवन्विस्मिता राजन्नर्जुनश्चेदमब्रवीत् ॥ ०१५ ॥

कृताञ्जलिः सप्रणयं प्रणिपत्याभिवाद्य च ।
गोविन्द कस्माद्भगवन्रथो दग्धोऽयमग्निना ॥ ०१६ ॥

किमेतन्महदाश्चर्यमभवद्यदुनन्दन ।
तन्मे ब्रूहि महाबाहो श्रोतव्यं यदि मन्यसे ॥ ०१७ ॥

वासुदेव उवाच ॥

अस्त्रैर्बहुविधैर्दग्धः पूर्वमेवायमर्जुन ।
मदधिष्ठितत्वात्समरे न विशीर्णः परंतप ॥ ०१८ ॥

इदानीं तु विशीर्णोऽयं दग्धो ब्रह्मास्त्रतेजसा ।
मया विमुक्तः कौन्तेय त्वय्यद्य कृतकर्मणि ॥ ०१९ ॥

सञ्जय उवाच ॥

ईषदुत्स्मयमानश्च भगवान्केशवोऽरिहा ।
परिष्वज्य च राजानं युधिष्ठिरमभाषत ॥ ०२० ॥

दिष्ट्या जयसि कौन्तेय दिष्ट्या ते शत्रवो जिताः ।
दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः ॥ ०२१ ॥

त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ ।
मुक्ता वीरक्षयादस्मात्सङ्ग्रामान्निहतद्विषः ॥ ०२२ ॥

क्षिप्रमुत्तरकालानि कुरु कार्याणि भारत ॥ ०२२ ॥

उपयातमुपप्लव्यं सह गाण्डीवधन्वना ।
आनीय मधुपर्कं मां यत्पुरा त्वमवोचथाः ॥ ०२३ ॥

एष भ्राता सखा चैव तव कृष्ण धनञ्जयः ।
रक्षितव्यो महाबाहो सर्वास्वापत्स्विति प्रभो ॥ ०२४ ॥

तव चैवं ब्रुवाणस्य तथेत्येवाहमब्रुवम् ॥ ०२४ ॥

स सव्यसाची गुप्तस्ते विजयी च नरेश्वर ।

भ्रातृभिः सह राजेन्द्र शूरः सत्यपराक्रमः ॥ ०२५ ॥

मुक्तो वीरक्षयादस्मात्सङ्ग्रामाद्रोमहर्षणात् ॥ ०२५ ॥

एवमुक्तस्तु कृष्णेन धर्मराजो युधिष्ठिरः ।
हृष्टरोमा महाराज प्रत्युवाच जनार्दनम् ॥ ०२६ ॥

प्रमुक्तं द्रोणकर्णाभ्यां ब्रह्मास्त्रमरिमर्दन ।
कस्त्वदन्यः सहेत्साक्षादपि वज्री पुरंदरः ॥ ०२७ ॥

भवतस्तु प्रसादेन सङ्ग्रामे बहवो जिताः ।
महारणगतः पार्थो यच्च नासीत्पराङ्मुखः ॥ ०२८ ॥

तथैव च महाबाहो पर्यायैर्बहुभिर्मया ।
कर्मणामनुसंतानं तेजसश्च गतिः शुभा ॥ ०२९ ॥

उपप्लव्ये महर्षिर्मे कृष्णद्वैपायनोऽब्रवीत् ।
यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥ ०३० ॥

इत्येवमुक्ते ते वीराः शिबिरं तव भारत ।
प्रविश्य प्रत्यपद्यन्त कोशरत्नर्द्धिसञ्चयान् ॥ ०३१ ॥

रजतं जातरूपं च मणीनथ च मौक्तिकान् ।
भूषणान्यथ मुख्यानि कम्बलान्यजिनानि च ॥ ०३२ ॥

दासीदासमसंख्येयं राज्योपकरणानि च ॥ ०३२ ॥

ते प्राप्य धनमक्षय्यं त्वदीयं भरतर्षभ ।
उदक्रोशन्महेष्वासा नरेन्द्र विजितारयः ॥ ०३३ ॥

ते तु वीराः समाश्वस्य वाहनान्यवमुच्य च ।

अतिष्ठन्त मुहुः सर्वे पाण्डवाः सात्यकिस्तथा ॥ ०३४ ॥

अथाब्रवीन्महाराज वासुदेवो महायशाः ।
अस्माभिर्मङ्गलार्थाय वस्तव्यं शिबिराद्बहिः ॥ ०३५ ॥

तथेत्युक्त्वा च ते सर्वे पाण्डवाः सात्यकिस्तथा ।
वासुदेवेन सहिता मङ्गलार्थं ययुर्बहिः ॥ ०३६ ॥

ते समासाद्य सरितं पुण्यामोघवतीं नृप ।
न्यवसन्नथ तां रात्रिं पाण्डवा हतशत्रवः ॥ ०३७ ॥

ततः संप्रेषयामासुर्यादवं नागसाह्वयम् ।
स च प्रायाज्जवेनाशु वासुदेवः प्रतापवान् ॥ ०३८ ॥

दारुकं रथमारोप्य येन राजाम्बिकासुतः ॥ ०३८ ॥

तमूचुः संप्रयास्यन्तं सैन्यसुग्रीववाहनम् ।
प्रत्याश्वासय गान्धारीं हतपुत्रां यशस्विनीम् ॥ ०३९ ॥

स प्रायात्पाण्डवैरुक्तस्तत्पुरं सात्वतां वरः ।
आससादयिषुः क्षिप्रं गान्धारीं निहतात्मजाम् ॥ ०४० ॥

---

# अध्याय ०६२

जनमेजय उवाच ॥

किमर्थं राजशार्दूलो धर्मराजो युधिष्ठिरः ।
गान्धार्याः प्रेषयामास वासुदेवं परंतपम् ॥ ००१ ॥

यदा पूर्वं गतः कृष्णः शमार्थं कौरवान्प्रति ।
न च तं लब्धवान्कामं ततो युद्धमभूदिदम् ॥ ००२ ॥

निहतेषु तु योधेषु हते दुर्योधने तथा ।
पृथिव्यां पाण्डवेयस्य निःसपत्ने कृते युधि ॥ ००३ ॥

विद्रुते शिबिरे शून्ये प्राप्ते यशसि चोत्तमे ।
किं नु तत्कारणं ब्रह्मन्येन कृष्णो गतः पुनः ॥ ००४ ॥

न चैतत्कारणं ब्रह्मन्नल्पं वै प्रतिभाति मे ।
यत्रागमदमेयात्मा स्वयमेव जनार्दनः ॥ ००५ ॥

तत्त्वतो वै समाचक्ष्व सर्वमध्वर्युसत्तम ।
यच्चात्र कारणं ब्रह्मन्कार्यस्यास्य विनिश्चये ॥ ००६ ॥

वैशंपायन उवाच ॥

त्वद्युक्तोऽयमनुप्रश्नो यन्मां पृच्छसि पार्थिव ।
तत्तेऽहं संप्रवक्ष्यामि यथावद्भरतर्षभ ॥ ००७ ॥

हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
व्युत्क्रम्य समयं राजन्धार्तराष्ट्रं महाबलम् ॥ ००८ ॥

अन्यायेन हतं दृष्ट्वा गदायुद्धेन भारत ।
युधिष्ठिरं महाराज महद्भयमथाविशत् ॥ ००९ ॥

चिन्तयानो महाभागां गान्धारीं तपसान्विताम् ।
घोरेण तपसा युक्तां त्रैलोक्यमपि सा दहेत् ॥ ०१० ॥

तस्य चिन्तयमानस्य बुद्धिः समभवत्तदा ।

गान्धार्याः क्रोधदीप्तायाः पूर्वं प्रशमनं भवेत्  ॥ ०११  ॥

सा हि पुत्रवधं श्रुत्वा कृतमस्माभिरीदृशम् ।
मानसेनाग्निना क्रुद्धा भस्मसान्नः करिष्यति  ॥ ०१२  ॥

कथं दुःखमिदं तीव्रं गान्धारी प्रसहिष्यति ।
श्रुत्वा विनिहतं पुत्रं छलेनाजिह्मयोधिनम्  ॥ ०१३  ॥

एवं विचिन्त्य बहुधा भयशोकसमन्वितः ।
वासुदेवमिदं वाक्यं धर्मराजोऽभ्यभाषत  ॥ ०१४  ॥

तव प्रसादाद्गोविन्द राज्यं निहतकण्टकम् ।
अप्राप्यं मनसापीह प्राप्तमस्माभिरच्युत  ॥ ०१५  ॥

प्रत्यक्षं मे महाबाहो सङ्ग्रामे रोमहर्षणे ।
विमर्दः सुमहान्प्राप्तस्त्वया यादवनन्दन  ॥ ०१६  ॥

त्वया देवासुरे युद्धे वधार्थममरद्विषाम् ।
यथा साह्यं पुरा दत्तं हताश्च विबुधद्विषः  ॥ ०१७  ॥

साह्यं तथा महाबाहो दत्तमस्माकमच्युत ।
सारथ्येन च वार्ष्णेय भवता यद्धृता वयम्  ॥ ०१८  ॥

यदि न त्वं भवेन्नाथः फल्गुनस्य महारणे ।
कथं शक्यो रणे जेतुं भवेदेष बलार्णवः  ॥ ०१९  ॥

गदाप्रहारा विपुलाः परिघैश्चापि ताडनम् ।
शक्तिभिर्भिण्डिपालैश्च तोमरैः सपरश्वधैः  ॥ ०२०  ॥

वाचश्च परुषाः प्राप्तास्त्वया ह्यस्मद्धितैषिणा ।
ताश्च ते सफलाः सर्वा हते दुर्योधनेऽच्युत  ॥ ०२१  ॥

गान्धार्या हि महाबाहो क्रोधं बुध्यस्व माधव ।
सा हि नित्यं महाभागा तपसोग्रेण कर्शिता ॥ ०२२ ॥

पुत्रपौत्रवधं श्रुत्वा ध्रुवं नः संप्रधक्ष्यति ।
तस्याः प्रसादनं वीर प्राप्तकालं मतं मम ॥ ०२३ ॥

कश्च तां क्रोधदीप्ताक्षीं पुत्रव्यसनकर्शिताम् ।
वीक्षितुं पुरुषः शक्तस्त्वामृते पुरुषोत्तम ॥ ०२४ ॥

तत्र मे गमनं प्राप्तं रोचते तव माधव ।
गान्धार्याः क्रोधदीप्तायाः प्रशमार्थमरिंदम ॥ ०२५ ॥

त्वं हि कर्ता विकर्ता च लोकानां प्रभवाप्ययः ।
हेतुकारणसंयुक्तैर्वाक्यैः कालसमीरितैः ॥ ०२६ ॥

क्षिप्रमेव महाप्राज्ञ गान्धारीं शमयिष्यसि ।
पितामहश्च भगवान्कृष्णस्तत्र भविष्यति ॥ ०२७ ॥

सर्वथा ते महाबाहो गान्धार्याः क्रोधनाशनम् ।
कर्तव्यं सात्वतश्रेष्ठ पाण्डवानां हितैषिणा ॥ ०२८ ॥

धर्मराजस्य वचनं श्रुत्वा यदुकुलोद्वहः ।
आमन्त्र्य दारुकं प्राह रथः सज्जो विधीयताम् ॥ ०२९ ॥

केशवस्य वचः श्रुत्वा त्वरमाणोऽथ दारुकः ।
न्यवेदयद्रथं सज्जं केशवाय महात्मने ॥ ०३० ॥

तं रथं यादवश्रेष्ठः समारुह्य परंतपः ।
जगाम हास्तिनपुरं त्वरितः केशवो विभुः ॥ ०३१ ॥

ततः प्रायान्महाराज माधवो भगवान्रथी ।
नागसाह्वयमासाद्य प्रविवेश च वीर्यवान् ॥ ०३२ ॥

प्रविश्य नगरं वीरो रथघोषेण नादयन् ।
विदितो धृतराष्ट्रस्य सोऽवतीर्य रथोत्तमात् ॥ ०३३ ॥

अभ्यगच्छददीनात्मा धृतराष्ट्रनिवेशनम् ।
पूर्वं चाभिगतं तत्र सोऽपश्यदृषिसत्तमम् ॥ ०३४ ॥

पादौ प्रपीड्य कृष्णस्य राज्ञश्चापि जनार्दनः ।
अभ्यवादयदव्यग्रो गान्धारीं चापि केशवः ॥ ०३५ ॥

ततस्तु यादवश्रेष्ठो धृतराष्ट्रमधोक्षजः ।
पाणिमालम्ब्य राज्ञः स सस्वरं प्ररुरोद ह ॥ ०३६ ॥

स मुहूर्तमिवोत्सृज्य बाष्पं शोकसमुद्भवम् ।
प्रक्षाल्य वारिणा नेत्रे आचम्य च यथाविधि ॥ ०३७ ॥

उवाच प्रश्रितं वाक्यं धृतराष्ट्रमरिंदमः ॥ ०३७ ॥

न तेऽस्त्यविदितं किञ्चिद्भूतभव्यस्य भारत ।
कालस्य च यथा वृत्तं तत्ते सुविदितं प्रभो ॥ ०३८ ॥

यदिदं पाण्डवैः सर्वैस्तव चित्तानुरोधिभिः ।
कथं कुलक्षयो न स्यात्तथा क्षत्रस्य भारत ॥ ०३९ ॥

भ्रातृभिः समयं कृत्वा क्षान्तवान्धर्मवत्सलः ।
द्यूतच्छलजितैः शक्तैर्वनवासोऽभ्युपागतः ॥ ०४० ॥

अज्ञातवासचर्या च नानावेशसमावृतैः ।
अन्ये च बहवः क्लेशास्त्वशक्तैरिव नित्यदा ॥ ०४१ ॥

मया च स्वयमागम्य युद्धकाल उपस्थिते ।
सर्वलोकस्य सांनिध्ये ग्रामांस्त्वं पञ्च याचितः ॥ ०४२ ॥

त्वया कालोपसृष्टेन लोभतो नापवर्जिताः ।
तवापराधान्नृपते सर्वं क्षत्रं क्षयं गतम् ॥ ०४३ ॥

भीष्मेण सोमदत्तेन बाह्लिकेन कृपेण च ।
द्रोणेन च सपुत्रेण विदुरेण च धीमता ॥ ०४४ ॥

याचितस्त्वं शमं नित्यं न च तत्कृतवानसि ॥ ०४४ ॥

कालोपहतचित्तो हि सर्वो मुह्यति भारत ।
यथा मूढो भवान्पूर्वमस्मिन्नर्थे समुद्यते ॥ ०४५ ॥

किमन्यत्कालयोगाद्धि दिष्टमेव परायणम् ।
मा च दोषं महाराज पाण्डवेषु निवेशय ॥ ०४६ ॥

अल्पोऽप्यतिक्रमो नास्ति पाण्डवानां महात्मनाम् ।
धर्मतो न्यायतश्चैव स्नेहतश्च परंतप ॥ ०४७ ॥

एतत्सर्वं तु विज्ञाय आत्मदोषकृतं फलम् ।
असूयां पाण्डुपुत्रेषु न भवान्कर्तुमर्हति ॥ ०४८ ॥

कुलं वंशश्च पिण्डश्च यच्च पुत्रकृतं फलम् ।
गान्धार्यास्तव चैवाद्य पाण्डवेषु प्रतिष्ठितम् ॥ ०४९ ॥

एतत्सर्वमनुध्यात्वा आत्मनश्च व्यतिक्रमम् ।
शिवेन पाण्डवान्ध्याहि नमस्ते भरतर्षभ ॥ ०५० ॥

जानासि च महाबाहो धर्मराजस्य या त्वयि ।

भक्तिर्भरतशार्दूल स्नेहश्चापि स्वभावतः ॥ ०५१ ॥

एतच्च कदनं कृत्वा शत्रूणामपकारिणाम् ।
दह्यते स्म दिवारात्रं न च शर्माधिगच्छति ॥ ०५२ ॥

त्वां चैव नरशार्दूल गान्धारीं च यशस्विनीम् ।
स शोचन्भरतश्रेष्ठ न शान्तिमधिगच्छति ॥ ०५३ ॥

ह्रिया च परयाविष्टो भवन्तं नाधिगच्छति ।
पुत्रशोकाभिसंतप्तं बुद्धिव्याकुलितेन्द्रियम् ॥ ०५४ ॥

एवमुक्त्वा महाराज धृतराष्ट्रं यदूत्तमः ।
उवाच परमं वाक्यं गान्धारीं शोककर्शिताम् ॥ ०५५ ॥

सौबलेयि निबोध त्वं यत्त्वां वक्ष्यामि सुव्रते ।
त्वत्समा नास्ति लोकेऽस्मिन्नद्य सीमन्तिनी शुभे ॥ ०५६ ॥

जानामि च यथा राज्ञि सभायां मम संनिधौ ।
धर्मार्थसहितं वाक्यमुभयोः पक्षयोर्हितम् ॥ ०५७ ॥

उक्तवत्यसि कल्याणि न च ते तनयैः श्रुतम् ॥ ०५७ ॥

दुर्योधनस्त्वया चोक्तो जयार्थी परुषं वचः ।
शृणु मूढ वचो मह्यं यतो धर्मस्ततो जयः ॥ ०५८ ॥

तदिदं समनुप्राप्तं तव वाक्यं नृपात्मजे ।
एवं विदित्वा कल्याणि मा स्म शोके मनः कृथाः ॥ ०५९ ॥

पाण्डवानां विनाशाय मा ते बुद्धिः कदाचन ॥ ०५९ ॥

शक्ता चासि महाभागे पृथिवीं सचराचराम् ।

चक्षुषा क्रोधदीप्तेन निर्दग्धुं तपसो बलात्  ॥ ०६० ॥

वासुदेववचः श्रुत्वा गान्धारी वाक्यमब्रवीत् ।
एवमेतन्महाबाहो यथा वदसि केशव  ॥ ०६१ ॥

आधिभिर्दह्यमानाया मतिः सञ्चलिता मम ।
सा मे व्यवस्थिता श्रुत्वा तव वाक्यं जनार्दन  ॥ ०६२ ॥

राज्ञस्त्वन्धस्य वृद्धस्य हतपुत्रस्य केशव ।
त्वं गतिः सह तैर्वीरैः पाण्डवैर्द्विपदां वर  ॥ ०६३ ॥

एतावदुक्त्वा वचनं मुखं प्रच्छाद्य वाससा ।
पुत्रशोकाभिसंतप्ता गान्धारी प्ररुरोद ह  ॥ ०६४ ॥

तत एनां महाबाहुः केशवः शोककर्शिताम् ।
हेतुकारणसंयुक्तैर्वाक्यैराश्वासयत्प्रभुः  ॥ ०६५ ॥

समाश्वास्य च गान्धारीं धृतराष्ट्रं च माधवः ।
द्रौणेः सङ्कल्पितं भावमन्वबुध्यत केशवः  ॥ ०६६ ॥

ततस्त्वरित उत्थाय पादौ मूर्ध्ना प्रणम्य च ।
द्वैपायनस्य राजेन्द्र ततः कौरवमब्रवीत्  ॥ ०६७ ॥

आपृच्छे त्वां कुरुश्रेष्ठ मा च शोके मनः कृथाः ।
द्रौणेः पापोऽस्त्यभिप्रायस्तेनास्मि सहसोत्थितः  ॥ ०६८ ॥

पाण्डवानां वधे रात्रौ बुद्धिस्तेन प्रदर्शिता  ॥ ०६८ ॥

एतच्छ्रुत्वा तु वचनं गान्धार्या सहितोऽब्रवीत् ।
धृतराष्ट्रो महाबाहुः केशवं केशिसूदनम्  ॥ ०६९ ॥

शीघ्रं गच्छ महाबाहो पाण्डवान्परिपालय ।
भूयस्त्वया समेष्यामि क्षिप्रमेव जनार्दन ॥ ०७० ॥

प्रायात्ततस्तु त्वरितो दारुकेण सहाच्युतः ॥ ०७० ॥

वासुदेवे गते राजन्धृतराष्ट्रं जनेश्वरम् ।
आश्वासयदमेयात्मा व्यासो लोकनमस्कृतः ॥ ०७१ ॥

वासुदेवोऽपि धर्मात्मा कृतकृत्यो जगाम ह ।
शिबिरं हास्तिनपुराद्दिदृक्षुः पाण्डवान्नृप ॥ ०७२ ॥

आगम्य शिबिरं रात्रौ सोऽभ्यगच्छत पाण्डवान् ।
तच्च तेभ्यः समाख्याय सहितस्तैः समाविशत् ॥ ०७३ ॥

---

# अध्याय ०६३

धृतराष्ट्र उवाच ॥

अधिष्ठितः पदा मूर्ध्नि भग्नसक्थो महीं गतः ।
शौटीरमानी पुत्रो मे कान्यभाषत सञ्जय ॥ ००१ ॥

अत्यर्थं कोपनो राजा जातवैरश्च पाण्डुषु ।
व्यसनं परमं प्राप्तः किमाह परमाहवे ॥ ००२ ॥

सञ्जय उवाच ॥

शृणु राजन्प्रवक्ष्यामि यथावृत्तं नराधिप ।
राज्ञा यदुक्तं भग्नेन तस्मिन्व्यसन आगते ॥ ००३ ॥

भग्नसक्थो नृपो राजन्पांसुना सोऽवगुण्ठितः ।
यमयन्मूर्धजांस्तत्र वीक्ष्य चैव दिशो दश  ॥ ००४  ॥

केशान्नियम्य यत्नेन निःश्वसन्नुरगो यथा ।
संरम्भाश्रुपरीताभ्यां नेत्राभ्यामभिवीक्ष्य माम्  ॥ ००५  ॥

बाहू धरण्यां निष्पिष्य मुहुर्मत्त इव द्विपः ।
प्रकीर्णान्मूर्धजान्धुन्वन्दन्तैर्दन्तानुपस्पृशन्  ॥ ००६  ॥

गर्हयन्पाण्डवं ज्येष्ठं निःश्वस्येदमथाब्रवीत्  ॥ ००६  ॥

भीष्मे शांतनवे नाथे कर्णे चास्त्रभृतां वरे ।
गौतमे शकुनौ चापि द्रोणे चास्त्रभृतां वरे  ॥ ००७  ॥

अश्वत्थाम्नि तथा शल्ये शूरे च कृतवर्मणि ।
इमामवस्थां प्राप्तोऽस्मि कालो हि दुरतिक्रमः  ॥ ००८  ॥

एकादशचमूभर्ता सोऽहमेतां दशां गतः ।
कालं प्राप्य महाबाहो न कश्चिदतिवर्तते  ॥ ००९  ॥

आख्यातव्यं मदीयानां येऽस्मिञ्जीवन्ति सङ्गरे ।
यथाहं भीमसेनेन व्युत्क्रम्य समयं हतः  ॥ ०१०  ॥

बहूनि सुनृशंसानि कृतानि खलु पाण्डवैः ।
भूरिश्रवसि कर्णे च भीष्मे द्रोणे च श्रीमति  ॥ ०११  ॥

इदं चाकीर्तिजं कर्म नृशंसैः पाण्डवैः कृतम् ।
येन ते सत्सु निर्वेदं गमिष्यन्तीति मे मतिः  ॥ ०१२  ॥

का प्रीतिः सत्त्वयुक्तस्य कृत्वोपधिकृतं जयम् ।

को वा समयभेत्तारं बुधः संमन्तुमर्हति  ॥ ०१३  ॥

अधर्मेण जयं लब्ध्वा को नु हृष्येत पण्डितः ।
यथा संहृष्यते पापः पाण्डुपुत्रो वृकोदरः  ॥ ०१४  ॥

किं नु चित्रमतस्त्वद्य भग्नसक्थस्य यन्मम ।
क्रुद्धेन भीमसेनेन पादेन मृदितं शिरः  ॥ ०१५  ॥

प्रतपन्तं श्रिया जुष्टं वर्तमानं च बन्धुषु ।
एवं कुर्यान्नरो यो हि स वै सञ्जय पूजितः  ॥ ०१६  ॥

अभिज्ञौ क्षत्रधर्मस्य मम माता पिता च मे ।
तौ हि सञ्जय दुःखार्तौ विज्ञाप्यौ वचनान्मम  ॥ ०१७  ॥

इष्टं भृत्या भृताः सम्यग्भूः प्रशास्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां जीवतामेव सञ्जय  ॥ ०१८  ॥

दत्ता दाया यथाशक्ति मित्राणां च प्रियं कृतम् ।
अमित्रा बाधिताः सर्वे को नु स्वन्ततरो मया  ॥ ०१९  ॥

यातानि परराष्ट्राणि नृपा भुक्ताश्च दासवत् ।
प्रियेभ्यः प्रकृतं साधु को नु स्वन्ततरो मया  ॥ ०२०  ॥

मानिता बान्धवाः सर्वे मान्यः संपूजितो जनः ।
त्रितयं सेवितं सर्वं को नु स्वन्ततरो मया  ॥ ०२१  ॥

आज्ञप्तं नृपमुख्येषु मानः प्राप्तः सुदुर्लभः ।
आजानेयैस्तथा यातं को नु स्वन्ततरो मया  ॥ ०२२  ॥

अधीतं विधिवद्दत्तं प्राप्तमायुर्निरामयम् ।
स्वधर्मेण जिता लोकाः को नु स्वन्ततरो मया  ॥ ०२३  ॥

दिष्ट्या नाहं जितः संख्ये परान्प्रेष्यवदाश्रितः ।
दिष्ट्या मे विपुला लक्ष्मीर्मृते त्वन्यं गता विभो ॥ ०२४ ॥

यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुतिष्ठताम् ।
निधनं तन्मया प्राप्तं को नु स्वन्ततरो मया ॥ ०२५ ॥

दिष्ट्या नाहं परावृत्तो वैरात्प्राकृतवज्जितः ।
दिष्ट्या न विमतिं काञ्चिद्भजित्वा तु पराजितः ॥ ०२६ ॥

सुप्तं वाथ प्रमत्तं वा यथा हन्याद्विषेण वा ।
एवं व्युत्क्रान्तधर्मेण व्युत्क्रम्य समयं हतः ॥ ०२७ ॥

अश्वत्थामा महाभागः कृतवर्मा च सात्वतः ।
कृपः शारद्वतश्चैव वक्तव्या वचनान्मम ॥ ०२८ ॥

अधर्मेण प्रवृत्तानां पाण्डवानामनेकशः ।
विश्वासं समयघ्नानां न यूयं गन्तुमर्हथ ॥ ०२९ ॥

वार्तिकांश्चाब्रवीद्राजा पुत्रस्ते सत्यविक्रमः ।
अधर्माद्भीमसेनेन निहतोऽहं यथा रणे ॥ ०३० ॥

सोऽहं द्रोणं स्वर्गगतं शल्यकर्णावुभौ तथा ।
वृषसेनं महावीर्यं शकुनिं चापि सौबलम् ॥ ०३१ ॥

जलसंधं महावीर्यं भगदत्तं च पार्थिवम् ।
सौमदत्तिं महेष्वासं सैन्धवं च जयद्रथम् ॥ ०३२ ॥

दुःशासनपुरोगांश्च भ्रातॄनात्मसमांस्तथा ।
दौःशासनिं च विक्रान्तं लक्ष्मणं चात्मजावुभौ ॥ ०३३ ॥

एतांश्चान्यांश्च सुबहून्मदीयांश्च सहस्रशः ।
पृष्ठतोऽनुगमिष्यामि सार्थहीन इवाध्वगः ॥ ०३४ ॥

कथं भ्रातॄन्हताञ्श्रुत्वा भर्तारं च स्वसा मम ।
रोरूयमाणा दुःखार्ता दुःशला सा भविष्यति ॥ ०३५ ॥

स्नुषाभिः प्रस्नुषाभिश्च वृद्धो राजा पिता मम ।
गान्धारीसहितः क्रोशन्कां गतिं प्रतिपत्स्यते ॥ ०३६ ॥

नूनं लक्ष्मणमातापि हतपुत्रा हतेश्वरा ।
विनाशं यास्यति क्षिप्रं कल्याणी पृथुलोचना ॥ ०३७ ॥

यदि जानाति चार्वाकः परिव्राड्वाग्विशारदः ।
करिष्यति महाभागो ध्रुवं सोऽपचितिं मम ॥ ०३८ ॥

समन्तपञ्चके पुण्ये त्रिषु लोकेषु विश्रुते ।
अहं निधनमासाद्य लोकान्प्राप्स्यामि शाश्वतान् ॥ ०३९ ॥

ततो जनसहस्राणि बाष्पपूर्णानि मारिष ।
प्रलापं नृपतेः श्रुत्वा विद्रवन्ति दिशो दश ॥ ०४० ॥

ससागरवना घोरा पृथिवी सचराचरा ।
चचालाथ सनिर्ह्रादा दिशश्चैवाविलाभवन् ॥ ०४१ ॥

ते द्रोणपुत्रमासाद्य यथावृत्तं न्यवेदयन् ।
व्यवहारं गदायुद्धे पार्थिवस्य च घातनम् ॥ ०४२ ॥

तदाख्याय ततः सर्वे द्रोणपुत्रस्य भारत ।
ध्यात्वा च सुचिरं कालं जग्मुरार्ता यथागतम् ॥ ०४३ ॥

# द्रौणिसेनापत्याभिषेकः

## अध्याय ०६४

सञ्जय उवाच ॥

वातिकानां सकाशात्तु श्रुत्वा दुर्योधनं हतम् ।
हतशिष्टास्ततो राजन्कौरवाणां महारथाः ॥ ००१ ॥

विनिर्भिन्नाः शितैर्बाणैर्गदातोमरशक्तिभिः ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ ००२ ॥

त्वरिता जवनैरश्वैरायोधनमुपागमन् ॥ ००२ ॥

तत्रापश्यन्महात्मानं धार्तराष्ट्रं निपातितम् ।
प्रभग्नं वायुवेगेन महाशालं यथा वने ॥ ००३ ॥

भूमौ विवेष्टमानं तं रुधिरेण समुक्षितम् ।
महागजमिवारण्ये व्याधेन विनिपातितम् ॥ ००४ ॥

विवर्तमानं बहुशो रुधिरौघपरिप्लुतम् ।
यदृच्छया निपतितं चक्रमादित्यगोचरम् ॥ ००५ ॥

महावातसमुत्थेन संशुष्कमिव सागरम् ।
पूर्णचन्द्रमिव व्योम्नि तुषारावृतमण्डलम् ॥ ००६ ॥

रेणुध्वस्तं दीर्घभुजं मातङ्गसमविक्रमम् ।
वृतं भूतगणैर्घोरैः क्रव्यादैश्च समन्ततः ॥ ००७ ॥

यथा धनं लिप्समानैर्भृत्यैर्नृपतिसत्तमम्  ॥ ००७  ॥

भ्रुकुटीकृतवक्त्रान्तं क्रोधादुद्वृत्तचक्षुषम् ।
सामर्षं तं नरव्याघ्रं व्याघ्रं निपतितं यथा  ॥ ००८  ॥

ते तु दृष्ट्वा महेष्वासा भूतले पतितं नृपम् ।
मोहमभ्यागमन्सर्वे कृपप्रभृतयो रथाः  ॥ ००९  ॥

अवतीर्य रथेभ्यस्तु प्राद्रवन्राजसंनिधौ ।
दुर्योधनं च संप्रेक्ष्य सर्वे भूमावुपाविशन्  ॥ ०१०  ॥

ततो द्रौणिर्महाराज बाष्पपूर्णेक्षणः श्वसन् ।
उवाच भरतश्रेष्ठं सर्वलोकेश्वरेश्वरम्  ॥ ०११  ॥

न नूनं विद्यतेऽसह्यं मानुष्ये किञ्चिदेव हि ।
यत्र त्वं पुरुषव्याघ्र शेषे पांसुषु रूषितः  ॥ ०१२  ॥

भूत्वा हि नृपतिः पूर्वं समाज्ञाप्य च मेदिनीम् ।
कथमेकोऽद्य राजेन्द्र तिष्ठसे निर्जने वने  ॥ ०१३  ॥

दुःशासनं न पश्यामि नापि कर्णं महारथम् ।
नापि तान्सुहृदः सर्वान्किमिदं भरतर्षभ  ॥ ०१४  ॥

दुःखं नूनं कृतान्तस्य गतिं ज्ञातुं कथञ्चन ।
लोकानां च भवान्यत्र शेते पांसुषु रूषितः  ॥ ०१५  ॥

एष मूर्धावसिक्तानामग्रे गत्वा परंतपः ।
सतृणं ग्रसते पांसुं पश्य कालस्य पर्ययम्  ॥ ०१६  ॥

क्व ते तदमलं छत्रं व्यजनं क्व च पार्थिव ।

सा च ते महती सेना क्व गता पार्थिवोत्तम ॥ ०१७ ॥

दुर्विज्ञेया गतिर्नूनं कार्याणां कारणान्तरे ।
यद्वै लोकगुरुर्भूत्वा भवानेतां दशां गतः ॥ ०१८ ॥

अध्रुवा सर्वमर्त्येषु ध्रुवं श्रीरुपलक्ष्यते ।
भवतो व्यसनं दृष्ट्वा शक्रविस्पर्धिनो भृशम् ॥ ०१९ ॥

तस्य तद्वचनं श्रुत्वा दुःखितस्य विशेषतः ।
उवाच राजन्पुत्रस्ते प्राप्तकालमिदं वचः ॥ ०२० ॥

विमृज्य नेत्रे पाणिभ्यां शोकजं बाष्पमुत्सृजन् ।
कृपादीन्स तदा वीरान्सर्वानेव नराधिपः ॥ ०२१ ॥

ईदृशो मर्त्यधर्मोऽयं धात्रा निर्दिष्ट उच्यते ।
विनाशः सर्वभूतानां कालपर्यायकारितः ॥ ०२२ ॥

सोऽयं मां समनुप्राप्तः प्रत्यक्षं भवतां हि यः ।
पृथिवीं पालयित्वाहमेतां निष्ठामुपागतः ॥ ०२३ ॥

दिष्ट्या नाहं परावृत्तो युद्धे कस्याञ्चिदापदि ।
दिष्ट्याहं निहतः पापैश्छलेनैव विशेषतः ॥ ०२४ ॥

उत्साहश्च कृतो नित्यं मया दिष्ट्या युयुत्सता ।
दिष्ट्या चास्मि हतो युद्धे निहतज्ञातिबान्धवः ॥ ०२५ ॥

दिष्ट्या च वोऽहं पश्यामि मुक्तानस्माज्जनक्षयात् ।
स्वस्तियुक्तांश्च कल्यांश्च तन्मे प्रियमनुत्तमम् ॥ ०२६ ॥

मा भवन्तोऽनुतप्यन्तां सौहृदान्निधनेन मे ।
यदि वेदाः प्रमाणं वो जिता लोका मयाक्षयाः ॥ ०२७ ॥

मन्यमानः प्रभावं च कृष्णस्यामिततेजसः ।
तेन न च्यावितश्चाहं क्षत्रधर्मात्स्वनुष्ठितात्  ॥ ०२८  ॥

स मया समनुप्राप्तो नास्मि शोच्यः कथञ्चन ।
कृतं भवद्भिः सदृशमनुरूपमिवात्मनः  ॥ ०२९  ॥

यतितं विजये नित्यं दैवं तु दुरतिक्रमम्  ॥ ०२९  ॥

एतावदुक्त्वा वचनं बाष्पव्याकुललोचनः ।
तूष्णीं बभूव राजेन्द्र रुजासौ विह्वलो भृशम्  ॥ ०३०  ॥

तथा तु दृष्ट्वा राजानं बाष्पशोकसमन्वितम् ।
द्रौणिः क्रोधेन जज्वाल यथा वह्निर्जगत्क्षये  ॥ ०३१  ॥

स तु क्रोधसमाविष्टः पाणौ पाणिं निपीड्य च ।
बाष्पविह्वलया वाचा राजानमिदमब्रवीत्  ॥ ०३२  ॥

पिता मे निहतः क्षुद्रैः सुनृशंसेन कर्मणा ।
न तथा तेन तप्यामि यथा राजंस्त्वयाद्य वै  ॥ ०३३  ॥

शृणु चेदं वचो मह्यं सत्येन वदतः प्रभो ।
इष्टापूर्तेन दानेन धर्मेण सुकृतेन च  ॥ ०३४  ॥

अद्याहं सर्वपाञ्चालान्वासुदेवस्य पश्यतः ।
सर्वोपायैर्हि नेष्यामि प्रेतराजनिवेशनम्  ॥ ०३५  ॥

अनुज्ञां तु महाराज भवान्मे दातुमर्हति  ॥ ०३५  ॥

इति श्रुत्वा तु वचनं द्रोणपुत्रस्य कौरवः ।
मनसः प्रीतिजननं कृपं वचनमब्रवीत्  ॥ ०३६  ॥

आचार्य शीघ्रं कलशं जलपूर्णं समानय ॥ ०३६ ॥

स तद्वचनमाज्ञाय राज्ञो ब्राह्मणसत्तमः ।
कलशं पूर्णमादाय राज्ञोऽन्तिकमुपागमत् ॥ ०३७ ॥

तमब्रवीन्महाराज पुत्रस्तव विशां पते ।
ममाज्ञया द्विजश्रेष्ठ द्रोणपुत्रोऽभिषिच्यताम् ॥ ०३८ ॥

सेनापत्येन भद्रं ते मम चेदिच्छसि प्रियम् ॥ ०३८ ॥

राज्ञो नियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः ।
वर्तता क्षत्रधर्मेण ह्येवं धर्मविदो विदुः ॥ ०३९ ॥

राज्ञस्तु वचनं श्रुत्वा कृपः शारद्वतस्ततः ।
द्रौणिं राज्ञो नियोगेन सेनापत्येऽभ्यषेचयत् ॥ ०४० ॥

सोऽभिषिक्तो महाराज परिष्वज्य नृपोत्तमम् ।
प्रययौ सिंहनादेन दिशः सर्वा विनादयन् ॥ ०४१ ॥

दुर्योधनोऽपि राजेन्द्र शोणितौघपरिप्लुतः ।
तां निशां प्रतिपेदेऽथ सर्वभूतभयावहाम् ॥ ०४२ ॥

अपक्रम्य तु ते तूर्णं तस्मादायोधनान्नृप ।
शोकसंविग्नमनसश्चिन्ताध्यानपराभवन् ॥ ०४३ ॥

